REPRODUCTION OF EARLIE EDITION OF THE SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः

# SABDARTHACİNTAMANIH

चतुर्थ खण्ड

भाग - ब

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur - 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**
First Published 1860
Reprint - 1992

*Printed at*
**Efficient Offset Printers**
215, Shahzada Bagh Indl Complex,
Phase-II, Phone 533736, 533762
Delhi 110035

नाबुद्धिरूपिया ।' शैवशास्त्रे तथाप्रोक्तं नग्ननीलपटादिकम् । आपस्त्य श्रुतिवाक्यानादृश्य मन्त्रं लीकगर्हितम ॥ कर्मस्वरूपस्य स्यमव प्रतिपद्यते । सर्वकर्मपरिभ्रष्टं कल्मषमुतदुच्यते ॥ गौतमप्रोक्तशास्त्रार्थनिरता . सर्वएवहि । शार्गालीं योनिमापन्ना . सन्दिग्धा ' सर्वकर्मस्विति ॥ शास्त्रविरोधोऽस्य । यथि शास् । अनेकसंशयोच्छेदिप रोक्षार्थस्य दर्शकम् । सर्वस्यलोचनं शास्त्रं यस्यनास्त्यन्धएवस ॥ स्मृति ॥ शासनम् • शिष्यतेऽनेनवा । शासुअनुशिष्टौ । सर्वधातुभ्यष्ट्रन् ॥ विद्यायशास्त्रजालानियत्सत्यतदुपास्यताम् ॥

शास्त्रकृत् । पुं • ऋषौ । मुनौ ॥ त्रि • शास्त्रकारे ॥

शास्त्रगण्ड ' । पुं • प्रघटाविदि । छात्रगण्डे ॥ पदाद्यविदि । श्लोकाद्यवेत्तरि ॥

शास्त्रचक्षु । न • व्याकरणे ॥

शास्त्रचारण : । पुं • शास्त्रदर्शिनि ॥

शास्त्रज्ञ ' । त्रि • शास्त्रविदि । आगमज्ञे । शास्त्रयोग्ये ॥ यथा । अनियुक्तोनियुक्तोवाशास्त्रज्ञोवक्तुमर्हति । दैवीवाच सवदतिय शास्त्रमुप जीवतीति ॥ शास्त्रजानातिनारद । स्पा• । क ' ॥

शास्त्रतत्त्वज्ञ । परमार्थविदि ॥ गणके ॥ शास्त्रतत्त्वजानाति । स्था• । क• ॥

शास्त्रदर्शी । त्रि• शास्त्रज्ञे ॥

शास्त्रदृष्टि । स्त्री• विवेकनयनम् प्रज्ञायाम् ॥

शास्त्रयोनि ' । पु • वेदप्रमाणके । परमात्मनि ॥ शास्त्रयोनि कारणप्रमाणमस्य । यतोऽश्रुमानिभूतो मील्यादिशास्त्रादेवप्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते ॥ वेदात्मकानिश्वासे ॥

शास्त्रयोनित्वम् । न• शास्त्रस्यवेदस्यापिकारणत्वे ॥ शास्त्रयोनि कारणंप्रमाण यस्य • तस्यभावे ।

शास्त्रवित् •द्• । त्रि• नन्तर्यामी । शास्त्रज्ञे ॥ शास्त्रवेत्ति । विद• । सत्सूद्विषेत्यादिनाक्विप् ॥

शास्त्रविधि । पु • शास्त्रसम्बन्धिलिङादिशब्दे । कुर्यान्नकुर्यादित्येवं प्रवर्त्तनानिवर्त्तनात्मकार्त्तव्याकर्त्तव्यज्ञानहेतौ विधिविधाख्ये ॥ विधिनिषेधातिरिक्तमपिमन्त्रप्रतिपादकं शास्त्रमस्तीतिसूचयितु विधिशब्द ' ॥

शास्त्रशिल्पिन । पुं• भूमि कीरेषु । कश्मीरदेशे ॥

शाम्बिल । वि• विश्विते ॥ शाम्ब्रे सञ्ज्ञातमस्य । तारकादित्वादित

शिखिनोध्वज ॥

शिखी । पुं॰ अग्नौ वैश्वानरे ॥ चित्रकवृक्षे ॥ बलीवर्दे ॥ शरे ॥ केतुग्रहे ॥ द्रुमे ॥ मयूरे ॥ कुक्कुटे ॥ वृषे ॥ शिखा सन्त्यस्य । शिखास्यस्यवा । इनन्त्रोपतापेति॰ इ॰ नि ॰ औषधादिव्याहा ॥ अजमोदायां ॥ सितावरे ॥ मेथिकायाम् ॥ शूकशिम्ब्याम् ॥ त्रि॰ शिखायुक्ते ॥

शिखिनी । स्त्री॰ मयूर॰ शिखायाम् ॥

शिखिपुच्छम । न॰ मयूरपिच्छे ॥

शिखिप्रिय । पुं॰ लघुबदरे ॥

शिखिमण्डल । पुं॰ वरुणद्रुमे ॥

शिखिमूलम् । न॰ गृञ्जने ॥

शिखिमोदा । स्त्री॰ अजमोदायाम् ॥

शिखियूप । पुं॰ श्रीकारीमृगे ॥

शिखिवर्द्धक । पुं॰ कूष्माण्डे ॥

शिखिवाहन : । पुं॰ कार्त्तिकेये । महासेने ॥ शिखीमयूरोवाहनमस्य ॥

शिखिव्रतम् । न॰ व्रतविशेषे ॥

शिग्रु : । पुं॰ शाकमात्रे ॥ शोभाञ्जने । अस्यपर्यायायथा । शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचका । रक्तोसौमधुशिग्रु : स्यादिति ॥ अस्य गुणायथा । शिग्रुःकटुक : पाके तीक्ष्णोष्णोमधुरोलघु : । दीपनोरोचनोरूक्ष : क्षारस्तिक्तोविदाहकृत् ॥ संग्राही : शुक्रलोहृद्य : पित्तरक्तप्रकोपण : चक्षुष्य : कफवातघ्नोविद्रधिश्वयथुकृमीन । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत ॥ श्वेत प्रोक्तगुणोज्ञेयोविशेषाद्दाहकृद्भवेत् । प्लीहानविद्रधिघ्नश्चव्रणघ्न पित्तरक्तहृत् ॥ मधुशिग्रु प्रोक्तगुणोविशेषाद्दीपन सर । शिग्रुवल्कलपत्राणांस्वरसपरमार्त्तिहृत् ॥ अपिच । कोलिस्वराजकविमोवनितावतंसेशिग्रोरसुष्यकाथितोलिकिमूपयोग । एतस्य पल्लवरसात्समधो किमन्यद्दृष्ट्वा । शिमावहस्य महिलायगर्थ्ये ॥ इति ॥ शिनोति । शिञ् निशाने । अम्बुवादयश्चेतिनिपातित ॥ शोक्यदेवा । शौक्रसीपर्णे । वाहुलकाद्रुक्॰ इत्यो॰ गम ॥

शिग्रुकम् । न॰ वाह्लीकीपुप्रसिद्धेशाकविशेषे ॥

शिग्रुजम् । न॰ श्वेतमरिचे । शोभाञ्जनस्यबीजे ॥ अस्यगुणा । चक्षुष्यंशिग्रुजंशीततीक्ष्णोष्णविषनाशनम् । अवृष्यंकफवातघ्नं तन्नस्येनशिरोर्त्तिनुत् ॥ त्रि॰ शिग्रुभवे ॥ शिग्रोर्जायतेऽसौ । जनी॰ । ड ॥

शिग्रुपुष्पम् । न॰ शोभाञ्जनकुसुमे । तस्यगुणा । शिग्रो पुष्पन्तुकटु वातीक्ष्णोष्णस्नायुशोथनुत् । कृमिहृत्कफवातघ्न विद्रधिप्लीहगुल्म

ने । शिन॰ शिज्वा । शते सौ
वात॰ • क्रमितमिशतिसत्भामत
कुर्वेति• कूर्मसचकित॰ • सतद्धदा
देशोवा ॥

शितिकण्ठ । पु॰ शम्भौ । दूशे ।
शिवे । शिति काल कण्ठोऽस्य
॥ दात्यूहखगे ॥

शितिचर । पु॰ सुनिषणशाके ॥

शितिचार । पु॰ शाकविशेषे ॥

शितिच्छद ।) पु॰ हंसे ॥
शितिपक्ष )

शितिसार । पु॰ तिन्दुके । स्फूर्जे
के । तेंदू • कू॰ प्र॰ हस्ते ॥ शि
ति काल सारोमज्जायस्य ॥

शितिसारक । पु॰ शितिसारे ।

शिथिलम् । त्रि॰ श्लथे । ढीला कू॰
भा॰ । न॰ मन्दकर्मणि ॥ श्लथ
बन्धे ॥ सयोगविशेषे ॥ अथमेर
चमे । श्लिषरश्रिरशिथिलेतिकि
रच॰ • उपधायाह्रस्वम • रेफलोप
प्रत्ययरेफस्यलत्वञ्चनिपात्यते ॥

शिथिलित । त्रि॰ विश्लथिते ॥

शिनि । पु॰ सात्यके । पितामहे॰
क्षत्रियविशेषे ॥

शिनिनप्ता । पु॰ सात्यकौ । शिने
र्नप्ता ॥

शिपिः । पु॰ रश्मौ ॥ पशौ ॥ पा॰ ॥
बाहुलकात् कि ॥

शिपिविष्ट । पु॰ खलतौ । खल्वा
टे । दुश्चर्मणि । पिनाकिनि । शिवे ॥
विष्णौ । यथा । शैलाच्छयनयोगा
च्छीतशारिप्रपद्यते । ततपानाद्र
क्तमाक्ष वशिपयोरक्षयोमता ।
तेष्वप्रवेशाद्विश्वेश शिपिविष्टस्तुहो
च्यते ॥ शिपिषु॰ रश्मिषु पशुषु वा
विष्ट प्रतिष्ठितोयस्यरूपेणेतितथा ॥

शिप्र । पु॰ कालिकापुराणप्रसिद्धे॰
सरोवरविशेषे ॥

शिप्रा । स्त्री॰ अवन्तिदेशप्रसिद्धपुण्य
सरिद्विशेषे ॥

शिफा । स्त्री॰ वटादिद्रुमाणाजटायाम्
। मूले ॥ सरिति ॥ मांसकायाम् ॥
मातरि । शतपुष्पायाम ॥ हरिद्रा
याम् ॥ शेते । बाहुलकात्॰ शी
ङ फक् ह्रस्वश्च ॥

शिफाक । पु॰ पद्ममूले ॥

शिफाकन्द । पु॰ करहाटे । पद्म
मूले । शिफामूलतरुप्ररोह तस्य
इव कन्दोमूलम ॥

शिफाधर । पु॰ शाखायाम् ॥
शिफाधरा । स्त्री॰

शिफारुह । पु॰ वटवृक्षे ॥

शिम्बी । स्त्री॰ क्षुपविशेषे । मति
दायाम् । ह्रस्वतृपल्याम् । वात
घ्नाम ॥ गुच्छपुष्पायाम ॥

शिम्ब । पु॰ रक्तचक्रमर्दके ॥

शिम्बा । स्त्री॰ सम्याम् । बीजगुप्
त्याम । सेमफली॰ कू॰ भा॰ ॥

शिलात्मज । पु० लौहे ॥
शिलात्मिका । स्त्री० मूषायां ।
शिलाद्रु, पु० शलेये ॥ शिला जतुनि ॥
शिलाधातु । पु० सितोपले । ख ट्याम् सेलखड़ी० हि० भा० ॥ स्वर्णगैरिके । सोनागेरू० हि० भा० प्र० ॥
शिलापट्ट । पु० पेषणार्थशिला याम् । सिलबट्टा० भा० ॥
शिलापुत्र । पु० घर्षणाशि । सिलब ट्टा० लोढ़ा० हि० भा० प्र० ॥
शिलापुष्पम् । न० शैलेये । अश्मपु ष्पे । शिलाजतुनि ॥
शिलाभस्म । न० शिलापुष्पे ॥
शिलाभेद । पु० पाषाणभेदनिश्च ये ॥ पाषाणभेदकार्य ॥
शिलारम्भा । स्त्री० काष्ठकदल्याम् ॥
शिलावल्का । स्त्री० औषधद्रव्यविशेषे । वल्कलायाम् । शैलगर्भायाम । शिलावाक० हि० भा० प्र० ॥
शिलाव्याधि । पु० शिलाजतुनि ॥
शिलासनम् । न० शैलेये । पाषाण रचितासने ।
शिलासन्धि । पु० पर्वतगह्वरे । गुहायाम् ।
शिलासारम् । न० लोहे ।
शिलाह्वम् । न० शिलाजतुनि ।
शिलि, पु० भूर्जपत्रवृक्षे । स्त्री० द्वाराधःस्थितकाष्ठे ॥
शिलिन्द । पु० मत्स्यविशेषे ॥ य था 'शिलिन्दः श्लेष्मलो बल्यो वि पाके मधुरो गुरुः । आमवातकरो हृद्यो वातपित्तहरो मतः ॥' सु० रा० भ ॥
शिली । स्त्री० गण्डूपद्याम । स श्रमीर्षे । द्वारधःस्थितदारुणि ॥ शिलति । शिल० । इगुपधे ति कः । जातेरस्त्रीविषयात् इति० ङीष् ।
शिलीन्ध्र । पु० मत्स्यविशेषे । चित्रफले ॥ यथा । शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ॥ तरुप्रभेदे । न० कवके । छत्राके । कदलीपुष्पे ॥ विपु टाख्ये ॥
शिलीन्ध्रकम् । न० छत्रके । गो मयच्छत्रिकायाम् ॥
शिलीन्ध्री । स्त्री० विहगीविशेषे ॥ गण्डूपद्याम् ॥ मृदि ॥
शिलीपद । पु० श्लीपदाभिधपाद रोगे । पाथरबलमीके । गोद० हि० गौ० भा० प्र । पीलुपांव० हि० भा० ॥ अस्य विप्रकृष्टनिदानं० सा मान्यलक्षणमाह । पुराणोदकभू यिष्ठाः सर्वर्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेष त ॥ य सज्वरो वङ्क्षणजो भृ

म् । चतुर्दश्यामेवपारणम् । यथो
क्तम् । ब्रह्माण्डोदरमध्यस्थानितो
र्थानिसन्तिवै । पूजितानिभवन्ती
हभूतायांपारणेकृतेकृति ॥
शिवलिङ्गम् । न० महादेवस्यशिश्ने ॥
शिवलोकः । पु० कैलासे ॥
शिववल्लभः । त्रि० शिवप्रिये ॥ शि
वस्यवल्लभः । शिवोवल्लभोऽस्यवा ॥
शिववल्लभा । स्त्री० शतपत्र्याम् ॥
शिववल्लिका । स्त्री० लिङ्गिन्याम् ॥
शिववल्ली स्त्री० श्रीवल्ल्याम् ॥
लिङ्गिन्याम्
शिववाहन । पुं० वृषभे ॥
शिवबीजम् । न० पारदे ॥
शिवशेखर । पुं० वकवृक्षे ॥ ध
त्तूरे ॥ शिवमस्तके ॥
शिवसायुज्यम् । न० शिवेनसहयोगे ॥
शिवसुन्दरी । स्त्री० भवगेहिन्याम्
। गौर्याम् ॥
शिवा । स्त्री० गौर्याम् । भवान्याम्
। यथा । शिवामुक्तिः समाख्या
तायोगिनांमोक्षगामिनी । शिवा
यराधयेद्देवींशिवालोकेततः स्मृ
तेतिदेवीपुराणम् ॥ अपिच । शि
वाकल्याणरूपाचशिवदाचशिवप्रि
या । शिवेद्रातरिवाशब्दः शिवातेन
प्रकीर्त्तितेतिब्र० वै० पुराणम् ॥ पु
नश्च । शिवकल्याणवचनश्चैवोत्कृ
ष्टवाचकः । समूहवाचकश्चैवा

कारोदातृवाचकः ॥ श्रेयः सद्
चोत्कृष्टाचोशिवाते प्रकीर्त्तिता
। शिवराशिमूर्त्तिमतीशिवातेन
प्रकीर्त्तितेतिब्र० वै० पु० ॥ आ
त्मानुभूतिनिष्णातोदेवभावविव-
र्ज्जिता । तेपिप्रेम्णाभजन्त्ये
नामित्थंसर्वेसमाशिवेत्युमासहि
ता ॥ मुक्तौ । फेरौ । सप्तफला
याम् । झाटामलौषधौ ॥ अभ
यायाम् ॥ आमलक्याम् ॥ श
म्याम् ॥ हरिद्रायाम् ॥ दूर्वाया
म् । गोरोचनायाम् ॥ सुविशक्ति
विशेषितारायाम ॥ शिवमस्यस्याः
शिवोऽस्तिभर्त्तृत्वेनयस्याइतिवा ।
अर्शआद्यच् ॥ शिव । शिवाख्या
देवताऽस्तिपक्षे अर्शआद्यच् ।
शकुनाविद्वत्वात् ॥ शिवंकरोति
। तत्करोतीतिणिच् । पचाद्यच् ॥
शिवयतिवा ॥
शिवाक्षम् । न० रुद्राक्षे ॥
शिवाटिका । स्त्री० वनपत्र्याम् ॥
शिवात्मकम् । न० सैन्धवे ॥ त्रि०
शिवमये ॥
शिवानी । स्त्री० जयन्त्योषधौ ॥ दु
र्गायाम् ।
शिवापीड । पुं० चन्द्रमसि ॥ च
न्द्रके ॥ शिवस्यआपीडः ॥
शिवाप्रिय । पुं० छागे ॥
शिवाफला । स्त्री० शमीवृक्षे ॥

शिवाराति । पु॰ सारमेये ॥

शिवारुतम् । न॰ शृगालध्वानिनादे ॥

शिवालय । पु॰ हरमन्दिरे ॥ रक्तातुलस्याम ॥ श्मशाने ॥

शिवालु । पु॰ शृगाले ॥

शिवाह्वति । स्त्री॰ जयन्तीवृक्षे ॥

शिवाह्लाद । पु॰ बकवृक्षे ॥ शिवस्यानन्दे ॥

शिवाह्वय । पु॰ पारदे त्रि॰ शिवनामके ॥

शिशाङ्का । स्त्री॰ रुद्रजटायाम् ॥

शिवि । पु॰ उशीनरदेशाधिपतौ भूपतिवरे ॥ औशीनरे ॥ उदारो यं महीपतिर्येन स्वमांसच्छेनायदत्वा॰ शरणागत, कपोतोरक्षित ॥ भूर्जपत्रवृक्षे ॥ व्याडे ॥ हिंस्रपशौ ॥

शिविका । स्त्री॰ याप्ययाने ॥ झपान॰ डोला॰ चौपाला॰ पालकी॰ इत्यादिभाषाप्रसिद्धे बहुविधे । शिवीरथे ॥ शिवैव । शिवंकरोतिशिवा । तत्करोतीत्यन्तात्॰ ण्वुल् ॥

शिविरम् । न॰ युद्धवेश्मनि ॥ निवेशे । आगन्तुकसैन्यवसतौ ॥ सेनायावासस्थाने ॥ राजनिवेशे ॥ अथ शिविरलक्षणम् । श्रीभगवानुवाच । शिविरपरिखायुक्तमुच्चप्राकारवेष्टितम् । युक्तद्वारचतुरस्रसिंहद्वारपुरस्कृतम् ॥ युक्तं चित्रैर्विचित्रैश्च ज्वितैस्स्वकपाटकैः । निषिद्धद्वार

हितप्रसिद्धं च पुरस्कृतम ॥ सुखवाणचन्द्रवेध प्राङ्गणस्तथैव चेति । विशेषो ब्रह्मवैवर्त्ते द्रष्टव्य कृष्णखण्डके १०२ अध्याये ॥ शव मृत्वच । शवगतौ । बाहुलकात्किरच॰ अतद्धृलश्च ॥ यद्वा । शेरते राजबलान्यस्मिन । शीङ् स्वप्ने । बाहुलकात्किरच् । शीङोवुगद्यस्तस्य ॥

शिवी । स्त्री॰ गौर्याम् ॥ पु॰ योगिभेदे ॥

शिवीरथ । पु॰ शिविकायाम् ॥ डु॰ डाली ॥

शिवेष्ट । पु॰ बकवृक्षे ॥ त्रि॰ शिवप्रिये ॥

शिवेष्टा । स्त्री॰ दूर्वायाम् ॥

शिशयिषु । त्रि॰ शयितुमिच्छौ ॥ शीङ्सन्नन्तादुप्रत्यय ॥

शिशिर । पु॰ हिमे । तुषारे ॥ द्वीपान्तरप्रसिद्धगिरिविशेषे ॥ पु॰ न॰ ऋतुविशेषे । तपस्तपस्ययोः । माघफाल्गुनयो । कम्पने । शीते । हिमकूटे ॥ अस्यगुणायथा । शिशिर शीतलोऽतीवरूक्षोवाताग्निवर्द्धन । अपिच । शिशिरशीतलश्च शीतवातप्रकोपणमिति ॥ अतकालस्यफलम् । मिष्टान्नभोगीमधुरप्रवादीकलत्रपुत्रादियुत, च धार्त्त । क्रोधीसुधीश्चाकलेवरस्थ प्रसू

रथ विष्णुपुराणे २ अंशे १२ अ
ध्यायेयथा । शिशुमारस्तुय प्रोक्त
सध्रुवोयत्रतिष्ठति । सन्निवेशस्तत
स्यापिश्रूयतांमुनिसत्तम ॥ यदह्नाकु
रुतेपापंदृष्ट्वातन्निशिमुच्यते । ताव
त्यश्चैवतारास्ता शिशुमाराश्रिता
दिवि ॥ तावन्त्येवतुवर्षाणिजीवत्य
भ्यधिकानितु । उत्तानपादस्तस्याथ
विज्ञेयोह्युत्तरोहनु ॥ यज्ञोऽधर
श्वविज्ञेयोधर्मोमूर्द्धानमाश्रित ‘ ।
हृदिनारायणस्यास्ते अश्विनौपूर्वपा
दयो ॥ वरुणश्चार्यमाचैवपश्चिमेत
स्यसक्थिनी । शिश्नेसंवत्सरस्तस्यमि
त्रोऽपान समाश्रित ॥ पुच्छेऽग्नि
श्चमहेन्द्रश्चकश्यपोथततोध्रुव । ता
रकाशिशुमारस्यनास्तमेतिचतुष्टय
म ॥ इत्येषसन्निवेशोयंपृथिव्यांज्यो
तिषांतथा । द्वीपानामुदधीनांच्पर
वंतानाञ्चकीर्त्तित ॥ वर्षाणाञ्च
नदीनाञ्चयेचतेषुवसन्तिवै । तेषां
स्वरूपमाख्यातसंक्षेप श्रूयतां
पुन ॥ यदम्बुवैष्णव : कायस्ततो
विप्रवसुन्धरा । पद्माकारासमुद्भूता
पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि
विष्णुर्भुवनानिविष्णुर्वनानिविष्णु
र्गिरयोदिशश्च । नद्य , समुद्राश्च
सएवसर्वयदस्तियन्नास्तिचविप्रवर्य
॥ ज्ञानस्वरूपोभगवान्यतोऽसावशे
षमूर्त्तिर्नतुवस्तुभूत ‘ । ततोहिशै

लाब्धिधरादिभेदान्जानीहिविज्ञा
नविजृम्भितानि ॥ यदाहिशुद्ध नि
जरूपसर्वंकर्मक्षयेज्ञानमपास्तदो
षम् । तदाहिसङ्कल्पतरो फला
निभवन्तिनोवस्तुषुवस्तुभेदा: ॥ मही
घटत्वं घटत कपालिकाकपालिका
चूर्णरजस्ततोण्यणु जनै स्वक
र्मस्तिमितात्मनिश्चयैरालक्ष्यते
ब्रूहिकिमत्रवस्तु । इति ॥ अपिच
। तारामयभगवत शिशुमाराकृ
तिप्रभो । दिविरूपंहरेर्यत्तुतस्य
पुच्छेस्थितोध्रुव । ॥ सैषभ्रमन्भ्रा
मयतिचन्द्रसूर्यादिकान्ग्रहान् ।
भ्रमन्तमनुतयान्तिनक्षत्राणिचचक्र
वत ॥ सूर्याचन्द्रमसौतारानक्षत्रा
णिग्रहै । सह । वातानीकमयैर्बन्धै
र्ध्रुवेबद्धानितानिवै ॥ शिशुमारा
कृतिप्रोक्त यद्रूपंज्योतिषांदिवि । ना
रायणोयनंधाम्नातस्याधार , स्वयंहृ
दीति ॥

शिशुमारक ‘ । पुं॰ वनच्छागे । त्रि॰
बालकवेढरि ॥

शिशुवाहक । पु॰ एडकी । वनच्छागे ।

शिश्न । पु॰ मेढ्रे । मेहने । शिश्नसि
॥ अश्नाति । अश॰ । शिनोतिवा ।
शिञ्निशाने । बाहुलकान्नक ।
पृषोदरादि ॥

शिश्नक ‘ । पु॰ मेढ्रे ॥ स्वार्थेकन् ॥

शिश्निदान । त्रि॰ कल्पषकर्म्मणि ।

तासञ्जले । चम्बुकरयोँ ॥ शीकते । शीकुसेचने । तालव्यादि । स्फायिरञ्जितिचादुणकादरन् ॥ न० सरलद्रवे ॥

शीघ्रम् । न० उशीरे । नलदे । चक्राङ्गे ॥ त्वरिते । लघुनि । क्षिप्रे चरे । द्रुते । सत्वरे । चपले । तूर्णे । चविलम्बिते । चाशुनि ॥ नु पर्यायैर्यङ्क्रियाविशेषणत्वद्रव्ये न सम्मान । क्लीबे । यथा० शीघ्रं कुरोति । सत्वगामीतुर्णयां वियच्छन्न । यथा । कृष्णीशीघ्राजरा० शीघ्री कृत्वा 'शीघ्रश्चयस्तयेति ॥ शिङ्कृति, ० व्याप्नोति । शिघिचाघ्राय । शीघ्रादयश्चेतिरगन्तो निपातित . ॥ त्रि० द्रुतगती ॥

शीघ्रग । त्रि० सभसूनि । वायौ ॥ त्रि० त्वरितगामिनि ॥

शीघ्रगामी । त्रि० आशुगमनशीले । द्रुतगती ॥

शीघ्रचेतन । पुं० शुनि । त्रि० त्वरितचेतनायुक्ते ॥

शीघ्रजन्मा । पु० पूतिकरञ्ज ॥

शीघ्रपुष्प । पु० वकवृक्षे । चगस्त्यागे ॥

शीघ्रवेधी । पुं० लघुहस्ते । शिक्षितास्त्रे । आशुशरादिनालक्ष्यवेधकर्त्तरि ॥

शीघ्रा । स्त्री० उदुम्बरपर्णाम् । दन्त्याम् ॥

शीत । पुं० वानीरे । वञ्जुले । वेतसवृक्षे । शीतमस्यास्ति । अर्शआद्यच् । शीतिवीर्यत्वेनपाहाङ्गमनाद्य । बहाले । वहवारके ॥ निम्बे ॥ पर्पटे । कर्पूरे ॥ अशनपर्णीम् ॥ नरकान्तरे । हिमर्त्तौ ॥ न० हिमगुणे । जले ॥ त्वचे । दारचीनी० इ० भा० ॥ शीततुषारवानीरबहुवारद्रुमेषुचेत्यजय ॥ त्रि० शीतले । अलसेशीतस्पर्शे । शीतमित्यतेऽस्य । आर्शआद्यच् ॥ विशिष्योभूत शीतशब्दोनपुंसकम् । यस्मिन्द्रव्ये शीत स्पर्शं तु स्यात्तौविशिष्योभूतम्नुशीतशब्दोविशेष्यनिघ्न ॥ श्यायतक्तिशील । श्यैङ गतौ । भावेक्त । द्रवमूर्त्तिस्पर्शयो 'श्यद्दूतिसम्प्रसारणम् । हलकृतिदीर्घं । श्येःस्पर्शकृतिपर्युदासान्नतिष्ठानत्वम् ॥

शीतक । पु० शीतकाले ॥ स्फाताशुणशीते० वु० यावादिषुपाठात्० स्वार्थेकन् ॥ अशनपर्णाम् ॥ त्रि० सुखिते । सूक्ष्मे ॥ अलसे । दीर्घसूत्रिणि । मन्दे ॥ शीतकारोति । शीतेष्वाभ्याकारिणीतिकन् ॥ सुखिके ॥

शीतकर । पु० चन्द्रे ॥ त्रि० शीतलपाणियुक्ते ॥ शीतकारिणि ॥

शीतकषाय । पु॰ हिमकषाये यथा । क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् । निशोषितं तत् स्याद्धिमः शीतकषायकः इति वैद्यकम् ॥

शीतकाल । पु॰ हिमर्त्तौ । मार्गशीर्षपौषयोः । हेमन्ते । कूपोदकं वटच्छाया श्यामा स्त्री इष्टकागृहम् । शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥ हेमन्तशिशिरर्त्तौ ॥

शीतकिरण । पुं॰ हिमांशौ ॥ चन्द्रमसि ॥ यथा । कान्ते कौमुदि शीतकिरणो जात ' कुतो वारिधौ कस्ते सुन्दरि सोदरः . करमहो दृष्टस्त्वदीये सखे । धन्यास्त्वयुवती सती कुचवती भ्राता पि धन्यस्तव इत्थं श्रीपरिहासकेलिकलया सुग्धी हरिः पातु वः ॥

शीतकुम्भ । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । शिउलीछोप॰ इ॰ गौ॰ भा॰ प्र॰ । अस्याः पर्यायाः यथा । शीतली शीतकुम्भी च श्रुक्रपुष्पा जलोद्भवेति रत्नमाला ॥

शीतकृच्छ्र ' । पु॰ व्रतविशेषे । यथा । त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्ष्य . परं त्र्यहमिति यमस्मृतिः ॥

शीतसारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध । पु॰ श्वेतचन्दने ॥

शीतगु । पु॰ चन्द्रे ॥

शीतचम्पक . । पु॰ घातपर्णे । तर्पणे ॥ दिपे ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूर्यवल्ल्याम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गायाम् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाट्यालके ॥ गुञ्जायाम् ॥ काकोल्याम् ॥

शीतपुष्प ' । पुं॰ धर्मवृक्षे ॥ शिरीषे ॥ न॰ परिपेले ॥ शैलेये ॥

शीतपुष्पक : । पुं॰ अर्कवृक्षे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ । पु॰ कर्पूरे ॥ त्रि॰ शीतलप्रभायुक्ते ॥

शीतप्रिय । पुं॰ पर्पटे ॥ त्रि॰ शीतप्रीतियुक्ते ।

शीतफल ' । पुं॰ उदुम्बरे ॥ वकुलवारे । शैलौ ॥ पीलौ ॥ शीतानि फलानि यस्य ॥

शीतवला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु । पु॰ चन्द्रे ॥ शीताभानव किरणा यस्य . ॥

शीतभीत : । त्रि॰ शीतार्त्ते ॥

शीतभीरु ' । स्त्री॰ मल्लिकायाम् ॥ शीतात्॰ भीरु . ॥ त्रि॰ शीतभीते ॥

शीतभीरुक । त्रि॰ शीतार्त्त
शीतभीरुका । स्त्री॰ मल्लिकायाम् ॥
शीतमञ्जरी । स्त्री॰ शेफाल्याम् ॥
शीतमयूख । पु॰ चन्द्रे ॥ कर्पूरे ॥
शीतमरीचि । पु॰ इन्दौ । कर्पूरे ॥
शीतमूलकम् । न॰ उशीरे ॥
शीतरम्य । पु॰ प्रदीपे । त्रि॰ शीतेरमणीये ॥
शीतरश्मि । पुं॰ चन्द्रे ॥ कर्पूरे ॥
शीतरस । पु॰ शीधुप्रभेदे ॥
शीतल । पु॰ असनपर्ण्याम् ॥ अर्हद्विशेषे ॥ सुधांशौ । चन्द्रे ॥ व्रतविशेषे ॥ चम्पके ॥ बहुवारके ॥ धूनके । राले ॥ कर्पूरभेदे ॥ न॰ पुष्पकासीसे ॥ शैलजे ॥ मलयोद्भवे । चन्दने ॥ पद्मके ॥ मौक्तिके ॥ शैत्ये ॥ वीरणमूले ॥ त्रि॰ सुषीमे । शिशिरे ॥ शीतगुणोऽस्यास्ति । सिध्मादित्वाल्लच् ॥ शीतलातिवा । लाघादाने । आतङ्कतिवा ॥
शीतलक । पुं॰ मरुवके ॥ न॰ सितोत्पले ॥
शीतलच्छद । पु॰ चम्पके ॥ शीतलपर्णे ॥
शीतलजलम् । न॰ उत्पले ॥ शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहेषु विषे मद्यमदात्यये । भ्रमे श्रमे विदग्धे च तमके च मथे तथा । ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते कोष्ठे सद्यःशुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ । हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत् ॥
शीतलत्वम् । न॰ शीतलतायाम् ॥ जडत्वे ॥
शीतलत्वकम् । न॰ शीतलत्वे ॥
शीतलप्रद । पु॰ चन्दने । त्रि॰ हिमदातरि ॥
शीतलमम् । न॰ तीर्थविशेषे ।
शीतलवातक । पु॰ असनपर्ण्याम् ॥
शीतला । स्त्री॰ शीतलीवृक्षे ॥ यथा । शीतलाशीतलोशीतकश्चीपाण्डुरपुष्पकेति शब्दचन्द्रिका ॥ कुट्टिन्याम् । जलेरुहायाम् ॥ वालुकायाम् ॥ आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्र्याम् ॥ यथा । नमामि शीतलादेवीं रासभस्थां दिगम्बरीम् । मार्जनीकलशोपेतां सूर्पालङ्कृतमस्तकामिति स्कान्दपुराणम् ॥
शीतली । स्त्री॰ जलवृक्षविशेषे । शीतकुम्भ्याम् ॥ कालानुसारि

चायाम् ॥

शीतवल्क । पु॰ उदुम्बरे ॥

शीतवीर्य्यक । पु॰ प्लक्षवृक्षे ॥ त्रि॰ शीतलवीर्य्ययुक्ते ॥

शीतशिव । पु॰ सक्तुफलावृक्षे ॥ मधुरिकौषधौ ॥ न॰ सैन्धवलवणे । मणिमन्थे । शैलेयनामगन्धद्रव्ये ॥ शीतमस्यास्ति । अच् । शिवमस्यास्ति । अच् । शीतश्चासौ शिवश्च ॥

शीतशिवा । स्त्री॰ मिश्रेयायाम् । शमीवृक्षे ॥

शीतसह । पुं॰ पीलुवृक्षे । नीलसिन्धुवारके ॥

शीतसहा । स्त्री॰ नीलसिन्धुवारे । वासन्त्याम् ।

शीतहर । पु॰ कुचोषधि ॥ शीतं हरति । हृ अ॰ । हरतेरनुद्यमनेऽजित्यच् ॥ त्रि॰ शीतापहे ॥

शीता । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ यथा । शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्म्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः ॥ इति तालव्यादौ धरणिः ॥ दूर्वायाम् ॥ शिल्पिन्यामोषधौ ॥ अतिबलायाम् । कुटुम्बिन्याम् । पथ्यायाम् ॥ कौमुद्याम् । ज्योत्स्नायाम् । शीतस्य । गत्यर्थत्वादिभागोक्त । टाप् ॥

शीतांशु । पु॰ विधौ । चन्द्रे ॥ कर्पूरे ॥

शीतांशुतैलम् । न॰ कर्पूरतैले ॥

शीताङ्ग । त्रि॰ शीतकाङ्गे ॥

शीताङ्गी । स्त्री॰ हंसपद्याम् । गोधापद्याम् ॥ शीतलाङ्ग्याम् ॥

शीताद । पु॰ दन्तरोगविशेषे ॥ तल्लक्षणं यथा । शोणितं दन्तवेष्टेभ्योऽकस्मात्प्रवर्त्तते । दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् । शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ अस्यौषधं यथा । शीतादे हृतरक्ते तु तोयनागरसर्षपान् । निष्क्वाथ्य त्रिफलां चापि कुर्य्याद्गण्डूषधारणम् ॥ कासीसरोध्रकृष्णामनःशिलासप्रियङ्गुतेजोह्वा । एतच्चूर्णं मधुयुक् शीतादे प्रतिसारणम् ॥ तेजोह्वा॰ तेजवती । तैलघृतपाका तत्र शीतादिसमग्रस्यापि ॥ इ॰ भा॰ प्र॰ म ॥

शीतार्त्त । त्रि॰ शीतार्त्ते । शीतेन ऋतः ॥

शीतालु । त्रि॰ शीतार्त्ते । शीतं न सहते । शीतोष्णतृप्रेभ्यस्तदसहने इत्यालुच् ॥ शीतालुरात्मावर्षी ॥

शीतावरी । स्त्री॰ महासमङ्गायाम् ॥

शीताश्म । पु॰ चन्द्रकान्तमणौ ॥ शीतलपाषाणे ॥

शीतीभावः । पुं॰ मोक्षे ॥ इ॰ त्रि॰

शिव ॥

शीतोत्तमम् । न॰ जले ॥

शीत्कार : । पु॰ वरस्त्रीणां रतिकाल ध्वनौ ॥ यथा । शीत्कारैररतनारा च सुरतैवरशोषितास् ॥

शीत्कृतम् । न॰ शीत्कारे ॥ त्रु॰ धर्षि

शीधु : । पु॰ न॰ इक्षुरसे ॥ मद्ये ॥ पु॰ स्त्री॰ आसवे ॥ यथा । शीधुरिक्षुरसे पक्वैरपक्वैरासवो भवेत् । इतिमाधव ॥ अपिच । इक्षोः पक्वैरसैः सिद्धः शीधुः पक्वरसश्च सः । आमैस्तैरेव सिद्धस्तु शीतरस ऋतः ॥ शीधुः पक्वरसः श्रेष्ठः स्वराग्निवलवर्णकृत् । वातपित्तकरोसद्यः स्नेहनोरोचनो हरेत् ॥ विबन्धमेदःशोफार्शः शोषोदरकफामयान् । तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः ॥ शेरतेऽनेन । शीङ्धुक ॥ शीध्यतेऽनेनेतिशीधुरितिमल्लिनाथ ।

शीधुगन्ध : । पु॰ बकुलवृक्षे ॥ मद्यगन्धे ॥ यथा । बिम्बाधिष्ठसुशीधुगन्धिललनावक्त्रासवामोदितैर्भ्राम्यद्भिर्मम्मथोत्सवरसैकक्लिन्नचन्द्रा नपा सर्वाकृतिदीक्षिताकृतिचिरात्प्राप्ताम्बिकेवाकृतिब्रह्माकृतितापसाकृतिरिवाधूर्तैर्जगद्धयति ॥ कृत्य चिदाम्बिकाव्यवदर्म्ति ॥

शीधुगन्धि : । त्रि॰ सुरागन्धयुक्ते ॥

शीधुप : । त्रि॰ मद्यपे । सुरापे ॥ शीधुपिवति । पापापि । गापोष्टगिब्धब॰ पिबतो सुराशीध्वोरितिवा र्त्तिक इक् । स्त्रियांटिल्वान्ङीपि ॰ शीधुपी ॥

शीधुपुष्प : । पु॰ कदम्बेबकुले ॥

शीधुपुष्पी । स्त्री॰ धातक्याम् ॥

शीधुरस : । पु॰ आम्रे ॥

शीधुसंज्ञक : । पु॰ बकुले ॥

शीन । पु॰ अजगरे ॥ त्रि॰ मूर्खे ॥ द्रवस्याया काठिन्यप्राप्तिघृता दौ ॥ श्यैङ्गती । क्त । द्रवमूर्तिस्पर्शयोः श्यइतिसम्प्रसारणम् । श्योऽस्पर्शइतितत्त्वन ॥

शीभव । पु॰ शीकरे ॥

शीर । पु॰ अजगरसर्पे । सूर्ये ॥ शेते । स्फायितञ्चीतिशीङोरक् ॥

शीर्णम् । न॰ स्थौणेये ॥ त्रि॰ तनौ । कृशे ॥ विशीर्णे ॥ शीर्यते स्म । शृ॰ । क्त । ऋल्वादिभ्यइतिनत्वम् ॥

शीर्णपत्र । पु॰ पट्टिकालोध्रे ॥ कर्णिकारवृक्षे ॥ निम्बे ॥ न॰ विशीर्णपत्रे ॥

शीर्णपर्ण : । पु॰ निम्बवृक्षे । न॰ विशीर्णपत्रे ॥

शीर्णपाद : । पु॰ शनैश्चरे ॥ यमे ॥

शीनवा । शीलमसमाधौ॰ यथन्ता हो॰ घञ॰ शीवा । यथा । शीलोशुकासकवलअबालनद्गति॰ लक । अर्द्धर्चादि ॥

शीलनम् । न॰ पाठनिश्चये । गुणन्यास् । भविन्यास् ॥

शीलवान् । त्रि॰ सुखभाववति । सुशीले । सद्वृत्ते ॥

शीलहीन । त्रि॰ अमियतम्रुक्तदास्यादिकमे ॥

शीला । स्त्री॰ कौशिडन्यमुने पत्न्याम् ॥

शीलितम् । न॰ शौर्ये ॥ त्रि॰ अभ्यस्ते ॥ शील्यतेस्म । शील॰ । क्त ॥

शीली । त्रि॰ शीलवति ॥ शीलमस्यऽस्य । सुखादिभ्यस्तेतीनि ॥

शीवा । पु॰ अजगरे ॥ शेते । शीङ् स्वप्ने । शीङ्क्रुशिरुहिङ्क्षिक्षिवृधृभ्य क्वनिप् ।

शीवलम् । न॰ शैलेये ॥ शैवाले ॥ जलेशितेतिष्ठतिशीङोवलन् । बाहुलकाद्गुणाभाव ॥

शु । अ॰ पूजायाम् ॥ आश्चर्ये ॥

शुक । पु॰ व्यासमुते । बादरायणौ ॥ कीरे । मेधाविनि । फलाशने । तोता॰ इ॰ भा॰ प्र॰ पक्षिणि । अथशुभसूचकत्वयथाक्षत्रराजि । वाम पठन्राजशुकप्रयाणे॰ शुभंभवेद्दक्षिणत प्रविशे । वनेचरा काष्ठशुका प्रयातु स्यु सिद्धिदा सम्मुखमापतन्त । इति ॥ रावणस्यमन्त्रिणि । शिरीषवृक्षे ॥ न॰ ग्रन्थिपर्णे ॥ वस्त्रे ॥ वस्त्राञ्चले ॥ शिरस्त्रे ॥ शोचति॰ शवतिवा । शुचशोके॰ शुगतौवा । शुकवल्कोल्काइतिसाधु ॥ शोभते । शुभदीप्तौ । पूर्ववत्साधु ॥ यद्वा । शोकति । शुकगतौ ॥ इगुपधेतिक ॥

शुकच्छदम् । न॰ स्थौणेये ॥

शुकजिह्वा । स्त्री॰ शुकाननायाम् । सुवाठोठी॰ इ॰ भा॰ प्र॰ ॥

शुकतरु । पु॰ शिरीषवृक्षे ॥

शुकतुराड । पु॰ त्रिकूलप्रभेदे ॥ सपीत शुकतुराडक ॥

शुकद्रुम । पुं॰ शुकतरौ ॥

शुकनामा । स्त्री॰ शुकजिह्वायाम् ॥

शुकनाशन । पु॰ दद्रुघ्ने ॥ त्रि॰ शुकनाशके ॥

शुकनास । पु॰ शोणकद्रुमे ॥ शुकनासेवपुष्पमस्यास्ति । अर्शआद्यच् ॥ त्रि॰ शुकवन्नासायुक्ते ॥

शुकपिशिड । स्त्री॰ शुकशिम्ब्याम् ॥

शुकपुच्छ । पु॰ गन्धके ॥ शुकस्यलाङ्गूले ॥

शुकपुच्छकम् । न॰ स्थौणेये ॥

न०। मज्जजातधातौ। तत्पर्याया यथा। शुक्रं० तेजोरेतसीच० बीजवीर्य्येन्द्रियाणिचेति॥ नेत्ररोगविशेषे। शुक्लवर्णे। शुक्रे। त्रि० तद्वर्णविशिष्टे। शोचयति। ऋज्रेन्द्रेति निपातनात्कुत्वञ्चैतस्यरन् प्रत्ययस्य॥ शोचतीति शुक्र०। शुचशोके। पूर्ववत्। शोचत्यनेन वा॥ विरहिण शोचन्त्यस्मिन्। शुक्रोज्येष्ठमास॥

शुक्रकर०। पुं० मज्जनि॥ त्रि० वीर्य्यकारके॥

शुक्रदम्। न० तपतुलशी॥

शुक्रभुक०ग०। पु० मयूरे॥

शुक्रभू। स्त्री० मज्जनि। त्रि० वीर्य्योत्पन्ने॥

शुक्रल। त्रि० बहुवीर्य्यवति॥ वीर्य्यदे॥

शुक्रला। स्त्री० उच्चटायाम्॥

शुक्रवार। पुं० भृगुवारे। शुक्रग्रहभोग्यदिने॥

शुक्रशिष्य। पुं० दितिसुते। असुरे॥ शुक्रस्यशिष्य॥

शुक्राङ्ग०। पु० मयूरे॥

शुक्रास्त। पु० नष्टभृगौ॥ अत्रया द्विनिषिधोयथाव्रतारम्भमार्तण्डे। याजाविवाहव्रतवन्धवेश्मप्रासादचूडाकरणप्रतिष्ठा॥ नष्टेभृगौनोपदिशेन्नराणांदेवप्रतिष्ठामपिकर्णवेधमिति।

शुक्रियम। न० शुक्रदैवते० हविषि॥ शुक्रोदेवताऽस्य। शुक्राद्घन्॥

शुक्ल। पु० विष्कम्भादियोगान्तर्गतयोगविशेषे॥ वर्णविशेषे। तत्पर्यायायथा। शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः। अवदातसितौगौरोवलक्षोधवलोऽर्ज्जुनइति॥ वत्सरविशेषे॥ तत्फलं यथा। रोगाबहुविधास्सैवमनुष्यावाजिकुञ्जराः। सर्वएवप्रणश्यन्तिशुक्लेवर्षेवरानने॥ इति॥ शुक्लैरण्डे॥

शुक्लम्। न० रजते। रूप्य॥ नवनीते॥ नेत्ररोगविशेषे॥ यथा। सुश्वेतं मृदुशुक्लामं शुक्लतच्छुक्लं चिरात्॥ चिकित्साचयथाभुक्तापाथितसहस्राणचत्रुचीर्य्यं दृश्यते चचिरेणावतष्टारितिमिराणिव्यपोहति॥ खानकृष्णतिलं वापिचत्त्र्यमनिलापहम्। आसन्नं सततं खान परं दृष्टिबलावहम्॥ शुक्लोनिस्वदलैपिण्डो सुखोष्णःस्वल्पसैन्धवः। धार्य्योनेत्रेऽनिलश्लेष्मशोथकण्डुव्यथाहरो॥ त्रिफलापिण्डिकानेत्रवातपित्तकफापहेति॥ शुभकर्म्मणि॥ देवयानमार्गे॥ त्रि० शुभ्रवर्णयुक्ते॥ शुक्लोगुणोऽस्याऽस्ति० अस्मिन्वा। मतुप्। गुणवचनेभ्योमतुपोलुगिष्टइतिलुक॥

विदार्याम् ॥ शुभ्रवर्णायाम् ॥ टाप् ॥

शुक्लाङ्गी । स्त्री० शेफालिकायाम् ॥

शुक्लापाङ्ग । पु० मयूरे ॥ त्रि० शुक्लवर्णनेत्रान्ते ॥

शुक्लार्क । पु० सितपर्णासि । वर्बराप्रभेदे ॥

शुक्लार्म्म । न० चक्षूरोगविशेषे ॥ सुश्रुते तस्य दृग्शुक्लाभं शुक्लं तदर्म्मेति चिरात् ॥

शुक्लिमा । पु० शुक्लत्वे ॥

शुक्लोपल । पु० श्वेतपाषाणे ॥

शुक्लोपला । स्त्री० शर्करायाम् ॥

शुचि । पु० वायौ ॥ तेजसि । चित्रे ॥ शुच्यति । शुषशोषणे ॥ शुचि कुचिशुचिभ्य कित् ॥

शुङ्ग: । पु० न० वटे । आम्रातके ॥ पर्कट्याम् । अङ्कुरे । आर्ये ॥

शुङ्गा । स्त्री० अश्वत्थे ॥ नवपल्लवकोश्याम् ॥

शुङ्गाकर्म्म । न० पुंसवनसंस्कारविशेषे ॥

शुङ्गी । पुं० अश्वत्थ ॥ वटद्रुमे ॥

शुच् । स्त्री० शोके ॥ शोचनम् । शुचशोके । सम्पदादित्वात् क्विप् ॥ यथा प्राप्तेस्त्वौ पितरितनयेवासुहृद्दिवा० शुचासन्तप्यन्ते भ्रममुदरतो ऽज्ञधिय । असारेसंसारेविरसपरिणामेतुविदुषांवियोगोवैराग्यद्रढयतिवितन्वन्शमसुखम् ॥

शुचा । स्त्री० शोके ॥

शुचि । पु० ग्रीष्मे ॥ अग्नौ ॥ सौराग्नौ ॥ यथा । पावक पवमानश्च शुचिरग्निस्त्रतेत्रय । निर्मथ्य पवमान : स्याद्वैद्युत पावक स्मृत ॥ यश्चासौतपतेसूर्य । शुचिरग्निस्त्वसौस्मृत । तेषान्तुसन्तता वन्यश्चत्वारिंशच्चपञ्च च ॥ पावक पवमानश्चशुचिस्तेषांपिताश्च : । एतेषंवैनामपञ्चाशस्कश्च परिकीर्त्तिता ॥ कू० कौर्मे १२ अध्याय ॥ चित्रके ॥ शृङ्गाररसे ॥ उत्तमयुवप्रकृतिकत्वेन० जुगुप्सारहितत्वात्० शुचि शृङ्गाररस ॥ आषाढेमासि ॥ शुचिपवित्र करोति० शुचयति । तत्करोतीतिण्यन्तादच् ॥ यद्वा । शोचति । अन्तभावितण्यर्थाच्छुचे रगुपधात्किदितीन् ॥ शोच तिविरहिणोऽस्मिन्निति वा । शोचत्यनेनवा॥विदुषि ॥ शोचतिजनङ्क्लिश्यमानम् ॥ उपदाशुद्धसचिवे । ज्येष्ठमासे ॥ स्त्री० कश्यपपत्न्यास्ताम्राया सुतायाम् ॥ त्रि० धवले ॥ शुद्धे ॥ यथा । आसनशयनयानंश्चयापत्य कमण्डलुम् । आत्मन . शुचिरेतानिपरेषामशुचीनितु ॥ स्वभावत ' सस्कारतश्चशुद्धे ॥ बाह्याभ्यन्तरशौचसम्पन्न ॥ वी

सिद्धापिगुल्यतेदृपलादिक । चि ह्नताया पलचैकसर्वेषापिण्डिका भवेत् ॥ हन्त्यशीतिमवातरोगानम चत्वारिंशञ्चपित्तजान् । विंशतिश्ले ष्मसम्भूतानष्टौचपित्तरोगवान् ॥ द्वन्द्वमभवानरोगानन्यानपिनि वारयेत् । मन्नौषधप्रसादेनपरम सुन्दरीभवेत् । द्रुतिपाकावली ॥

शुण्ठाम् । ) न॰
शुण्ठाक । ) पु॰ शुण्ठाम् ॥

शुण्ड । पु॰ मदनिर्झरे ॥

शुण्डक । पु॰ मण्डपरके ॥ युद्ध वेषे ॥

शुण्डरोह । पु॰ भल्लये ॥

शुण्डा । स्त्री॰ मद्यपानालये ॥ ज लहस्तिन्याम् ॥ वेश्यायाम् ॥ ह स्तिहस्ते ॥ सुराथ र नलिन्या म् ॥ शुन्यके । शुनगती । अम न्ताङ्ग ॥

शुण्डापानम् । न॰ मदस्थाने ॥

शुण्डार । पु॰ शौण्डिके । सत्य शुण्डायाम् ॥ कलाशुण्डा । कु टीरमीशुण्डाभ्योर ।

शुण्डाल । पु॰ हस्तिनि ॥

शुण्डी । पु॰ शौण्डिके ॥

शुण्डमषिका । )
शुण्डिमूषी । ) स्त्री॰ छुच्छुन्द यीम ॥ द्र॰ रा॰ नि॰ वट॰ ॥

शुण्डौ । स्त्री॰ हस्तिशुण्डावर्चे ॥

शुतुद्रि । स्त्री॰ शतद्रुसरिति ॥ शु पूजिततुदति । तुद॰ । ध्रुगुपधा त्किदितीन् । बाहुलकाद्रुक ॥

शुद्दि । प॰ शुक्लपक्षे ॥

शुद्धम् । न॰ मरिचे सैन्धवे ॥

शुद्ध । वि॰ पूते । पवित्रे । अशुद्धिरहिते ॥ निर्मले । नि र्लेपे ॥ निर्दोषे ॥ शुक्ले ॥ रा गान्तरामिश्रितरागे ॥ प्रसन्ने ॥ नित्यनिरस्तसमस्तदोषपरमहिम्नि ॥ शुद्ध्यतिशुद्ध्यतेऽनेनवा । शु धशौचे । क्त । प्रशस्ताशुद्धिर स्यवा । अर्शआद्यच ॥ अहरहित भवने ॥ रागाद्यशुद्धिरहितेपर मात्मनि ॥

शुद्धचैतन्यम् । न॰ सर्वधर्मातीते ॥

शुद्ध कर्ण । पु॰ शुक्लकर्णे अर्भे ॥

शुद्धदत् । वि॰ शुक्लदन्तयुक्ते । शु द्धदन्ते । शुद्धादन्तायस्यस ॥ वयान्तशुद्धशुभ्रवृषवराहिभ्यश्चेति पक्षे दन्तस्यदतादेश ॥

शुद्धमति । स्त्री॰ पवित्रमतौ । सु मतौ वि॰ सुमतिविशिष्टे ॥ प वित्रबुद्धियुक्ते ॥ शुद्धासौमतिश्च ॥ शुद्धामतिर्यस्य । पु॰ च तुर्विंशतिभूतार्हदन्तर्गतजिनविशे षे ॥

शुद्धमांसम् । न॰ मांसव्यञ्जन

विशेषि । सुधवास• क्ली• भा• ॥ यथा । पाकपात्रे घृतं दद्यात्तैलं वातद्भावत. । तत्र हिङ्गुहरिद्राञ्च भर्जयेत् तदनन्तरम ॥ छागादेर स्थिरहित मांस तत्खण्डित भ्रमम् । धौत निर्गालित तस्मिन्घृतेतद्भर्जयेच्छने ॥ सिद्धयोग्यजल दत्त्वा साधयेत्पचेत्तत । सिद्धजीन सम्यग्विसवार परिक्षिपेत् ॥ द्रव्या णिवेसवारस्यनागरञ्चिदलानिच तण्डुलाम्लवद्धानिमरिचानिसमा सत '॥ अनेनविधिनासिद्धं शुद्धमासमितिस्मृतम् । शुद्धमांस मर ग्रथ्य बल्यरुच्यस्तर्पणम् ॥ त्रिदोषशमनमेध्यदीपन धातुवर्द्धनमितिभावप्रकाश ॥

शुद्धवती । स्त्री• बकपत्रपुष्पाम् ॥ यथा । शुद्धवत्यस्तु नाथस्फटिकोपलनिर्मिता । यास्तु रात्रौ पमैयाद्द सैविताभातिधामभिरितिस्मगैन्द्रस चिता ॥

शुद्धवल्लिका । स्त्री• गुडूच्याम् ॥

शुद्धसत्त्वम् । न• रजस्तमोभ्यामस्पृष्टे त्रिगुणायामायायाचश्रमूती• विमलसत्त्वगुणे ॥ त्रि• शुद्धधान्यकार्ये ॥ शुद्धरागादिकषायरहित सत्त्वमन्त : करणयस्य ।

शुद्धान्तः । पु • भूभुजांक्षागारे । अन्तः पुरे अवरोधने ॥ क्षा भ्यद्धकक्षान्तरे । राजधानीस्थान विशेषेवासगृहाख्ये • इतिस्वामी ॥ राजयोषिति ॥ शुद्धोन्तोऽस्य । रक्षका शुद्धान्तसमीपेऽसका ॥ अर्थोवान्तो ॥

शुद्धान्तपालक । पु• अन्त पुररक्षि । गृहद्वारिकि । कञ्चुकि ॥ दौविडिरुडकि ॥ तत्रयथ यथा । शुद्ध कुलोद्भत सूत्र विद्यप ताम्र भ शि. । राज्ञामन्त : पुरा ध्यक्षोविनीतशतथिग्यते ॥ इ• म त्स्यपु• ॥

शुद्धान्ता । स्त्री• राजयोषिति ॥

शुद्धापङ्क्ति । स्त्री• अलङ्कारविशेषे ॥ यथा ॥ शुद्धापङ्क्तिरन्यस्यारोपार्थौधर्मनिह्नव . । नायं सुधांशु . किन्तर्हि व्योमगङ्गासरोरुहम् । इति ॥

शुद्धि । स्त्री• । मार्जनायाम ॥ दोषनिरासे ॥ वैदिककर्माहत्वप्रयोजकसंस्कारविशेषे ॥ कालिकश्च दोषनाशोहिकाद्दोषासुरेश्वरि । मिथ्याऽमिथ्याविचाराणांनशुद्धि ' श्रौतकर्मणा ॥ नस्त्रिताद्धैः स्मृतिभिरिष्टसिद्धिर्भवाभवेत् । विनाशागममार्गेणकलौनास्तिगतिः प्रिये ॥ कलावागममुल्लङ्घ्ययोऽन्यमार्गेप्रवर्त्तते । नतस्यगतिरस्तीति सत्य सत्य नसंशयः ॥ दुर्गायाम् ॥

यथा । स्मरणाच्छिन्नमाहात्म्यो
तेसच्छिवातकात् । तेनशुद्धं स्वभा
व्याताद्देवीरुद्रतनौस्थितेति ॥ शुचि
स्त्रियाल्लिन ॥ देवतायैसुराप्रदाने
द्रव्यान्तरसञ्ज्ञायाम ॥ यथा । मास
मीनश्चमुद्राचफनमूलानियानिच ।
सुधादानेदेवतायैसञ्ज्ञाशुद्धिरी
रितेति ॥

शुद्धिलाभ । पु॰ प्रायश्चित्ते ॥

शुद्धोदन । पु॰ नृपविशेषे ॥ शुद्धो
दनोऽत्र । शकन्ध्वादि ॥ शुद्धो
दनोयस्यभुक्तेन्यायवच्छुद्धमोदन
म् ॥

शुद्धोदनसुत । पु॰ शाक्यमुनौ ॥

शुन । पु॰ वायौ ॥ कुक्कुरे ॥ य
थाहवाचस्पति: । कुक्कुरस्तुशु
नि श्वान कपिलोमण्डल शु
नइति ॥

शुनःशेप । ) पु॰ मुनिविशेषे । अट
शुनःशेफ । ) न॰
चीकमुनिपुत्रे । शाजीगर्त्ते ॥

शुनक । पु॰ कुक्कुरे । शुनति ।
शुनगतौ । कुन्शिल्पिसञ्ज्ञयोरपू
र्वस्यापि ॥

शुनकचञ्चुका । स्त्री॰ क्षुद्रचञ्चुक्षुपे ॥

शुनकचिल्ली । स्त्री॰ शाकविशेषे । श्वा
नचिल्लिकायां ॥

शुनाशीर । पुं॰ इन्द्रे ॥ शुनोवायु
॰ शीर ' सूर्य ॰ ॰ तावस्य ।
अश्वायच् । अन्येषामपीतिदी
र्घ ॥ शुनाशीरोऽपितालव्य सु
नासीरोऽपिदन्त्यक । तालव्यादि
र्दन्त्यमध्य शुनासीरश्चदृश्यते ।
इतिभरत ॥

शुनासीर । पु॰ इन्द्रे । पुरुहूते ।
पुरन्दरे ॥ शुइत्यव्ययस्यपूजार्थक
त्वात्॰ शोभननासीरसेनाविशेषो
यस्यस ॥ यद्वा । शुनोवायु सी
रश्चादित्य ॰ शुनश्चसीरश्चेति ।
देवताद्वन्द्वेचेत्यानङ् इतिदन्त्यका
र । दन्त्यतालव्यपाठोबहुसम्मत ॥

शुनासीरीयन । न॰ शुनासीर्ये ॥
शुनासीरोदेवताऽस्येत्यर्थे॰ द्यावा
पृथिवीत्यादिनाछ ॥

शुनासीर्यम् । न॰ शुनासीरीये॰ ह
विरादौ ' शुनासीरोदेवताऽस्येत्य
र्थे॰ द्यावापृथिवीशुनासीरमरुत्व
दग्नीषोमवास्तोष्पतिगृहमेधाच्छचे
ति॰ चायत् ॥

शुनि । पु॰ कुक्कुरे । सारमेये ॥

शुनी । स्त्री॰ कुक्कुरीम् ॥ अश्वाश्च
च शुनीत्यमर ॥ कुष्माण्डयाम्
॥ गौरादित्वान्ङीष् ॥

शुनीर । पु॰ कुक्कुरीसमूहे ॥ इति॰
चि॰ इष ॥

शुन्ध्यु । पुं॰ अग्नौ ॥ शुन्धति । शु
न्धशुद्धौ । यजिमनिशुन्धिदसिज
निभ्योयुच् ॥

सर्मवमस्तथापर । एते शुषिरभेदास्तुकथिता पूर्वसूरिभिरिति ॥ विवरे ॥ त्रि॰ सरन्ध्रे । रन्ध्रान्विते शुषिश्छिद्रमस्यास्मिन्वाऽस्ति । अशआदित्वादच् ॥ यद्वा । शुष्यति । शुष क्षुशिमदिसुदीतिकिरच ॥ शुष्कोथोत्यन्य ॥

शुषिरा । स्त्री॰ नलीनामगन्धद्रव्ये ॥ शुषिराविद्रुमलताकपोताङ्घ्रिर्नटीनलीत्यमरः ॥ शुषिरमस्त्यस्य अर्शआदित्वादच् ॥

शुषिल । पु॰ समीरणे । वायौ ।

शुष्क । त्रि॰ नीरसे ॥ शुषिते । शुष क्तः॰ निष्ठातकारस्य ककारः ॥ यद्वा । शुष्यति । शुष॰ । स्वभूशुषिमुषिभ्य कक ॥

शुष्कतर्क । पु॰ दुस्तर्के । अनुयोक्तुमानहीनतया॰ निरालम्बने॰ ऽहवैनाग्निकाद्विवास्तीत्यशुमाने ॥

शुष्कपत्रम् । न॰ नीरसदले ॥ आतपादिशोषितपत्रशाके । मालिता॰ शुक्ता॰ कु॰ गौ॰ दे॰ भा॰ प्र॰ ।। अस्यगुणायथा । शुष्कपत्रपचेत्विन्ध्र पित्तश्लेष्मज्वरापहम् । तच्छुष्कपत्रं बलदोषनाशनविशेषत पित्तकफज्वरापहम् । जलस्तम्भापिचपित्तदारकसुरोचनव्यञ्जनयोगकारकमितिराजवल्लभ ॥

शुष्कमत्स्य । पु॰ आतपादिनानीरसीभूते ॥ शुष्कमत्स्यानवल्या: स्यु र्दुर्जराविडविनस्वना ॥

शुष्कमांसम् । न॰ आतपादिना॰ अनार्द्रपिशिते । उत्तप्ते । वल्लूरे ॥ यथा । सुखानादोषलमांस॰ बोलाबलनलघु । विदोषकृदयालघुष्ट शुष्कं शूलकारगुरु ॥

शुष्करेवती । स्त्री॰ मातृकाविशेषे ॥

शुष्काल । त्रि॰ आमिषे ॥ शुष्कमासस्यापणिके ॥ पिशिताशिनि ॥ शुष्कालोमर्त्त्य । शेषतुल्यम् । सन्ध्याप्वैकस्याघ्नभाव ॥

शुष्कली । स्त्री॰ शुष्कमांसे ॥ मांसमात्रे ॥

शुष्कवृक्ष । पु॰ पाण्डुतरौ । धवे ॥

शुष्कव्रण । पु॰ किणे ॥

शुष्काङ्ग । पु॰ धववृक्षे ॥ त्रि॰ निर्गतशायये ॥

शुष्काङ्गी । स्त्री॰ गोधायाम् ।

शुष्कार्द्रम न॰ शुण्ठ्याम् ॥

शुष्ण । पु॰ सूर्ये ॥ वह्नौ ॥ शुष्यत्यनेन । शुष॰ । तृषिशुषिरसिभ्य कित्तिन ॥

शुष्म । पु॰ सूर्ये ॥ अग्नौ ॥ अर्चिषि ॥ न॰ तेजसि ॥ ओजसि । बले ॥ शुष्यतिजलम्॰ शुषिरन्तर्भाविसण्यर्थात्॰ अर्चिर्श्वि

। कौवद्र० भा० ॥ शूकायुक्ताशिम्बा ० शिम्बि शिम्बिका० शिम्बीवा ॥

शूकशिम्बा । } स्त्री०
शूकशिम्बि } पु० कपिकच्छ्वाम् ।
शूकशिम्बी । } स्त्री०

मर्कव्याम् । कौच० भा० प्र० ॥

शूका । स्त्री० शूकशिम्बायाम् ॥

शूकाख्यम् । न० शूकतृणे ॥

शूकापुट्ट । पु० तृणधान्यविशेषे । तृ णमणी । कापूरड़० भा० प्र० ॥ क्र ० हा० स्त्री ॥

शूतिपर्ण । पु० आरग्वधे ॥

शूद्र । पु० अवरवर्णे । वृषले । ज घन्यजे ॥ अस्यान्नादिग्रहणे वैदिक ब्राह्मणेनकर्त्तव्यमित्याह नाराय ण । शूद्रान्नं शूद्रसम्पर्कं शूद्रेण चसहासनम् । तेयान्तिनरकंघोरं यावच्चन्द्रदिवाकराविति ॥ अस्योत्प त्तिरग्निपुराणे जातिमालायामुक्ता । तथाहि । आदौ प्रजापतेर्जातामु खाद्विप्रा सदारका । वाह्लोश्च विशाजाताजङ्घाभ्यांवैश्याविजज्ञिरे ॥ पादाच्छूद्रस्समभूतस्त्रिवर्णस्यसे वक । भीमनामासुतस्तस्यप्रदी पस्तस्यपुत्रक ॥ कायस्थस्तस्य- पुत्रोऽभूद्भूवलिपिकारक । काय स्थस्यचपुत्राविख्याताजगतीतले ॥ चित्रगुप्तश्चित्रसेनोविचित्रस्तथैव च । चित्रगुप्तोगत : स्वर्गेविचित्रो नागसन्निधौ ॥ चित्रसेन पृथिव्यां वैद्यतिशूद्र प्रचक्षतइति ॥ शोच ति । शुचशोके । शुचेर्द्रस्रेतिरक् दीर्घश्च ॥ अपशूद्राधिकरणे शूद्रेतिश्रुतौ तु० रूढेर्योगात् । योगएवपुरस्कृत तथाचोत्तरतन्त्रे भगवान्व्यास । शुगस्यतदनादरश्रवणात् । तदाद्रव णात्सूच्यतेहि ॥ १ । ३ । ३४ । अ स्यार्थ । छान्दोग्येचतुर्थेप्रपाठ के० अहह्रे शूद्रेतिसम्बोधना च्छूद्रेधिकारइतिचेन्न । शुगस्येति । अर्थगो हंसै रद्धक्त्यनादरतोजान श्रुति तदनादरश्रवणाद्द्रुयाशु क् । तया० आशीप्र० रैक्वगुरुं प्रति द्रवणात्सशूद्र । एतद्वित्त० शू द्रेतिसम्बोध्य० सर्वज्ञत्वख्यापनाय रैक्वेणसूच्यते ॥

शूद्रक । पु० अतिकुत्सितेशूद्रे ॥ कुत्सायांकन् ॥

शूद्रकर्म । न० द्विजपरिचर्यायाम् ॥ यथाहभगवान् । परिचर्यात्मक कर्मशूद्रस्यापिस्वभावजम् इति । स्वभावज रजउपसर्जनतमोगुणस्व भावाज्जातम् कालिदासोपि । द्विजातिसेवाऽवमिदेवताज्ञयाधर्मो विधि शूद्रनिसर्गकर्मच । स्व भावकर्मप्रविहाययोन्यथालयधरे तुसोन्यजकर्मनर्मभागिति ॥ शू द्रस्यकर्म ॥ अप्यनिषिद्धानिकर्मा

अविद्याजीवनशून्य दिकशून्याचेद्वान्यथा । पुत्रहीनगृहशून्यसर्वशून्यादरिद्रता ॥ खपुष्पादिवदत्यन्ताभावरूपे ॥ यथा । मृगतृष्णाम्भसिस्नातः खपुष्पकृतशेखरः । एषवन्ध्यासुतोयातिशशशृङ्गधनुर्द्धरः ॥ शुभेच्छितम् । शुन सम्प्रसारणावाचदीर्घत्वमितियत् ॥

शून्यकम् । न० शून्यार्थे । वि० तुच्छे ॥ शून्यरिक्तद्वतियावादिषुपाठात्कन् । स्वार्थेकोवा ॥

शून्यता । स्त्री० चित्तस्यदोषे । रागद्वेषादितीव्रवासनयाचित्तस्यसर्व्वभावैकाग्र्ये । शून्यतायाम् ॥ ध्यानचिन्ताच्छिन्नानांशून्यताश्वासतापकृत् ॥ शून्यस्यभाव । तल् ॥

शून्यतिथि । स्त्री० तिथिविशेषे ॥ यथा । अष्टमीनवमीचैव पक्षयोरुभयोरपि । माधवेद्वादशीज्ञेयापक्षयोरुभयोस्तथा ॥ ज्यैष्ठेचयोदशीनिन्द्यासिते० कृष्णेचतुर्द्दशी । आषाढेकृष्णपक्षषष्ठी० शुक्लेचसप्तमी ॥ द्वितीयाचतृतीयाचश्रावणेसितकृष्णयोः । प्रथमाचद्वितीयाचनभस्येमासिनिन्दिता ॥ इषस्येकादशीनिन्द्या० मासेशुक्लकृष्णयोः । ऊर्ज्जे चतुर्द्दशीशुक्लाकृष्णपक्षेतुपञ्चमी ॥ सप्तमीचाष्टमीसौम्येपक्षयोरुभयोरपि । पौषेपक्षद्वयेचचतुर्थीपञ्चमीतथा ॥ मासितुपञ्चमीषष्ठीकृष्णेशुक्लेयथाक्रमम् । तृतीयाचचतुर्थीचफाल्गुनेसितकृष्णयोः ॥ तिथयोमासशून्याख्याविस्तवंशविनाशिकाः । आसुश्राद्धप्रकुर्वीतनैवमङ्गलमाचरेदितिवशिष्ठ ॥

शून्यनक्षत्रम् । न० शून्यभे ॥ यथा । अश्विनीरोहिणीचैव शून्यमेपरिकीर्त्तिते । चित्रास्वातीचमेशाखे० ज्येष्ठेविशाखेज्यतारकौ ॥ भगवासवमाषाढे० श्रावणेहरिविश्वभे । नभस्येवारुणाख्यञ्चमजपादश्वयुज्यपि ॥ कार्त्तिकेपितथाहन्युषीसौम्येचित्रादिदैवते । पौषेद्रासकराद्री सार्पाचेमूलसविष्णुभम् ॥ तपस्येशक्रभरणीशून्यभान्याहुरग्रजा । एषुयत्सुकृतकर्मधनं सद्विनश्यति ॥

शून्यभम् । न० शून्यनक्षत्रे ॥

शून्यमध्य । पु० नले । पोटगले ॥

शून्यराशि । पु० मासविशेषगतराशिविशेषे ॥ यथा । घटमत्स्यवृषायुग्म मेष कन्या सवृश्चिका । तुलाचापकुलीराख्यामृगसंज्ञाश्च राशय ॥ चैत्रादौराशिशून्याख्याविस्तवंशविनाशदा ॥

शूर्प । पु॰ द्रोणद्वयात्मकपरिमाणे ॥ पुं॰ न॰ प्रस्फोटने । सूप॰ इ॰ भा॰ । शूर्पयति । शूर्प्यतेऽनेनवा । शूर्पमाने । पचाद्यच् । पुंसीति घोषा ॥ यद्वा । शृणाति । शॄ॰ । सुशॄभ्यांनिच्चेतिप । बाहुलकादुत्वम्॰ रपरत्वम्॰ हलिचेतिदीर्घ ॥ न॰ शोणितभाजने ॥

शूर्पक । पु॰ कामदेवारातावसुरविशेषे ॥

शूर्पकर्ण । पु॰ गजे । नागे । गणेशे । विघ्नराजे ॥ शूर्पाविवकर्णौ यस्य ॥

शूर्पकाराति । ) पुं॰ कामदेवे ।
शूर्पकारि । )

शूर्पणखा । स्त्री॰ रावणभगिन्याम् ॥ शूर्पवन्नखानियस्याः । पूर्वपदादितिणत्वम् । नखमुखात्संज्ञायामितिनङीष । केवलयौगिकत्वेतु ङीष् ॥

शूर्पणखी । स्त्री॰ रावणस्वसरि ॥ शूर्प शोणितभाजनम्॰ नखविदूषणाद्बृतिधातु: । शूर्पेण॰ शोणितभाजनेनयस्याःद्विरियानखयतिदूषयतीतिशूर्पणखी ॥ यद्वा । शूर्पाकाराणिनखानियस्याः । साङीष् ।

शूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

शूर्पवात । पं॰ सूपवायौ । फुत्कारे ॥

शूर्पश्रुति । पु॰ हस्तिनि ॥ इ॰ भा॰ ली ॥

शूर्पी । स्त्री॰ शूर्पणखायाम् ॥ गौरादित्वान ङीष् ॥ क्षुद्रसूर्पे ॥

शूर्म । पु॰ )
शूर्मि । स्त्री॰ )
शूर्मिका । स्त्री॰ ) शूर्मिकायाम्
शूर्मी । )

। लौहप्रतिमायाम् ॥

शूल । पुं॰ न॰ आयुधविशेषे व र्छा॰ भाला॰ इ॰ भा॰ प्र॰ । मृत्यौ ॥ केतने ॥ विष्कम्भादिषुनवमयोगे॰ तत्रजातस्यफल यथा । भीतोदरिद्रोदयिताप्रियश्चशूलोद्भवश्शूलइवसवन्धौ । विद्यामयाभ्यारच्छितोथशूलोकरोतिलेकेनहितंकदाचित् ॥ सुतीक्ष्णे ॥ वधस्थानस्थ कीलके ॥ व्यथायाम् ॥ विक्रेतव्ये ॥ यथा । अट्टशूलाजनपदा शिवशूलाश्चतुष्पथा । प्रमदा. केशशूलिन्योभविष्यन्तिकलौयुगे ॥ इतिमहाभारतेआदिपर्व ॥ रोगविशेषे ॥ अस्यदानादिकभावप्रकाशे॰ शूलाधिकारेद्रष्टव्यम् ॥ राजारोरादिमध्यान्तेपुनश्चान्त्यादिमध्यत । मध्ये चान्ते तथा दोषदोषे नोल्पातिशूलरुक् ॥ भुक्ते जीर्यतिजीर्णेऽन्ने जीर्णे भुक्ते चजीर्यति । जीर्णेजीर्यतिभुक्ते चदोषे नोल्प

। शूलं शूलीचक्रमादाय शूलीपाशपाणीचक्रमादाय यः सोधाद्व्ययं पृष्ठतः पार्श्वतो वा दुर्गा दुर्गार्थादिनो रक्षणाय ॥ त्रि॰ शूलरोगयुक्ते ॥ यथा । वर्जयेद्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियमिति ॥ शूलमस्यास्ति । इनि ॥

शूलिन । पु॰ भाण्डीरवृक्षे ॥

शूलिनी । स्त्री॰ दुर्गायाम् ॥

शूली । स्त्री॰ तृणप्रभेदे । शूलपर्ण्याम् । धूम्रमूलिकायाम्

शूलोत्खा । स्त्री॰ सोमराज्याम् ॥

शूल्यम् । त्रि॰ शूलके । लोहशलाकया पक्वमांसे । शूलाकृते ॥ शूले संस्कृतमांसम् । तत्र संस्कृतमित्यर्थे॰ शूलोखाद्यत ॥ तत्पाकप्रकारो यथा । कोलखण्डानि मांसानि ग्रथितानि शलाकया । घृतसलवण दत्त्वा निर्धूमेदहनेपचेत् ॥ तत्तु शूल्यमिति प्रोक्तं पाककर्मविचक्षणैः । शूल्यमल्पसुधातुल्यं रुच्यं वह्निकरं लघु । कफवातहरं बल्यं किञ्चित्पित्तकरं हितम् ॥ अन्योपि । अङ्गारकर्पर भ्यास्तस्य शूलयन्त्रे पुटेऽथवा । भर्जनं विविधं प्रोक्तं सूपकारविशारदैः ॥ जलेन सह दद्यात्पूर्वं प्रोतं शूलेन्तरान्तरम् । दध्याद्र्दं कुलवलिप्तं खङ्गारपाचितम् ॥ तच्छूल्यन्तु सुधातुल्यं रुच्यं वह्निप्रदं लघु । तदेवाङ्गारतप्तन्तु प्रपक्वं वातनाशनम् ॥

शूल्यकम् । त्रि॰ शूलविद्धपक्वमांसे । भटित्रे । शूल्यमेव । कन् ॥

शृगाल । पु॰ शिवायाम् । भूरिमाये । गोमायौ । मृगधूर्तके ॥ सियाल॰ इ॰ भा॰ ॥ सृजतिमायाम् । सृज॰ आहुलकात्कालन् । न्यङ्क्वादि । पृषोदरादि ॥ असृगालिशा । पृषोदरादि । सृगं भिन्दिपालमलाति वा । पूर्ववत् ॥ तालव्यादि । तालव्यापिदन्त्यासशस्वशस्वलशूकरा । रशनापिच जिह्वायांशृगाल कलशीपिचेतिश ब्दभेदात् ॥ दैत्यभेदे ॥ वासुदेवे ॥ खले ॥ निष्ठुरे ॥ भीरौ ॥

शृगालकण्टक । पु॰ सियालकाटा इ॰ भा॰ प्र॰ क्षुपे ॥

शृगालकोलि । पुं॰ क्षुद्रबदर्याम् । गोपघण्टायाम् । भाडवेरी॰ इ॰ भा॰ ॥

शृगालघण्टी । स्त्री॰ कोकिलाक्षे ॥

शृगालजम्बू । स्त्री॰ गोडुम्बे ॥ घोण्टाफले ॥

शृगालविन्ना । स्त्री॰ पृश्निपर्ण्याम् ॥

शृगालिका स्त्री॰ शृगालयोषिति । शिवायाम् ॥ लोमालिकायाम् । दीप्तजिह्वायाम् । लोमडी॰ इ॰ भा॰ प्र॰ ॥ त्रासात्पलायने । विद्रुतौ । भाजड॰ इ॰ भा॰ प्र॰ ॥

शृङ्गवेरकम् । न० चार्द्रके ॥
शृङ्गवेरपुरम । न० तीर्थविशेषे ॥ अ
चरामेगङ्गामुत्तीर्ण ॥
शृङ्गवेराभमूलक । पु० गुन्द्रायाम्
। गोंदपटेरा० इ० भा० प्र० ॥
शृङ्गाट । पु० अम्बुकण्टके स्वादु
कण्टके ॥ कामाख्यादेशस्थे पर्वत
विशेषे । द्दीपवत्या पूर्वतस्तुशृङ्गा
टोनामपर्वत ॥ न० चतुष्पथे ॥
शृङ्गाटक । पु० वारिकण्टके ॥
शृङ्गाटकम् । न० चतुष्पथे ॥ वारि
कण्टके । सिँघाड़ा० इ० प्र० जल
जलताफले । गुणायथा । शृङ्गा
टक हिमस्वादुगुरुवृष्य कषायकम्
। ग्राहिशुक्रानिलश्लेष्मप्रदंपित्तास्र
दाहनुत् ॥ मासशृङ्गाटके ॥ शृ
ङ्गप्राधान्यमटति । अट० । कर्म
ण्यण् । सञ्ज्ञायाकन ॥
शृङ्गाटी । स्त्री० जीवन्त्याम ॥
शृङ्गार । पु० सुरते । अगभूषणे
। राजमण्डने । मण्डने । नाट्यर
से ॥ तल्लक्षण यथा । पुस स्त्रियां
स्त्रिया पुसि सयोग प्रतिस्पृहास
। शृङ्गारइतिख्यातोरतिक्रीडादि
कारणम् ॥ अपिच । शृङ्गहिमन्म
थोद्भेदस्तदागमनहेतुक । उत्तम
प्रकृतिप्रायोरस शृङ्गारइष्यते ॥ इ
ति ॥ शृङ्गमप्राधान्यमियर्ति ।
ऋ० । कर्मण्यण । यद्वा । शृङ्गा
रञ्जुङ्गणाविति । शृङ्गादि कन्
उन्० गुरु० इत्यण । न० लव
ङ्गे ॥ नागसम्भवे । चूर्णे ॥ क्षा
लागुरुणि ॥
शृङ्गारक । पु० शृङ्गारे ॥ स्वा
र्थेक । न० सिन्दूरे । त्रि० शृ
ङ्गवति ॥ शृङ्गमस्यस्य । शृ
ङ्गवन्दाभ्यामारकन् ॥
शृङ्गारभूषणम् । न० सिन्दूरे ॥
शृङ्गारयोनि । पु० कामदेवे ॥
शृङ्गारित । त्रि० मण्डिते । अल
ङ्कृते । सिंगारा० इ० भा० ॥ शृ
ङ्गारोमण्डनसञ्जातमस्य । तार
कादित्वादितच ॥
शृङ्गारी । पु० गजे । द्विपे ॥ पूगी
। क्रमुके ॥ पद्मरागे । माणिक्ये ॥
त्रि० सशृङ्गारे ॥ सुवेषे ॥ शृ
ङ्गारोस्त्यस्मिन्नृषा । अतइनिठना
वितीनि ॥
शृङ्गि । स्त्री० मत्स्यविशेषे । मृङ्गा
म् ॥
शृङ्गिक । पु० न० विषप्रभेदे ॥
शृङ्गिका । स्त्री० प्रतिविषायाम् ॥
शृङ्गिण । पु० मेषे ॥ शृङ्गमस्ती
ऽस्य । ज्योत्स्नातमिस्राशृङ्गिणोर्ज्या
दिनाशृङ्गादिनच निपात्यते ॥
शृङ्गिणी । स्त्री० माहेय्याम् । सौर
भेय्याम् । गवि ॥ शृङ्गमस्तोऽस्या
। अतइनि ॥

वङ्शीङ्भ्यांरूपस्वांगयोः फुट चेत्यसुन् ॥

शेपाल । पुं॰ न॰ शैवाले ॥ द्रू॰ श॰ र॰ ली ॥

शेफ । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेतःपातानन्तरम् । बाहुलकात् फप्रत्ययः ॥

शेफ । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेतःपाते । शीङ्॰ । वङ्शीङ्भ्यांरूपस्वांगयोः फुट्चेत्यसुन् । अत्र पवर्गद्वितीयोप्यागमे ॥

शेफसी । स्त्री॰ शिश्ने ॥

शेफालि॰ । स्त्री॰ शेफालिकायाम् ॥

शेफालिका । स्त्री॰ सुवहायाम् । निर्गुण्डाम् ॥ नीलिकायाम् । हारशृङ्गार॰ पारिजात॰ द्रू॰ भा॰ प्र॰ पुष्पवर्गे । शिउली॰ गौ॰ दे॰ भा॰ प्र॰ ॥ चत्वारि शेफालिकामात्रे । शियलीतिख्यातनीलपुष्पायांशेफालिकायामिति केचित् । शेफालिकादिद्वयशेफालिकामात्रे॰ निर्गुण्ड्यादिद्वय नीलपुष्पशेफालिकायामितिकेचित् । न्यवारीतिख्यातपुष्पविशेषे॰ इतिचान्ये ॥ शब्दरत्नावल्युक्ता॰ पर्यायास्तु । शेफाली॰ मल्लिका॰ रजनीहासा॰ निशिपुष्पिका॰ साग्रमुक्ताचेत्॰ श्वेतसुरसा॰ भूतवेशीति ॥ राजनिर्घण्टोक्तास्तु । शुक्लाङ्गीशीतमञ्जरी॰ विजया॰ वातारि॰ भूतकेशीति ॥ शेतेद्रु तिशे॰ शीङ्गौणिच् । शयफालयति । शिफलाविशरणे । अच् । स्वार्थेकन्क्तुन्वा ॥ शेफालिकायाः पुष्पम् । शेफालिका । पुष्पमूले फुलमिति॰ अनुदात्तादेरञोऽवलुप् । लुपियुक्तवत् ॥ शेरते शेफाअलयोऽस्याम् । वा । ङीष् । स्वार्थेकन् ॥

शेफाली । स्त्री॰ निर्गुण्डाम् । शेफालिकायाम् । न्यवारीतिख्याते पुष्पवर्गे । हारशृङ्गार॰ द्रू॰ च॰ भा॰ प्र॰ ॥ शेरतेशेफाअलयोऽस्याम् । वाङीष ॥ नीलसिन्दुवारे । सभालू॰ द्रू॰ भा॰ ॥

शेमुषी । स्त्री॰ बुद्धौ । प्रज्ञायाम् । मतौ ॥ शेतेद्रुतिशे॰ । शीङ्गौणिच । शे॰ मोह॰ तमुष्णातीति॰ शेमुषी । मुषस्तेये । मूलविभुजादित्वात्क । गौरादित्वात्ङीष ॥

शेयाल॰ । पु॰ जलनील्याम् । शैवाले । जलेशेते॰ तिष्ठति । शीङो वालन् ॥ बाहुलकाद्गुणय ॥

शेलु । पुं॰ श्लेष्मातके । बहुवारके । लसोडा द्रू॰ भा॰ प्र॰ ॥ शिलति । शिल॰ । बाहुलकादु ।

शेव । पुं॰ यशसि ॥ शिश्ने ॥ चि॰ उन्नते ॥ शेते । शृपशीभ्यां

शैषावस्था । स्त्री॰ वर्द्धक्ये ॥

शैषित । त्रि॰ उर्व्वरिते ॥

शैक्ष । पु॰ प्रथमारब्धवेदे । प्राथमकल्पिके ॥ शिक्षामधीते । तदधीतद्वेत्त्यण ॥ शिक्षायाअयम्॰ तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैषइत्यण् ॥ यद्वा । शिक्षाशीलमस्य । छत्रादिभ्योण् ॥

शैख । पुं॰ सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥

शैखरिक । पु॰ अपामार्गे ॥ शिखरेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥

शैखरेय । पुं॰ अपामार्गे ॥

शैत्यम् । न॰ शीतत्वे ॥ भावेष्यञ् ॥ शैत्य हियत्संप्रकृतिर्जलस्य ॥

शैथिल्यम् । न॰ शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय । पु॰ शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्यम् । इतश्चानिञइतिढक् ॥

शैर्षच्छेदिक । त्रि॰ शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदाद्यच्चेतिठञ्॰ प्रत्ययेयोगेनशिरसः शीर्षभावश्च ॥

शैल । पुं॰ महीध्रे । अचले । शिलोच्चये ॥ प्रचुरा शिला सन्त्यत्र । ज्योत्स्नादित्वादण् ॥ न॰ शैलेये । ताक्ष्यशैले । रसाञ्जने ॥ शिलाजतुनि ॥

शैलकम् । न॰ शैलजे ॥

शैलगन्धम् । न॰ शावरचन्दने ।

शैलगर्भा । स्त्री॰ शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री॰ शिलावल्कायाम् ॥ इ॰ रा॰ नि॰ वट ॥

शैलजम् । न॰ शैलेये । सुगन्धिद्रव्यविशेषे । शैलेजातम् । जनी॰ । सप्तम्याजनेर्डः ॥ त्रि॰ पर्व्वतोत्पन्नेवस्तुनि ॥

शैलजा । स्त्री॰ गिरिजायाम् । पार्व्वत्याम ॥ शैलाज्जाता । जनी॰ । पञ्चम्यामितिड ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पु॰ शम्भौ । शिवे ॥ इ॰ त्रि॰ शेष ॥

शैलधर । पु॰ गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जय ॥

शैलधातुजम् । न॰ शिलाजतुनि ॥

शैलनिर्यास । पु॰ अश्मजे । शिलाजतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र । पु॰ विल्ववृक्षे ॥

शैलपीलु । पु॰ अक्षोटे ॥

शैलभित्ति । स्त्री॰ टङ्के ॥

शैलराज । पु॰ मेरुपर्व्वते ॥ हिमालये ॥ शैलानाराजा । टच् ॥

शैलराजतनया । स्त्री॰ पार्व्वत्याम् ॥

शैलराजसुता । स्त्री॰ पार्व्वत्याम् ।

दुर्गायाम् ॥ यथा । अरूपापर
भावत्वाद्वहुरूपाक्रियात्मिका । ता
ताशैलेन्द्रगेहेसाशैलराजसुतात
त ॥ इतिदेवीपुराणे४५अ० ॥
शैलवल्कला । स्त्री० शिलावल्कला
याम् ॥
शैलबीज । पुं० भल्लातकवृक्षे ॥
शैलशिखिरम् । न० पार्श्वे । धर
णीध्रशे । समृद्धे ॥
शैलसुता । स्त्री० अम्बिकायाम् ।
पार्वत्याम् ॥ ज्योतिष्मत्याम् ॥
शैलाख्यम् । न० शै ोजे ॥
शैलाग्रम् । न० शिखरे । शैल
शृङ्गे ॥
शैलाजम् । न० शैलेये ॥ इ०
रा० ट ॥
शैलाट । पुं० देवले ॥ सिंहे ॥
शुक्लकाचे । किराते ॥ इ० मे०
कार ॥
शैलादि । पुं० नन्दिनि । शिवग
णविशेषे ॥
शैलापगा । स्त्री० क्षुद्रनद्याम् ॥
शैलाली । पुं० नटे ॥ शिलालि
नाप्रोक्तनटसूत्रमधीते । पाराश
र्यशिलालिभ्यांभिक्षुनटसूत्रयोरि
तिणिनि ॥
शैलिक्य । पुं० सर्वलिङ्गिनि ॥
शिलिकस्यभाव कर्मवाष्यञ् ॥
शैली । स्त्री० सरणौ ॥ प्रशस्ति :
परिभाषायांलीसदृक्तसमबकारा-
शैतिभिकासङग्रेध ॥ समबधान
प्रविंकायांप्रवसौ ॥ यथाब्राह्मणे
सदब्राह्मणामोव्यक्तोऋषिर्य स्त
ऋषियाइति ॥ शीलमेवा । ष्यञ्
ङीप् ॥
शैलूष । पुं० बिल्वे । धात्तराष्ट्र
के ॥ नटे ॥ शिलूषस्यापत्यम् ।
ष्यञ् । शैलूषइतिकि० नामरूप
त्वात् ॥
शैलूषिक । पुं० नटवृत्त्यौपजीविनि ॥
शैलूषिकी । स्त्री० शैलूषिकजा
तिस्त्रियाम् ॥
शैलेन्द्र । पुं० हिमालये ॥
शैलेन्द्रस्थ । पुं० भूर्जवृक्षे ॥ ,
शैलेय । पुं० मधुपे । भ्रमरे ॥
सिंहे, न० तालपर्ण्याम् ॥ सैन्धवे
। शैलजे शैलातगन्धद्रव्ये । क्लो
ला० इ० भा० प्र० ॥ तत्पर्यायाद्
यथा । शैलेयन्तुशिलापुष्पंवृद्ध
कालानुसार्यकम् ॥ शैलेयंशीतलं
हृद्यंकफपित्तहरंलघु । कण्डूकु
ष्ठाश्मरीदाहविषहृद्रुधिरास्रदिति
॥ त्रि० शिलातुल्ये ॥ शिलाया
मुत्पन्ने ॥ शिलायांभव : । न
द्यादिभ्यस्तिढक् ॥ शिलेव ।
शिलायाइवरीतिभावनैककृत्या।
कीचिंशैलेयौ ॥
शैवी । स्त्री० पार्वत्याम् ॥

शैवोद्दा । स्त्री॰ निम्नगान्तरे ॥
शैवोद्भवा । स्त्री॰ क्षुद्रपाषाणभेदा म् ॥ अम्बिकायाम् ॥
शैव । त्रि॰ शिवोपासके । शौर्द्ध्व स्रोतसि ॥ न॰ शिवप्रोक्तमा र्गे ॥ यथा । नपादुकापरोमन्त्रो न्देव श्रीगुरोः पर । नश्शै वात्परोमार्गोनपुण्यं कुलपूजना त् ॥ आचारविशेषे ॥ यथा । अष्टाङ्गयोगसंयुक्तोयत्रेहं शौविधान त यावद्ध्यानसमाधिस्थतावच्छै व प्रपद्यते ॥ विवाहविशेषे ॥ यथा । शैवोविवाहोद्विविध कु लचक्रे विधीयते । चक्रस्यनियमे नैकोद्वितीयोजीवनावधि ॥ अ पि च । परिणीतानरमितावान्य काविधवाभवेत् ॥ साप्युद्वाह्यापु न पितार्थे वधर्म्मेष्वय विधि ॥ शिवस्यायम् । तस्येदमित्यण् ॥ शिवे । स्वार्थेऽण् ॥ वसुके । वक हर्णे ॥ धत्तूरे ॥ देशविशेषे ॥ शिवोनांविषयोदेश । विषयोदे शद्रूत्यण् ॥ न॰ शिवपुराणे ॥ शैवालि ॥ त्रि॰ शिवसंबन्धि नि ॥
शैवल । पु॰ शैवाले ॥ न॰ पद्म काष्ठे ॥ अशिशीतितिष्ठति । शीङो धुक्लुक्वलञ्वालनद्रूतिवलच् ॥
शैवावधूत : । पुं॰ अवधूतविशेषे ॥ सचैव श्रीमहानिर्वाणेसदा शिवेन । पूर्णाभिषेकविधिनासं स्कृतोर्थैवमानव । शैवावधूता स्तेज्ञेया पूजनीया कुलार्चि तैरिति ॥
शैवलिनी । स्त्री॰ तरङ्गिण्याम् ॥ तटिन्याम् । नद्याम् ॥ शैवलम- स्त्यस्याम् । अतइनिठनाविति नि । ऋन्नेभ्योङीप् ॥
शैवालम् । न॰ जलनील्याम् । शैवाले ॥ शैवालंतुवरंतिक्तमधु रशीतललघु । स्निग्धदाहतृषा पित्तरक्तज्वरहरपरम् ॥
शैवालिनी । स्त्री॰ नद्याम ॥
शैवी । स्त्री॰ शैवविवाहेनोद्वाहि तायाम ॥
शैब्य । पुं॰ श्रीकृष्णरथस्याश्ववि शेषे ॥ यथा । तुरगाः शैब्यसु ग्रीवमेघपुष्पवलाहका ॥ पाण्ड वानांसेनापतिविशेषे ॥
शैशवम् । न॰ शिशुत्वे । बाल्ये ॥ शिशोर्भाव कर्म्मवा । इगन्ता ल्लघुपूर्वादित्यण् ॥
शैशिर । पुं॰ श्यामचटके ॥ दन्त रोगविशेषे ॥ त्रि॰ शिशिरसम्ब न्धिनि ॥
शैशुमारम । न॰ शिशुमाराकारे ज्योतिश्चक्रे ॥
शाक्त : । पुं॰ मन्त्री । शुचि । व्या

अनुकम्पये

शोच्यक । त्रि० ध्रुद्रे ॥

शोठ' । त्रि० मूर्खे ॥ अलसे ध० ॥ र्त्ते । नीचे ॥ पापरते ॥

शोण । पु० कृशानौ । वन्ही ॥ श्योनाके ॥ लोहितोश्वे ॥ नदविशेषे । हिरण्यवाहौ ॥ योयममरकण्टक देशात्पाटलिपुत्रं गङ्गायामिलित. ॥ समुद्रविशेषे ॥ रक्तवर्णे ॥ लवणाम्बुधे पारस्थे रक्तजले ऽगाधेशोणगासिन्निप्रस्रवेपाश्वर्वे त्तिं जितदविशेषे ॥ अनुत्कटरक्ते । कोकनदवर्णे ॥ श्योनाकप्रभेदे ॥ न० सिन्दूरे ॥ रुधिरे ॥ त्रि० कोकनदच्छाये । कोकनदव र्णवति ॥ शोणति । शोणुवर्णग त्यो' । घञादाच ॥ रक्तवर्णे ॥

शोणक । पु० श्योनाकतरौ । शोनापाटो० कृ० भा० प्र० ॥ स्वार्थे क' ॥

शोणज्योतीरथीसङ्गम । पुं० तीर्थवि शेषे ॥

शोणझिण्टिका । स्त्री० रक्तसैरेये ॥

शोणझिण्टी । स्त्री० कुरवके ॥ काण्टकिन्याम् ॥

शोणपत्र । पु० रक्तपुनर्नवायाम् ॥

शोणपद्मम् । न० ) रक्तपद्मे ॥
शोणपद्मकम् । ) 

शोणपुष्प' । पु० ) कुद्दालि
शोणपुष्पक । ) 
कोविदारे ॥ शोणानि० तद्वर्णा न्तिपुष्पाण्यस्य ॥

शोणपुष्पी । स्त्री० सिन्दूरपुष्पयाम् ॥

शोणप्रभव । पु० तीर्थ विशेषे ॥

शोणरत्नम् । न० पद्मरागमणौ ॥ माणिक्ये ॥ शोणञ्चतद्रत्नञ्च '

शोणा । स्त्री० शोणवर्णयुक्तायाम् । शोणायाम् ॥ शोणोत्प्राचामित्यन्ये ण्ण्मतेटाप् ॥

शोणाक । पु० श्योनाकवृक्षे । शुकनासे ॥

शोणितम् । न० रुधिरे । रक्ते ॥ कुङ्कुमे ॥ शोणतिस्म । शोणु० । गत्यर्थे तिक्त ॥

शोणितचन्दनम् । न० रक्तचन्दने ॥

शोणितपुरम् । न० बाणासुरपुरे सराहृण० कृ० भा० प्र० । शोणितसंज्ञकपुरम् ॥

शोणितकृम् । न० कुङ्कुमे ॥

शोणितोत्पलम । न० रक्तोत्पले ॥

शोणी । स्त्री० रक्तायाम् । रक्तोत्पलवर्णायाम स्त्रियाम् । शोणात्प्रा चामितिवाङीप् ।

शोणोपल । पु० माणिक्ये ॥

शोथ । पु० शोफे । श्वयथौ । त्वग्विवर्द्धने ॥ श्वयति । श्वगतौ । बाहुलकात्० थ । च्छ्वोरित्यूठ् ।

सदुत्तरकारुवपु सुधीरम सत्का नयुक्तामनुज . प्रवोध . ॥ शोभ नकृतिवत्सरे ॥ तत्फलयथा । सु भिक्ष धर्मसारोद्य ब्रह्मगोब्रःह्मणा प्रिये । सुस्थिता. शोभनेवर्षेप्रजा सर्वा . सुशोभने ॥ १७ ॥ न० वारिणि । पद्मे ॥ त्रि० सुन्दरे । सुषमे । मनोज्ञे ॥ शोभते । शुभदीप्तौ । अनुदात्त तस्तात्यु च् ॥ शोभयति । नन्द्यादित्त्वाद् वा ॥

शोभनक । पु० शिग्रौ ॥

शोभनकृत् । पु० शोभनेवर्षे ॥ त्रि० शोभनकारके ॥

शोभना । स्त्री० गोरोचनायाम् ॥ हरिद्रायाम् ॥ दू० रा० ट ॥

शोभनीय । त्रि० शोभितव्ये ॥

शोभमान । त्रि० विराजमाने ॥ यथा । मयि . शाखोलीढ० समरविजयोद्वेलितद्विशिरो० मदश्चो योनाग मरदिसरित . स्नानपु लिना . । कलामिवचन्द्र सुरत मृदितावालवनितातमिस्त्राशोभन्ते गलितविभवाश्चार्थिषु नृपाइति ॥

शोभा । स्त्री० कान्तौ । द्युतौ ॥ पक्षालचण यथा । साशोभारूप भोगाद्यैर्यत्स्यादङ्गविभूषणम् । शोभैवकान्तिराख्यातामन्मथाप्या यनोल्ज्वलेति । हरिद्रायाम् ॥

गोपोविशेषे ॥ गोरोचनायाम ॥ हरिद्रायाम् ॥ कृतिच्छन्द २० प्रभेदे ॥ यथा । रसाश्वाश्वै शो भानयुगलजठरामेघविस्फूर्जिता चेत् ॥ यथा । सपीयूषोन्मील तृसरसिजयुगलामध्यनम्राफलाभ्या कृतवोरूच्चराजत्तरलकिसलयाश्लि ष्टसुस्निग्धशाखा । लसन्मुक्तार क्तोत्पलकुवलयवच्चन्द्रबिम्बाश्रिता यामत्राशोभाभीलोमिलद्दलिपट- लो कृष्णसाकापिवल्ली ॥ शोभय ति । शुभसुम्भशोभायाम् । पचा द्यच् ॥

शोभाञ्जन । पु० शिग्रौ । तीक्ष्ण गन्धके । अक्षोवे । मोचके । स हिजना० सुभञ्जना० दू० भा० प्र० ॥ शोभाञ्जन . कटुस्तिक्त शो थविद्रधिगुल्मनुत् ॥ शोभामन क्ति । अञ्जूव्यक्तिम्रक्षणकान्तिगति षु । कर्त्तरिल्युट् । बहुलमन्य त्रापीतियुक्त्वा ॥

शोभित । त्रि० शोभायुक्ते ॥

शोभनी । स्त्री० शोभनीयायाम् ॥

शोली । स्त्री० वनहरिद्रायाम् ॥

शोष । पु० शोषणे ॥ यक्ष्मणि ॥ सम्रोमथाद्रसादीनांशोषक्लमभि धीयते ॥ अस्योषधयथा । वचा शिवाटरूषकबृहत्कर देवदारुच । अश्विन्याविफलाश्वेताश्रिरोणिरज-

शौण्डिकः । पुं॰ जातिविशेषे । शा
सुतोवणिक् । मण्डहारके । शूंडी॰ क
लवार॰ इ॰ भा॰ प्र॰ ॥ अस्योत्प
त्तिर्यथा । ततोगान्धिककन्यायाम्
वसादेवशौण्डिकः । कैवर्त्तस्य च
कन्यायां शौण्डिकाद्रसौण्डिक
॥ इ॰ प॰ पु॰ ॥ शुण्डासुरा॰ पण्य
मस्य । तदस्य पण्यमिति ठक् । शु
ण्डिकाद्यागतोवा । शुण्डिकादिभ्यो
ण् ॥

शौण्डी । पुं॰ शौण्डिके ॥

शौण्डी । स्त्री॰ पिप्पल्याम् ॥ चव्ये
॥ कटभ्याम् । मधुरेणौ ॥ शुण्डा
यामद्यपानगृहेभवा । तत्रभवइत्य
ण् । ङीप् ॥

शौण्डीरः । त्रि॰ शूरे । अहङ्कारिणि
॥ शौटति । शौट॰ । औणादिक
ईरन् । पृषोदरादित्वान्नुम् ॰ टस्य
डश्च ॥

शौण्डीर्य्यम् । न॰ पौरुषे ॥ शौर्य्ये ॥
भावे॰ ष्यञ् ।

शौद्र । पुं॰ द्वादशविधपुत्रान्तर्गतपु
त्रविशेषे । पारशवे । त्रि॰ शूद्रस
म्बन्धिनि ॥

शौद्धोदनिः । पुं॰ शाक्यवंशीयमुनि
विशेषे । सर्वार्थसिद्धे । गौतमे ।
मायादेवीसुते । शुद्धोदनस्य नृपति
विशेषस्यापत्यम् । अतइञ् ।

शौधिका । स्त्री॰ रसवल्लीह॰ हे॰

चन्द्र ॥

शौनः । त्रि॰ पशुघातिनि ॥

शौनकः । पुं॰ ऋषिविशेषे । अतिध
न्वनि ॥ शुनकस्यापत्यम् । विदा
द्यञ् । कापेयेमुनिविशेषे ॥

शौभः । पुं॰ निलिम्पे । देवे । सुरे
॥ गुवाके । न॰ व्योमपुरे । हरिश्च
न्द्रपुरे । हरचंद्रावली॰ इ॰ भा॰प्र॰
॥ त्रि॰ शुभान्विते ॥

शौभाञ्जनः । पुं॰ शिग्रौ ॥ शोभाञ्ज
नवृक्षे । प्रज्ञायाम् ॥ अक्षमोचक
कारस्तु । शिग्रुमूलफलपुष्पकप्रस्त
तैलपक्वमुदकेप्याधश्चितम् । शिग्र
सैन्धवरसोयुतशिग्रुजावतैसपदिष्टो
पनसमन्ने ॥ शिग्रुकः कटुतीक्ष्णो
ष्णः वायुगोधसमीरजित् । क्रिमि
हृत्कासदोषप्रशमयतिशोथशुक्राच ।

शौभाञ्जनफलम् । न॰ शिग्रुफले ॥
शोभाञ्जनफलस्यगुणायकफपित्त
नुत् । शूलकुष्ठक्षयश्वासगुल्मघ्नो
पन परम् ॥

शौभिकः । त्रि॰ इन्द्रजालिके । कुह
काकारिणि ॥ इ॰ हारावली ॥

शौरिः । पुं॰ वसुदेवे । वासुदेवे ॥ श्री
कृष्णे ॥ शूरस्यापत्यम् ॰ वंशजत्वात्
। इञ्चिन्तेनमध्यमपदलोपीत्यवाभा
व्यम् । तथापितावादित्वादिञ् ।
शनैश्चरे ॥

शौर्य्यम् । न॰ आरभट्याम् ॥ बले ।

शष्कौ ॥ शूरश्चकर्म भावेवा । ष्यञ् ॥ उत्साहे ॥

शौल्क । पु॰ शुल्कसम्बन्धिनि ॥

शौल्कशालिक । पु॰ शुल्कशालाया आगतार्थे ॥ आगतार्थे ठक् ॥

शौल्किक । त्रि॰ शुल्काध्यक्षे ॥

शौल्किकेय । पु॰ विषप्रभेदे ॥ शुल्किकदेशभव । इतिकुक्षौ तियो गविभागाट्ठञ् ॥

शौल्विक । पु॰ कसकारे । ताम्रकुट्टके । कसेरा॰ कु॰ भा॰ प्र॰ ॥ शुल्वाघट्टन शिल्पमस्य । शिल्पमिति ठक् ॥

शौव पु॰ श्वभिहष्टे सामविशेषे ॥ इष्ट सामेत्यण ॥ न॰ शुनासमूहे । खण्डिकादित्वाद्ञ् ॥

शौवस्तिकम् । त्रि॰ श्वश्रिदिनस्थायिनि द्रव्ये । श्वस्तने ॥ श्वोभवम् । श्वसस्तुट्चेति॰ ठक । ऐजागम ॥

शौवापदम् । त्रि॰ श्वापदे । श्वापदसम्बन्धिनि ॥ श्वापदस्येदम् । अण् । पदान्तस्यान्यतरस्यामितिपर्च॰ ऐच् ॥

शौषिर । पु॰ दन्तरोगविशेषे । यथा । श्वयथुर्दन्तमूलेषुरुजावान् कफरक्तज । लालास्रावीसविज्ञेय । शौषिरोनामनामत ॥ ४ ॥

शौष्कल । पु॰ शुष्कमांसस्यापणिके । कि॰ पिशिताशिनि ॥ शुष्कशौष्कमांस॰ मांसमात्र वाऽस्ति । शेषकूल्यच ॥

श्च्योत । पु॰ प्राघारे । क्षरणे ॥ श्च्योतनम् । श्च्युतिर्क्षरणे । घञ् ॥

श्च्योतन् । त्रि॰ क्षरति ॥

श्म । न॰ नाम्त ॰ मुखे ॥

श्मशानम् । न॰ प्रेतदाहभूमौ । श्मश्माने । पितृवने ॥ शवा शेरतेऽत्र॰ शवानाशयन वा । पृषोदरादित्वात्साधु ॥ श्मशब्देनशव प्रोक्त शानशयनमुच्यते । निर्वचन्ति श्मशानार्थ मुनेशब्दार्थकोविदा ॥

श्मशानकाली । स्त्री॰ कालीविशेषे ॥

श्मशानवासी । पु॰ शिवे ॥ त्रि॰ श्मशानवासकर्त्तरि । श्मशानेवस्तु शीलयस्य । वस॰ । सुप्यजातौणिनि ॥

श्मशानवासिनी । स्त्री॰ कालिकायाम् ॥

श्मशानवेश्मा । पु॰ गिरिशे । शम्भौ ।

श्मशानालयवासिनी । स्त्री॰ कालिकायाम् ॥ श्मशानालयेवस्तु शीलमस्या । णिनि । ङीप् ॥

श्मश्रु । न॰ पुमुखेलोमद्दृढौडाढीइ ॰ भा॰ वीरश्मश्रुधारयतामप्याभवतिसन्ततिरितिदानधर्मे भारतम् ॥ श्म॰ मुखश्रयति । श्रिञ्॰ । श्मनिश्रयतेड्रुन् । यद्वा । श्मनिमुखे शृयते॰ उपलभ्यते । शृ॰ । मिते

द्वादित्वात् ङ । क्लिब्वा । आग मशास्त्रस्यानित्यत्वान्नतुक् ॥

श्मश्रुमुखी । स्त्री॰ श्मश्रुयोषिति । पो टायाम ॥

श्मश्रुल । त्रि॰ प्रवृद्धश्मश्रुरोमवति । सिध्मादित्वाल्लच् ।

श्माशानिक । पु॰ पितृवनेपाठादि कर्त्तरि । तसाधिन्त्रा॰ कृ॰ भा॰ प्र॰ । श्मशानेऽधीते । अध्यायिन्य देशकालादितिठक् ।

श्याम त्रि॰ शीतात्सङ्कुचिते । स ङ्कुचितमार्गे ॥ श्यायतेक्त । श्यै ङ् गतौ । क्त । संयोगादेरातोधा तोर्यण्वत इति निष्ठानत्वम ॥

श्याम । पुं॰ प्रयागस्थवटे । वारिदे ॥ हवुषदारुणि । पिके । कोकिले ॥ कृष्णवर्णे ॥ हरिद्वर्णे ॥ श्यामाके ॥ नीलवर्णे ॥ धत्तूरे ॥ दमनकवृक्षे ॥ गन्धतृणे ॥ न॰ मरिचे ॥ सिन्धुलवणे ॥ त्रि॰ कृष्णवर्णवि शिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेम नोयस्मात् । श्यैङ् । इषियुधीन्धि दसिश्याधूसूभ्योमगितिमक् ॥ पु॰ ऋषभाद्रिजाते॰ तमालदलनि भे॰ चन्दनविशेषे ॥ श्रीकृष्णे ॥

श्यामक । पुं॰ श्यामाके । सांवा इतिभाषाप्रसिद्धे । न॰ रोहिष तृणे ॥ श्याम वर्णम् अस्ति । अ र्श॰ । कर्मण्यण् । मतान्वादि ॥

श्यामकण्ठ । पुं॰ मयूरे ॥ शिवे ॥ पक्षिविशेषे ॥

श्यामकन्दा । स्त्री॰ अतिविषायाम् ॥

श्यामकाण्डा । )
श्यामग्रन्थि । ) स्त्री॰ गण्डदूर्वाया म् ॥ गण्डाल्याम् । नीलदूर्वाया म् ॥

श्यामपत्र । )
श्यामपत्रक । ) पु॰ तमालपादपे ॥

श्यामल । पु॰ पिप्पले ॥ कृष्णे । श्यामे ॥ नीलमार्कवे । त्रि॰ कृष्ण वर्णविशिष्टे । सिध्मादित्वाल्लच् ॥

श्यामलचूडा । स्त्री॰ गुञ्जायाम् ॥

श्यामलता । स्त्री॰ शारिवायामोषधौ ॥ श्यामलिनि ॥

श्यामला । स्त्री॰ पार्वत्याम् । कस्तू र्याम् ॥ पञ्चगन्धायाम ॥ जम्ब्वा म् ॥ कटभ्याम् ॥

श्यामलिका । स्त्री॰ नील्याम् ॥

श्यामलिन् । पु॰ कृष्णे वौ ॥

श्यामवल्क । पु॰ शिरीषे ॥

श्यामसुन्दर । पु॰ श्रीकृष्णे ॥

श्यामशालि । पु॰ कृष्णशालौ ॥

श्यामा । स्त्री॰ कालिकायाम् । दुर्गा याम । पार्वत्याम् ॥ श्यामायाउ त्पत्तिर्यथा । ततः सा कालिकादे वीयोगनिद्राजगन्मयी । पूर्वस्य सतीरूपाजन्मार्थमेनकायशौ ॥ समयश्चानुरूपेणमेनकाजठरेशिवा

। समभूयचसमुत्पन्नासालक्ष्मीरिव सागरात् ॥ वसन्तसमयेदेवीनवस्यां मृगयोगत । अहँराश्रौसमुत्पन्नाग ङ्गेयशशिमण्डलात् ॥ ततस्तस्यान्तु जातायाप्रसन्नाश्चाभवन्दिश । सा नुकूलोववौवायुर्गन्धीरोगन्धिल शुभ ॥ बभूवपुष्पवृष्टिश्चतोयवृष्टि परातथा । जज्वलुश्चाग्नय शा न्ताजगर्जुश्चघनाघनम् ॥ तस्यान्तु जायमानायासर्वंलास्यामपद्यत । तान्तुदृष्ट्वायथाजातांनीलोत्पलदला नुगाम् ॥ श्यामांसामेनकादेवीमु दमायातिहर्षिता । देवाश्चहर्षम तुल प्रापुस्तत्रमुहुर्मुहु ॥ तुष्टुवु स्तामन्तरीक्षेगन्धर्वाश्चापरीगणा । । तान्तुनीलोत्पलदलश्यामांहिमव त सुताम् ॥ कालीतिनाम्नाहिमवा नाजुहावकृतेद्विने । बान्धवास्तुस सन्तानांनाम्नांतांपार्वतीतिच ॥ का लीतिचतथानाम्नाकीर्तितागिरिन न्दिनीतिकालिकापुराणे ४० अ ध्याय ॥ शारिवौषधी ॥ कृष्णाश्वे ताशारिवायासाश्यामेतिनिगद्यते ॥ अप्रसूताङ्गनायाम् ॥ नारीविशे षे । यौवनमध्यस्थायाम् ॥ तस्याल क्षण यथा । स्निग्धनखनयनदशना निरतुशयामानिनोस्थिरस्नेहा । सु स्पर्शशिशिरमांसलवराङ्गनासाम ताश्यामेति ॥ छायायाम् । भावा नुरूपायाम् ॥ प्रियङ्गौ ॥ वाशुजी । सोमलतायाम् ॥ यमुनायाम् ॥ त्रियामायाम् ॥ कृष्णत्रिवृत्तिकौष धौ । यथा । श्यामात्रिवृतततोह्री नगुणातीव्रविरेचिका । मूर्च्छादा हमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ नीलिकायाम् ॥ गुग्गुलौ ॥ गु न्द्रायाम् । गुडूच्याम् ॥ कस्तूर्या म् ॥ वटपत्र्याम् ॥ वन्ध्यायाम् । रजन्याम ॥ नीलपुनर्नवायाम् ॥ पिप्पल्याम् । कृष्णायाम् ॥ ह रिद्रायाम् ॥ नीलगव्याम ॥ नील दूर्वायाम् ॥ स्त्रियाम ॥ पद्मबीजे ॥ शिशपायाम् ॥ पक्षिविशेषे । वा राह्याम् । पाण्डुरिकायाम् । श कुन्याम । पीतक्याम । कालिका याम । शितिसिम्बिन्याम् ॥ श्या मोवर्णोऽस्त्यस्या । । अर्श आद्यच् ॥ मगन्ताद्दाटाप् ।

**श्यामाक** । पु० तृणधान्यभेदे । श्या मके । श्यामेचिवौजे । ऋषिप्रिये । राजधान्ये । सावां० सांवक० हू० भा० प्र० ॥ श्यामाक । शोष णोरूक्षोवातल । कफपित्तहृत् ॥ श्यायती । श्यैङ्० । पिनाकादय श्चेतिसाधु ॥ यथा । श्याम वर्णं म० अकति । अक० । कर्मण्य ण् ॥

**श्यामाङ्ग** : । पुं० बुधग्रहे ॥ त्रि० श्या

श्येन । पु॰ पक्षिविशेषे । शशादने । पक्षिणि । राज॰ इ॰ प्र॰ ॥ महाकायेमन्दवेग श्येनइति व्याख्यातार ॥ श्यायते । श्यैङ्॰ । शास्याहृञविभ्यइनच् । पाण्डुरे । शुक्ले ॥ त्रि॰ तद्वति ॥

श्येनघण्टा । स्त्री॰ दन्तीवृक्षे । एरण्डफलायाम् ॥

श्येनचित् । पु॰ चाह्वनीयधारणार्थं॰ इष्टकाभिर्निर्मितस्थलविशेषे । श्येनइवचित । चिञ॰ । कर्मण्यन्याख्यायामिति क्विप ॥

श्येनजीवी । पु॰ क्रयविक्रयादिना श्येनैर्जीवति॰ तस्मिन् ॥

श्येनी । स्त्री॰ शुक्लवर्णायाम् । वर्णादनुदात्तात्तोपधात्तोनइति॰ ङीप्॰ तकारस्यनकारादेशश्च ॥ त्रिष्टुपछन्द ११ प्रभेदे ॥ यथा । श्येन्युदीरितारजोरजौगुरू ॥ यस्यकीर्तिरिन्दुकुन्दचन्दनश्येन शेषलोकपावनीसदा । तङ्गवीव विश्ववन्द्यविक्रमातभजामिभावगम्यमच्युतम् ॥ श्येनयोषिति ॥

श्येनीपुत्र । पु॰ जटायुषि । सम्पातेरनुजे । दशरथराजसखे ॥

श्येनम्पाता । स्त्री॰ मृगयायाम् ॥ पतनम्पात॰ । श्येनस्यपात॰ । कर्त्तृषष्ठ्यासमास । श्येनपातोऽस्यांवर्त्तते । घञ साक्षात्क्रियेतिञ । श्येनतिलस्यपातेञ॰ इतिमुमागम ॥

श्योनाक । पु॰ श्योनाकद्रुमे । सोनागाछ इ॰ गौ॰ भा॰ प्र॰ ॥ अस्यपर्याययथा । मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुका । स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटा ॥ शोणकश्चारलाविति । सोनापाठा॰ इ॰ भा॰ प्र॰ । अस्यगुणा यथा । श्योनाकोदीपनपाककटुकस्तुवरोहिम । ग्राहीतिक्तोनिलश्लेष्मपित्तकासामनाशन ॥ टुण्टुकस्यफलबालरूक्षवातकफापहम् । हृद्यकषायमधुररोचनलघुदीपनम् । गुल्मार्शकृमिहृत्प्रौढगुरुवातप्रकोपणम् ॥ श्यायते । श्यैङ्गतौ । पिनाकादौ निपातित॰ ॥

श्रत् । अ॰ श्रद्धायाम् ॥

श्रथनम् । न॰ वधे ॥ यत्ने ॥ पुनःपुनर्हर्षणे ॥ बन्धने ॥ मोचने ॥ शिथिलीकरणे ॥

श्रद्दधान । त्रि॰ श्रद्धायुक्ते । श्रद्धावति । यथा । श्रद्दधानशुभांविद्यामाददीतावरादपि । अन्त्यादपिपरंधर्मंस्त्रीरत्नंदुष्कुलादपीति ॥ श्रत्॰ श्रद्दधनोविभाण ॥

श्रद्धा । स्त्री॰ सम्प्रत्यये । आदरे । आस्तिक्यबुद्धौ । शास्त्रार्थप्रत्यये ॥

मे । आयासे । व्यायामे ॥ तपसि ॥ खेदे । गमनादिप्रयुक्तखेदादौ । श्रम · खेदोऽध्वरथादेरितिलक्षणम् ॥ आम्यत्यनेन । श्रमुतपसिखेदे । घञ् । नोदात्तोपदेशस्येतिवृद्ध्यभाव ॥

श्रमण · । पु · तपस्विनि । श्रमणा परिव्राड्डितिपूज्यपादाः ॥ बुद्धभिक्षुके । निर्ग्रन्थे । यतौ । जति · · शू · भा · प्र · । न · श्रमे । त्रि · निन्द्यजीविनि ॥ तपस्विनि ॥ श्राम्यति । श्रमु · । ल्यु ॥

श्रमणा । स्त्री · सुदर्शनायाम । मांस्याम् । मुण्डीर्याम् । शबरीभेदे ॥

श्रमणी । स्त्री · चतुर्थाश्रमप्राप्तायाम् । तपस्विन्याम् ॥

श्रमवारि । न · आयासेनखेदविन्दौ ॥

श्रमी त्रि · श्रमयुक्ते ॥

श्रय . । पु · श्रयणे । आये । श्रयणम् । श्रिञ्सेवायाम् । एरच् ॥

श्रयणम् । न · आये । आश्रये । श्रिञो ल्युट् ॥

श्रव · । पुं · कर्णे । श्रवणे । श्रूयतेऽनेनश्रवणं वा । श्रुश्रवणे । ऋदोरप् ॥

श्रवण . । पु · नक्षत्रविशेषे । श्रवणायाम् । न · श्रुतौ । श्रोत्रकर्मणि । श्रुतिस्मृतीतिहासपुराणेषुशब्दतात्पर्यावधारणे । तदर्थनिर्द्धारणात्

कूलन्यायविचारे ॥ षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयेवस्तुनितात्पर्यावधारणे ॥ वेदान्तानामशेषाणामादिमध्यावसानत . । ब्रह्मात्मन्येवतात्पर्यमितिधी श्रवणं भवेदित्युक्ते ॥ आचार्यस्यमुखादेवश्रवणं सफलभवेत् ॥ कर्णेन्द्रियेणसगुणस्यनिर्गुणस्यवाशब्देनज्ञाने । सुनना · इ · भा · प्र · । पु · न · कर्णे । कान · इ · भा · प्र · ॥ कर्णपुंनपुंसकयो । श्रवणावनिलश्चेतिदर्शनात् । नस्त्रियाश्रवण कर्णइतिहैमसाद्व्यभिधानाच्च ॥ श्रूयतेऽनेन । करणे ल्युट् ॥

श्रवणद्वादशी । स्त्री · श्रवणानक्षत्रयुक्तायाभाद्रशुक्लद्वादश्याम् ॥

श्रवणशीर्षिका । स्त्री · श्रावणीवृक्षे । मुण्डीर्याम् ॥

श्रवणा । स्त्री · द्वाविंशतितमेनक्षत्रे ॥ तत्रजातस्यफलंयथा । शास्त्रानुरक्तोबहुपुत्रमित्र सत्पुत्रभक्तिर्विजितारिवर्ग । चेज्जन्मकालेश्रवणाह्वयस्यभेसोपुराणश्रवणेप्रवीण ॥ श्रावणपूर्णिमायाम् । श्रावण्याम् ॥ श्रवणेनयुक्तापौर्णमासी । नक्षत्रेणयोगः । तस्य · लुबविशेषइतिलुप् । टाप् । मुण्डीरीवृक्षे ॥

श्रवणाह्वा । स्त्री · मुण्डीरिकायाम् ॥

श्रव . । न · यशसि ॥ कर्णे ॥ श्रूयते

तम् । क्रियतेवापवर्ज्यितत्ततपा र्वणमितिस्थिति ॥ गोष्ठ्यांयत क्रियतेश्राद्धं गोष्ठीश्राद्धं तदुच्यते । बहूनाविदुषांसम्पत्तसुखार्थं पि तृतृप्तये ॥ क्रियतेश्राद्धयेयत्तुश्रा ह्मणानान्तुभोजनम् शुद्ध्यर्थमि तितत्प्रोक्तं वैनतेयमनीषिभि । निषेककालेसोमेषसोमन्तोन्नयनेत था । ज्ञेयं पुंसवनेचैवश्राद्धकर्मा ङ्गमेवच ॥ देवानुद्दिश्ययच्छ्राद्धंतद्दै विकमिहोच्यते । हविष्यं चविशि ष्टेनसप्तम्यादिषुयत्नत ॥ गच्छन् देशान्तरयत्तुश्राद्धंकुर्यात्तुसर्पिषा । यात्रार्थमितितत्प्रोक्तंप्रवेशेचनसंश य ॥ शरीरोपचयेश्राद्धमर्थोप चयएवच । पुष्ट्यर्थमेतद्दिज्ञेयमौप चयिकमुच्यते॰ इति ॥ पञ्चविधं मपिश्राद्धस्मृतिवचनात्तद्यथा । नि त्यं नैमित्तकंकाम्यंवृद्धिश्राद्धंतथैव च । पार्वणञ्चेतिमनुनाश्राद्धंपञ्च विधंस्मृतमिति । श्रद्धाचाक्ति । प्रज्ञाश्रद्धार्चाभ्योणइतिण ॥ य द्वा । श्रद्धाप्रयोजनमस्य । चूडा दिभ्यउपसङ्ख्यानमित्यण् ॥ कालाव च्छिन्नानुष्ठानमागमोक्तविधिनेत्यर्थ म् । यथाहभगवान्सदाशिव । आगमोक्तविधिंहित्वाय श्राद्धं कुरुतेनर । श्राद्धतज्ञफलंसोपि पितृभिर्नरकंव्रजेत् । ततृतीयंशो

चितसमपिण्डोमलमयोभवेत् । त स्मान्मर्त्यं प्रयत्नेनश्राद्धंरमतमा श्रयेत्तृप्ति ॥ त्रि॰ श्रद्धान्विते ॥ श्राद्धदेव । पु॰ यमके । धर्मराजे । यमे । श्राद्धस्यदेव ॰ अधिपा त्वात्॰ पितृपतित्वं हा ॥ श्राद्धप्रदेश । पु॰ श्राद्धतीर्थादिषु ॥ श्राद्धशाकम् । न॰ कालशाके ॥ श्राद्धिक । त्रि॰ श्राद्धिनि । अद्य तनएवश्राद्धान्नभोजिनि । श्राद्ध शब्द कर्मनामधेयतस्माधर्मद्रव्यो लाभश्चायावर्त्तते । श्राद्धभुक्तमनेन । श्राद्धमनेनभुक्तमिनिठनाविति ठन् ॥ श्राद्धमद्यज्ञविद्रव्ये ॥ श्राद्धी । त्रि॰ श्राद्धिके ॥ श्राद्धम नेनभुक्तमितीनि ॰ ॥ श्रान्त । पु॰ यतौ । शान्ते ॥ त्रि॰ क्लान्ते । श्रमयुक्ते ॥ श्राम्यति क्त ॥ श्रान्तक्लथ । त्रि॰ निवृत्तसन्तापे ॥ श्रान्तसंवाहनम् । न॰ श्रमान्वितस्या सनादिप्रदानद्वाराश्रमोपशमने ॥ श्राम । पु॰ मासि ॥ मण्डपे ॥ का ले ॥ श्रामणेर । पु॰ जिनभिक्षौ शिष्ये । चेलुके । मण्डपासके ॥ श्राय । पु॰ आश्रये । अयने ॥ श्रय णम् । श्रिञ् सेवायाम् । श्रिणीभु वोनुपसर्गइतिघञ् ॥ त्रि॰ श्रीदे वताकेऽचिरादौ ॥ श्रीर्देवताऽस्य

। षण् ॥
श्राव । पु॰ श्रवणे ॥
श्रावक । पु॰ शाक्यमुने शिष्ये ॥
काके । वायसे ॥ दूरध्वनौ । त्रि॰
श्रावयितरि ॥ श्रावयति । श्रु॰ ।
णवुल् ॥
श्रावण पु॰ मासविशेषे । नभसि
श्रावणिके ॥ श्रवणापौर्णमास्य
स्मिन् । सास्मिन्पौर्णमासीत्यर्थे वि
भाषाफाल्गुनीतिपाक्षिकोण ॥ श
ब्द ॥ श्रवणे नरः स्यात् । शेषहत्यण्
॥ पाषण्डे ॥ क्ल॰ मेदिनिकार: ॥
श्रावणा । स्त्री॰ दृष्ट्यालोकने ॥
श्रावणिक । पु॰ नभोमासि । श्राव
णे ॥ श्रवणापौर्णमास्यस्मिन्नस्ति ।
विभाषाफाल्गुनीश्रवणाकार्त्तिकीचै
त्रीभ्यइतिठक् ॥
श्रावणी । स्त्री॰ श्रवणायाम् । श्राव
णमासस्यपूर्णिमायाम ॥ अस्या
मृषितर्पणं भवति । तच्चकालादि
कमाहकालिदास: । पूर्णास्तकाल
समयाच्युतमारहान्तायापूर्णिमान
भसिसङ्गवगातुतस्य म । विद्यायु
तोतरक्षितासुनितर्पणं स्यात्तत्स
र्वमेभवतिवायदपातदान॥किंचितस
समिच्छतितदैवतर्पणं श्रुतीचस्मे
श्रुतिशाखिनोयदि । स्यात्सङ्गमे
वासतिसर्वशाखिनातर्पणं श्रा
वणशुक्लपञ्चमी स्यात्सङ्गवान्ते च
सुपाक्लतीस्यात्पूर्वान्विताचापिषमा
कयञ्च । तथासितापञ्चदशीसमु
त्तातथाष्टकेतत्समयाभिरुपे ।
ज्यो॰ २१ अध्याय । ४६ ४८ ।
श्रवणेनयुक्तापौर्णमासी । नक्षत्रे
ऽण् । ङीप् । मुण्डीर्याम् ।
श्रावस्ती । स्त्री॰ देशविशेषे । धर्मप
त्तने ॥
श्राविष्ठीय । त्रि॰ श्रविष्ठायांजाते
छण्प्रत्यय ॥
श्राव्यम् । त्रि॰ श्रुतिपथमधुरे ॥
श्रित: । त्रि॰ आश्रिते ॥ सत्कर्ते
॥ श्रयति । श्रिञ् । गत्यर्थाक
र्मकेतिकर्त्तरिक्त ॥
श्रितवान् । त्रि॰ श्रिते ॥ श्रिञ् ।
क्तवतु ॥
श्री । पु॰ सोमेश्वरमतेषड्रागान्तर्ग
तप्रथमरागे ॥ हनुमद्भरतयोर्मते
पञ्चमरागे ॥
श्री । स्त्री॰ वेशरचनायाम ॥ शो
भायाम् ॥ भारत्याम । सरल
त्याम् ॥ लवङ्गे ॥ सरलद्रुमे ॥
लक्ष्म्याम् । पद्मालयायाम् । प
द्मायाम् । कमलायाम् । हरि
प्रियायाम् ॥ त्रिवर्गसम्पत्तौ ॥
विधायाम् ॥ उपकरणे ॥ वि
भूतौ ॥ मात्मानमनमथ्य तपूर्वा
भिरसस्रुबिभि । मामुखौ : अयम
त्यक्ले मामत्यं तहुणभाम् ॥ म

ती ॥ बिल्वद्रुमे ॥ ध्रवृत्ती ॥ अ धिकारे ॥ प्रभायाम् ॥ कीर्त्तौ ॥ वृद्धौ ॥ सिद्धौ ॥ लवङ्ग्यामतरि ॥ तारायाम्, ॥ बुद्ध देव्याम् ॥ श्रयतिहरिम्॰ श्रय न्त्येतामितिवा । श्रिञ् ॰ । क्वि व्वचीति॰ क्विब्दीर्घौ ॥ कर्त्तरि विहितस्यक्विप कर्मण्यसम्भव क्वदिकारादिति ङीष तुन॰ क्तप्रत्य येऽयङ्कारङ्गतिव्याख्यानात् । कृ दन्त यदिकारान्तमितिपक्षेऽपि कार ग्रहणं तत्सामर्थ्यादेवकेवलग्रहणा त् । दुर्घटस्तु॰ङीषि॰श्रीमितापि रचितङ्कतीताह ॥ विद्याशक्तौ ॥ श्रयतिपारतन्त्र्याच्चिदात्मानमिति श्री ॥ राजलक्ष्म्याम् ॥ शरीर शोभायाम् ॥ सर्वोत्कृष्टत्वेना न्तस्थाश्रयतयास्थीक्रियतेप्रलयसुषुप् तादौसर्वभूतै रिताऽत्या॰ जीव स्योपाधिभूयामामविद्यायाम् ॥ देवादिनाम्न पूर्वश्रीशब्दप्रयोग कर्त्तव्यइत्याह । देवगुरु गुरुस्था नचैत्यचैत्याधिदेवताम् । सिद्धसि द्धाधिकारांश्चश्रीपूर्वं समुदीरयेदि तिप्रयोगसार, ॥ स्वर्गगामित्वा दिनासिद्धोऽधिकारीयेषांनराणा मितानेन॰ जीवतांश्रीशब्दादित्व माम्नोनतुमृतानांतथैता धुनिकशि ष्टानामाचार ॥ पत्रेश्रीशब्दद्

नप्रमाणयथा । षड्गुरौ स्वामि न पञ्चद्वेभृत्येचतुरोरिपौ । श्री शब्दानांवयमित्रएकैकपुत्रभार्य- योरिति ॥ उक्तथाया १ शक्तौ ॥ ग श्री । यथा । श्रीस्ते । सास्ता म ॥

श्रीकण्ठ । पु॰ नीलकण्ठे । शि वे ॥ कालकूटविषधारणात्॰ श्री शोभाकण्ठेयस्य । धृतकण्ठे विषघोरतत, श्रीकण्ठतामगेति नीलकण्ठस्तत ॥ कुरुजाङ्गल देशे ॥

श्रीकण्ठपदलाञ्छन । पुं॰ माल तीमाधवनाटककर्त्तरि॰ भवभू तिकवौ ॥

श्रीकण्ठसख । पुं॰ कुबेरे ॥ द्व॰ ष॰ युध ॥

श्रीकन्दा । स्त्री॰ वन्ध्याकर्कोटक्या म् ॥

श्रीकर । पु॰ विष्णौ ॥ स्मरतांस्तु वतांस्तुवतांकीर्त्तयतामर्चयतांभ क्तानांश्रियमोक्षसाम्राज्य लक्ष्मीक रोति । कृञोहेतुताच्छील्यानुलो म्येष्विति ट ॥ न॰ रक्तो त्पले ॥ वि॰ श्रीकारके ॥ करो ति । डुकृञ्॰ । अच् ॥ श्रिय कर ॥

श्रीकरण । न॰ लेखन्याम् ॥

श्रीकरी । स्त्री॰ शक्तिविशेषे ॥

गम्भार्याम् ॥ स्वार्थे कन् । इत्यः ॥

श्रीपर्णी । स्त्री॰ काश्मर्याम् । गम्भायाम् ॥ इठे । कुम्भयाम् । वा रिपर्ण्याम् ॥ श्रीयुक्तानिपर्णान्यस्या॰ श्रीपर्ण्यं पुष्पस्याःवा । पाक्कण्वंप र्णेत्यादिनाङीष् ॥ कट्फले ॥ शाल्मली ॥

श्रीपर्वत । प॰ श्रीशैले ॥ तीर्थविशेषे ॥

श्रीपिष्ट । पु॰ सरलद्रुमरसे । सरलद्रवे ॥ श्रिय सरलद्रुमस्यपिष्ट॰ तच्चूर्णेनजनितत्वात् ॥

श्रीपुत्र । पु॰ अश्वे ॥ कामदेवे ॥

श्रीपुष्पम् । न॰ लवङ्गे ॥ पद्मकाष्ठे ॥

श्रीप्रसूनम् । न॰ लवङ्गे ॥

श्रीफल । पु॰ विल्वे । मालूरे ॥ श्रीप्रद॰ श्रीप्रियवाफलमस्य । भ्रा वापार्थिवादि॰ । श्रीफलस्तुवरस्ति क्तोग्राहीरूक्षोग्निपित्तकृत् । वात श्लेष्महरोवल्योलघुरुष्णश्चपाचन । राजादनवृक्षे ॥

श्रीफला । स्त्री॰ आमलक्याम् ॥ नील्याम् ॥ क्षुद्रकारवेल्लयाम् ॥

श्रीफलिका । स्त्री॰ आमलक्याम् ॥ क्षुद्रकारवेल्याम् ॥ महानीलीवृक्षे ॥

श्रीफली । स्त्री॰ धात्र्याम् । आमलक्याम् ॥ नीलिकायाम् ॥

श्रीवल्ली । स्त्री॰ कटुफलायाम् ॥

श्रीभद्र । पु॰ चित्रगुप्तसुतेकायस्थजातिविशेषे ॥

श्रीभद्रा । स्त्री॰ भद्रमुस्तके ॥

श्रीभागवतम् । न॰ पुराणार्थे । महापुराणान्तर्गतपुराणविशेषे ॥

श्रीभ्राता । पु॰ घोटके ॥ विधौ । चन्द्रे ॥ समुद्रोत्पन्नत्वात् ॥

श्रीमान् । पु॰ तिलकवृक्षे । क्षुरके ॥ अश्वत्थवृक्षे ॥ शिवे ॥ विष्णौ ॥ कुवेरे ॥ इन्द्रे ॥ त्रि॰ मनोज्ञे ॥ धनिके । श्रीले ॥ सर्वातिशयितश्रि यि । अखण्डितैश्वर्यसम्पन्ने ॥ महाराजचक्रवर्त्तिनि ॥ श्री लक्ष्मी सम्पत्॰ शोभा॰ कान्तिर्वा॰ सा श्यास्मिनवास्ति । तदस्यास्त्यस्मिन्निति मतुप् । अचोयजूंषिसामा निसामिश्रीरमतासताम् । तथा युक्तामहात्मान . श्रीमन्त . शास्त्र सम्मता ॥

श्रीमति . । स्त्री॰ राधायाम् ॥

श्रीमती । स्त्री॰ श्रीयुक्तायाम् ॥ शैषि तामभिधानस्यपूर्वमेतत्प्रयोजयेत् ॥

श्रीमद . । पु॰ धनमदे । सर्वमदाधमे ॥ यथा । नक्षन्त्योगुणतोजोष्यान तुविभ्रुसौरभोगुण । श्रीमदाद्मिजात्यादिर्यत्रस्त्रीशूलमासव ॥ इत्यन्तेपणवेोयवनिदंयेरजितात्मभि । मन्यमानैरिमदेवमजरान्

ख्य० मङ्गलम् ॥

श्रीमल्लापहा । स्त्री० धूम्रपत्रायाम् ॥ गृध्रपत्रायां ॥

श्रीमस्तक । पु० रसोने ॥ ष्टू० वि० शेष ॥

श्रीमुख । पुं० सप्तमेवत्सरे ॥ तत्फलयथा । सुभिक्षं क्षेमारोग्यं वर्षाकाल सुशोभनम । सस्यवृद्धि विज्ञानीयात् श्रीमुखेसुरवन्दिते ॥ ७ ॥ न० शोभितानने ॥

श्रीमूर्त्ति । स्त्री० देवताविग्रहे ॥ विष्णुप्रतिमायाम् ।

श्रीयुक्तः । श्रीयुत । वि० लक्ष्मीविशिष्टे । श्रीमति ॥

श्रीरङ्ग । पुं० पुण्यक्षेत्रविशेषे । श्रीरङ्गाख्य महापुण्य क्षेत्रसन्निहितोहरिरितितत्त्वम् ॥

श्रीरस । पु० सरलरसे । श्रीवेष्टे ॥

श्रीराग । पुं० षड्रागान्तर्गततृतीयरागे ॥

श्रीराम । पुं० दशरथात्मजे ॥

श्रील । वि० श्रीमति । लक्ष्मीवति । लक्ष्मणे । श्रियायुक्ते ॥ श्रीरस्यास्ति । सिध्मादित्वाल्लच् ॥ श्रियलाति ब्लाला० आदाने । आतोनुपसर्गे कः ॥

श्रीलता । स्त्री० महाज्योतिष्मत्याम् ॥

श्रीवत्सः । पुं० विष्णोश्चिह्नविशेषे । अनुक्षवदुर्वासस पदाघातरूपरेखाविशेषे ॥ महापुरुषलक्षणभूते० व क्षस्थवक्षेतवर्णदक्षिणावर्त्तरोमावर्त्तविशेषेश्चा ॥ प्रदक्षिणावर्त्तविक्षिप्तरोमश्रीवत्ससहितञ्चविभूषिताङ्गमिति मत्स्यपुराणात् ॥ वदतिमङ्गलम् । वद्व्यक्तायांवाचि । पृषोदरादित्वात्सिकारलोपः । श्रीयुक्तोवत्स ॥ विष्णौ । लक्ष्मी । गृहविशेषे ॥ सुदर्शनाप्रभेदे । पड्ढीतवर्ण ॥

श्रीवत्सकी । पु० कृतवक्षावर्त्तहये ॥

श्रीवत्सभृत् । पुं० हरौ । विष्णौ ॥

श्रीवत्सलाञ्छन । पु० विष्णौ । श्रीवत्सोमहापुरुषलक्षणभूतवक्षोगतरोमावर्त्तविशेषोलाञ्छन चिह्नमस्येतिविग्रहः ॥

श्रीवत्साङ्क । पु० विष्णौ ॥

श्रीवराह । पुं० आदिवराहे । विष्णौ ॥

श्रीवल्लभ । पुं० परमात्मनि ॥ श्रिया विद्यायशोवैभवसदाकारे ॥

श्रीवाटी । स्त्री० नागवल्लीभेदे ॥

श्रीवारक । पु० शाकविशेषे । सितावरे । सूच्याख्ये । सूचीपत्रके । सिराला० सिरयारा० सिरियारी० ष्टू० भा० प्र० ॥ तच्छाकप्रकारोयथा । श्रीवारकंदलंग्राह्यमारनालेसुसाधितम् । पौष्टिकंतेलिकेनेतंसिकासमर्दं समन्वितम् । वातपित्त

रावत्याविवन्धाध्मानानाशिनी । क
फवातमूत्रकृच्छ्रीभेदिनीसारसाथ
नी । सा० श्रीवालीत्यर्थः ॥

श्रीवाली । स्त्री० श्रीवारकी० शाकवि
शेषे ॥

श्रीवास । पु० विष्णौ । नारायणे ॥
श्रियोवास । अस्यवसति० श्रीर
नपायिनी० वसतीत्यर्थः ॥ शिवे ।
हरे ॥ पङ्कजे । वृकधूपे । सरलद्र
वे । श्रीवेष्टे ॥ अस्यगुणाः । श्रीवा
सोमधुरस्तिक्तः स्निग्धोष्णस्तुवर
सर । पित्तलोवातमूर्द्धाक्षिस्वररो
गकफापहः । रक्षोघ्नःस्वेदहौर्गन्ध्
यूकाकण्डूव्रणप्रणुत् ॥

श्रीवास्तव । पु० चित्रगुप्तात्मजेकाय
स्थजातिविशेषे ॥

श्रीविद्या । स्त्री० महाविद्याविशेषे ।
परदेवतायाम् । त्रिपुरसुन्दर्याम् ॥

श्रीवृक्ष । पु० बिल्ववृक्षे ॥ अश्वत्थ
वृक्षे ॥ श्रीप्रदः श्रीप्रियोवावृक्षो
स्य । शाकपार्थिवादि ॥

श्रीवृक्षकः । पु० अश्वस्यावर्त्ते ॥

श्रीवृक्षकी । पु० श्रीवृक्षकावर्त्तविशि
ष्टेऽश्वे ॥ तल्लक्षणं यथा। वक्षोभवा
वर्त्तचतुष्टयस्यकण्ठेभवेद्यस्यवरोच
मानः । श्रीवृक्षकीनामहय . सभ
र्त्तुः . श्रीपुत्रपौत्रादिविवृद्धयेस्यादि
ति ॥ श्रीवृक्षकीवत्सिचिह्नोमावर्त्तो
सुखैदिचेतितु वैजयन्ती ॥

श्रीवेष्ट । पु० सरलद्रवसारसे । वृक्ष
धूपे । श्रीवासे । तस्यगुणायथा ।
श्रीवेष्ट कटुकस्तिक्तःकषाय श्ले
ष्मपित्तजित् । योनिदोषरुजाजीर्ण
व्रणाध्मानदोषनुत् ॥ श्रीसक्त्वा
० श्रियोवावेष्टोनियास ॥

श्रीश । पु० विष्णौ ॥ श्रीरामे ॥ श्रि
यईश . ॥

श्रीशैल । पु० भारतवर्षस्थेपर्वत
विशेषे ॥ सितितथाविधमनोविल
र्थासमर्थाश्रीश्रैलश्रृङ्गकुहरेषुकदोप
लभ्यं । गाव यथामरलता परिवे
ष्टयन्तिकार्य यथाविरचयन्तिखगाश्च
नीडम् ॥ इतियोगतारावली ॥

श्रीसञ्चम् । न० लवङ्गे । श्रिय सञ्ज्ञा
सञ्ज्ञायस्य ॥

श्रीहरि । पु० परमात्मनि ॥ श्रिय
जीवस्योपाधिभूतामविद्यांहरति०
आत्मज्ञानप्रदानेननाशयति० इति
श्रीहरि ॥ श्रियं दधाने । विष्णौ ॥

श्रीहस्तिनी । स्त्री० भूरुण्ड्याम् हाती
सूंडा० इ० गौ० दे० भा० प्र० ॥
श्रियाहस्त . ० श्रीहस्त । सविद्य
तेयस्याः । अतइनि . ॥ यद्वा । ह
स्तं गृह्णातिहस्तयति । अवश्यं श्रि
यहस्तयति । आवश्यकेतिणिनि ॥

श्रुङ्क्षा । स्त्री० सक्किकाद्वारे ॥
श्रुघ्नी ।

श्रुतम् । न० शास्त्रे ॥ शास्त्रविचारे ।

श्रुति .

दृत्त० सूत्रञ्च० द्वितीयाश्रुत्या० म न्तस्याङ्गाभिधानाच्चाङ्गत्वम् । यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्व सप्तमीश्रुत्या । एवमन्योपि विभक्तिश्रुत्या विनियोगोऽवसेय । पशुना यजेतेत्यत्रैकत्वपुंस्त्वयो सामानाधिकरण्यश्रुत्या कारकाङ्गत्वम् । य जेतेत्याख्याताऽभिहितसंख्याया भावनाङ्गत्वम् समानाभिधानश्रुतेरेवपदश्रुत्याचयाग ङ्गत्वम् ० नचामूर्त्तायास्तस्या कथभावनाङ्गत्वम ० कर्तृपरिच्छेदद्वारातदुपपत्ते । कर्त्तोवाच्चे पलभ्य ' ० चाख्यातेनहि भावनोच्यते० साचकर्त्तारविनाऽनुपपन्नेतितमाक्षिपति । सैयश्रुति लिङ्गादिभ्य प्रबला० लिङ्गादिषु नप्रत्यक्षोविनियोजक शब्दोऽस्ति० किन्तुकल्प्य । यावच्चतैर्विनियोजक शब्द कल्प्यते० तावत्प्रत्यक्षयाश्रुत्याविनियोगस्य क्लृप्तत्वन तेषांकल्पकत्वशक्तव्याहतत्वात् । च तएवैन्द्र्यालिङ्गन्नेन्द्रोपस्थानार्थत्वम्० किन्त्वैन्द्र्यागार्हपत्यमुपतिष्ठत इत्यत्र० गार्हपत्यमितिद्वितीया श्रुत्या० गार्हपत्योपस्थानार्थत्वम् ॥ अथदेवीगीतायांदेवीवाक्य यथा । सर्वज्ञाया . सर्वशक्तेर्मेवेद समुत्थित । अज्ञानस्यममाभावादप्रमाणानचश्रुतिरितिसर्वज्ञात्

श्रुति :

सर्वशक्तेश्चमत्तश्रुतिप्रादुर्भावोऽमत् स्वरूपादित्यर्थ ॥ प्रयोगविध्युप योगिनिप्रमाणविशेषे ॥ तच्चक्रमप रवचनश्रुति । तच्चद्विविधम् । केवलक्रमपरम् ० तद्विशिष्टपदार्थ क्रमपरञ्च । तत्रवेदङ्कृत्वावेदि करोतीतिकेवलक्रमपरम्० वेदि करणादेर्वचनान्तरप्राप्तत्वात् । वषट्कर्त्तु प्रथमभक्षइतिक्रमवि शिष्टपदार्थपरम्० एकप्रसरताभङ्गभयेनभक्षानुवादेनक्रममात्रस्यवि धातुमशक्यत्वात् । सेयंश्रुतिरितरप्रमाणापेक्षयाबलवती० सैवाव चनकल्पनद्वाराक्रमप्रमाणत्वात् । अतएवाग्निवनयहस्यपाठक्रमात्तृ तीयस्थानेयहस्यप्रसक्तावाग्निवनोद श्माग्निहोमदृष्टिवचनाद्दशमस्थानेय हणमित्युक्तम् ॥ कर्ण । अस्यप र्याया । कर्णशब्दपर्यायोक्तश्च श्रुति श्रोत्रवणा श्रव ' ॥ अस्यशुभाशुभ लक्षण यथा । रक्तास्त्यपक्वशष्कुल्य र्णा स्युपापमत्यत्र . । निर्मांसे चिपिटेभोगा, कूपकाङ्क्षककर्णका ॥ शङ्कुकर्णाश्चराजानोरोम कर्णा शतायुष । इस्तत्कर्णाश्च राजानोधनिन परिकीर्तिता ॥ श्रवणे । वाक्यजनितवाक्यार्थविज्ञाने ॥ मननिदिध्यासन सहकृतेश्रवणज्ञाने ॥ श्रोचकर्मवि॥

ति । व्याघ्रीवास्ते जराचायुर्याति भिन्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रोगास्तस्माच्छ्रेय समाचरेत् ॥ यावन्नाश्रयतेदुःखं यावन्नायान्तिचापदः । यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समाचरेत् ॥ कालोगच्छतिनानाकार्यैः स सारसम्भवे । सुखदुःखैर्जनोऽत्यन्तनविन्द्तिहितमात्मनः इतिकुलाणवेप्रथमोल्लासः ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितप्राणिनामभ्युदयनिःश्रेयससाधने० प्रवृत्तिनिवृत्तिलक्षणे ॥ पुण्ये ॥ त्रि० अतिप्रशस्ते । शस्ते ॥ इदमनयोरतिशयेनप्रशस्तम् । द्विवचनेतीयसुन् । प्रशस्यस्यश्र । विद्याद्यधिके ॥ धर्मार्थावुच्यतेश्रेयः कामार्थौ० धर्मएवच । अर्थएवेहवाश्रेयस्त्रिवर्गइतितुस्थिति ॥ अयमुपदेशोऽभुभ्त्सून्प्रतिबोध्य ॥

श्रेयसी । स्त्री० करिपिप्पल्याम् ॥ अभयायाम् ॥ पाठायाम् । शठाम्बायाम् ॥ श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयांस । पुं० हताईद्विशेषे ॥

श्रेष्ठ । पुं० कुवेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे । न० गोदुग्धे । गव्ये ॥ त्रि० प्रधाने । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्यः । अतिशायनेतमबिष्ठनाविति ष्ठन् । प्रशस्यस्यश्र ॥ प्रधानभूते ॥ ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठ । पुं० शाकवृक्षे ॥

श्रेष्ठता । स्त्री० श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री० स्थलपद्मिन्याम् ॥ उत्तमायांनार्याम् ॥ ज्येष्ठानक्षत्रे ॥

श्रेष्ठाम्लम् । न० वृक्षाम्ले ॥

श्रेष्ठी । पु० कुलोत्तमशिल्पिनि ॥

श्रोण । त्रि० अङ्घाहीनेपङ्गौ ॥ श्रोणति । श्रोणृसङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । श्रु० । बाहुलकान्न ॥

श्रोणि । स्त्री० कट्याम् ॥ श्रोणति । श्रोणृ० । इन् ॥ यद्वा । श्रूयतेपुंभि । श्रु० । वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिरितिनिः ॥ पथि ॥

श्रोणीफलम् । न० कटौ ॥

श्रोणीफलकम । न० कटिपार्श्वे । कटे ॥ श्रोणि फलकमिव० चर्माकारत्वात् ॥

श्रोणिबिम्बम् । न० कटिसूत्रे ॥

श्रोणिसूत्रम् । न० खड्गबन्धनसूत्रे । परतला० इ० भा० प्र० ॥

श्रोणी । स्त्री० कट्याम् ॥ पथि ॥ कृदिकारादितिपक्षेङीष् ॥

श्रोतव्य । त्रि० श्रवणीये । श्रोतुंयोग्ये ॥ श्रोतव्य श्रुतिवाक्यैर्व्योम

श्रौत । स्मार्त्तनियोगमात्मकइति माक्षे १२० अध्याय ॥

श्रौतयज्ञ । पु० अग्निहोत्रदर्शपौर्णमासादौ ॥ श्रुत्याप्रोक्तं श्रौतः । अण् । सचासौयज्ञश्च ॥

श्रौतसक्ति । स्त्री० वेदोक्तस क्रियायाम् । यथा । एवस्थलक्रिया सर्वाआगमोक्ता कलौशिवे । नान्य मार्गै क्रियासिद्धि कदापिएहमेधि नाम ॥ भैच्चुकीप्यामेदैविवेदो क्त दण्डधारणम् । कलौनास्ये वत त्वच्च वतस्तच श्रौतस क्तितिरिति म० नि० तन्त्रम् ॥

श्रौषम् । न० श्रोत्रियतायाम् । श्रोत्रियस्यकर्म भावोवा । युवादित्वा दण्० श्रोत्रियस्ययलोपश्च ॥ श्रोत्रा णांसमूहे ॥ भिक्षादण् ॥

श्रौषट् । अ० देवहविर्दाने ॥ श्रूयते ऽनेन । श्रु० । बाहुलकात्० डौषट् ॥

श्लक्ष्ण । त्रि० सोके । अस्यपर्यायाय था । सोकाल्पचुल्लका ' सूक्ष्मश्ल क्ष्णदभ्रकृशंतनु । स्त्रियांमात्राचुटि ० पुंसिलवलेशकणाणव ॥ इति ॥ मनोहरे ॥ सुखस्पर्शे । अपरुषि । स्निग्धे ॥ श्लिष्यते० श्लिष्यतिवा । श्लिषआलिङ्गने । श्लिषेरलोपधाया इतिक्स ॥

श्लक्ष्णकम् । न० पूगफले ॥

श्लक्ष्णतीक्ष्णायम् । न० शुद्धे । शूली ॥ श्लक्ष्णश्चतत्तीक्ष्णञ्च० तच्चतद यश्च ॥

श्लक्ष्णत्वक् । पुं० अश्मन्तकवृक्षे ॥ सु न्दरवल्कले ॥

श्लक्ष्णभूमि । स्त्री० कृष्णमृदि ॥

श्लथ । त्रि० शैथिल्ये । शिथिले ॥

श्लाघनम् । न० अभिनन्दने ॥

श्लाघा । स्त्री० अभिलाषे । इच्छाया म् ॥ उपासौ । परिचर्यायाम् ॥ प्रशंसायाम । अविद्यमानगुणसम्ब न्धज्ञापने ॥

श्लाघिष्ठ । त्रि० श्लाघ्यतमे ॥

श्लाघ्य । त्रि० प्रशस्ये । श्लाघनीये । स्तुत्ये ॥ आशास्ये ॥

श्लिकु । पु० सेवके । भृत्ये ॥ श्लिष्य ति० यावत्कार्यं लगतिव्याप्रियते । श्लिषआलिङ्गने । श्लिषि कषे ति कु कवान्तादेश ॥ सिद्धे ॥ न० ज्योति शास्त्रे ॥

श्लिषा । स्त्री० आलिङ्गने ॥

श्लिष्ट । त्रि० सम्पृक्ते । गत्यर्थाऽक र्मकेति० श्लिषि ' क्त । संयुक्त शब्दादौ । भिन्नार्थैकरूपान्वितवा क्ये ॥ तदुक्तंयथा । श्लिष्टमिष्टम विस्पष्टमेकरूपान्वितं वचइति ॥

श्लीपदम् । न० पादवल्मीकि । पाद वल्मीके ॥ अस्यनिदानन्तु । य सञ्ज्वरोवंक्षणयोर्भृशार्त्तिः शौ

साम्यस्यमायासितनुवर्त्तनम् ॥ भेदाभावात्प्रकृत्यादेर्भेदोपिनव मोभवेत् । नवमोपीत्यपिभिन्नक्रम ॥ उदाहरणम् । योऽसकृत्परगोत्राणांपक्षच्छेदक्षणक्षम । शतकोटिदतांबिभ्रद्विबुधेन्द्र सराजते ॥ अत्रप्रकरणादिनियमाभावात्. द्वावप्यर्थौवाच्यौ ॥ अर्थालङ्कारविशेषे ॥ तल्लक्षणादयोयथा । श्लेष सवाक्यएकस्मिन्यत्रानेकार्थताभवेत् ॥ एकार्थप्रतिपादकानामेवशब्दानायत्रानेकोर्थः सश्लेष । उदाहरणम् । उदयमयतेदिङ्मालिन्य निराकुरुतेत-राम्. नयतिनिधन निद्राम्रुद्राग्रसंयतिक्रिया । रचयतितरांस्वैराचारप्रवर्त्तनकर्त्तनम . बतबतलसत्तेज पुञ्जोविभातिविभाकर ॥ अत्राभिधायाअनियन्त्रणात्. द्वावप्यर्थभूपौवाच्यौ ॥ श्लेषणम् । श्लिष. । घञ् ॥ ऐक्ये ॥ श्लिष्यति । श्यादयपेलिष ॥

श्लेषणम् । न. एकीभवने ॥

श्लेष्मक । पु. कफे ॥

श्लेष्मकर । त्रि. कफवर्द्धकद्रव्येषु ॥ तानियथा । भोजनानन्तरक्षानजलपान तृषाविना । तिलतैलस्निग्धतक्रंस्निग्धामामलकोद्रवम् ॥ पर्युषिताम्नंतक्रंचपक्वरम्भाफल द

धि । मायाम्बुमत्स्यरालीयसुस्निग्धस्यावसेवनम ॥ नारिकेलोदकञ्चक्वानपर्युषितजलम् । तरुसुक्षापक्वफलमुपक्वा कर्कटीफलम् ॥ स्नातस्नानपुर्व्वर्षासुमूलकाध शेषकारणम् । तत्कालम्लानरम्भेषमक्षीयविनाशनमिति. ब्र. वै. १६ अध्याय ॥

श्लेष्मघना । स्त्री. मल्लल्याम् ॥ केतक्याम् ॥

श्लेष्मघ्न । त्रि. श्लेष्मनाशके ॥ न. मधुनि ॥ श्लेष्माणहन्ति । हन. । अमनुष्ये तिटक ॥

श्लेष्मघ्ना । स्त्री. मल्लिकायाम् ॥ कम्पल्लके ॥ दू. हि. न्द्र ॥

श्लेष्मघ्नी । स्त्री. मल्लिकायाम् ॥ ज्योतिष्मत्याम् ॥ टित्वान्ङीप ॥ चिकटुनि । व्योषे ॥ दू. मे. कर ॥

श्लेष्मण । पु. श्लेष्मले । बहुवारके ॥ सम्बिष्णुकाफे ॥ त्रि. श्लेष्मवति । श्लेष्माऽस्यस्य । पामादित्वान्न ॥

श्लेष्मणा । स्त्री. वृक्षभेदे । तर्पंगया म । गुरुस्कन्धे ॥

श्लेष्मा । पु. कफे ॥ तत्प्रकोपहेतुर्यथा । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिः प्रपूरैः । तुहिनपतनकालेश्लेष्मण समप्रकोप प्रभवति

ते ॥ श्लोकसङ्घाते । घञ् ॥

श्लोककार । पु॰ वाल्मीकिमुनौ ॥ श्लो

ककृति ॥ श्लोकं करोतिकर्मण्यण् ॥

श्लोक्य । त्रि॰ पुण्यकीर्त्तौ ॥

श्वःकार्य्यम् । न॰ आगामिन्यहनि

कर्त्तव्ये ॥ यथा । श्वः कार्यमद्य

कुर्व्वीतपूर्व्वाह्णेचापराह्णिकम् ॥

नहिमृत्युः प्रतीक्षेतकृतवाप्यथवा

कृतम् ॥ इतिकुलार्णवतन्त्रम् ॥

श्वःश्रेयसम् । न॰ शिवे । भद्रे ।

कल्याणे । मङ्गले । शुभे । प्रशस्ते

अर्थे परपदस्थाच्छ्वः शब्दः काल

वाच्यपि । अभिधत्तेस्वभावेन॰ तं

नेमीमङ्गलार्थंकाविततिपाणिनीयम

तदर्पण ॥ परमात्मनि । परान

न्दे । धर्मणि । शान्ते । सुखे ॥

श्वः आगामीश्रेयोऽत्र । श्वसोव

सीय श्रेयसच्छलच्समासान्त ॥

श्वः श्रेयदूतिविग्रहे॰ मयूरव्यंस

कादित्वात्समास ॥

श्वगण । पु॰ कुक्कुरसमूहे ॥

श्वगणी । त्रि॰ शुनांपोषके ॥ श्वगणो

। स्वयक्कूर्मि ॥

श्वगाही । त्रि॰ शुनांपोषके ॥ शुना

गाही ॥

श्वचक्रम् । न॰ कुक्कुरचेष्टायाम् ॥ म

ध्यवारःखाम् ॥

श्वदंष्ट्रक । पु॰ गोक्षुरे ॥

श्वदंष्ट्रा । स्त्री॰ गोकण्टके । गोक्षुरके

शुनोदंष्ट्रेव ॥

श्वधूर्त्त पु॰ शृगाले ॥

श्वा । पु॰ ग्राममृगे । अस्य पर्याया य

था । कौलेयक सारमेय कुक्कु

रोमृगदंशक । शुनकोभषकः श्वा

श्वादिति ॥ शुनोलक्षणं यथा । प

दा पञ्चनखास्त्रयो ऽग्रचरणा प

श्चिनंखंदंक्षिण स्तासौष्ठाग्रनखो

मृगोश्वरगतिर्जिघ्रन भुवं यातिच ।

लाङ्गूलसटा॰ हत्सहशो कर्णौच

लम्बौ मृदू यस्य स्यात् सकरोतिपो

ष्टुर्धचिरात्पुष्टांश्रयं वैगृहे ॥ इति

वाराही ॥ अस्यपरीक्षातुमृगयार्थं

शाकुनार्थं कौतुकार्थंमपेक्षिता ।

श्वान पोष्यास्ततस्तेषांमचवच्या

मिलक्षणम् ॥ गुणजातिप्रभेदेनशु

नोभेदाह्यनेकश । सात्त्विकाराज

सावैतामसाश्चत्रिधामाता ॥ च

ग्रान्ताश्चपरिक्षीणा पक्षिणा॰ स्व

ल्पभोजिन ।श्वानस्ते सात्त्विका

प्रोक्ताहश्यन्तेचक्वचित्क्वचित् ॥ १ ॥

क्रूराबहुभुजोदीर्घांगुरुवक्षसनूद्

रा । जाङ्गलेस्याक्षिकाश्चश्वान

स्तेराजसामता ॥ २ ॥ अल्पश्रमी

चयेश्वान्तालज्जिताशुरूदरा ।

श्वानस्तेतामसाज्ञेया सन्व्याव

नसमाश्रया ॥ ३ ॥ ब्रह्मादिजाति

भेदेनचतुर्द्धासर्वएवहि । शुभ्रादी ॥

र्घांसव्यकर्णालघुपुच्छास्तनूदरा

पाञ्चथा । वध्यवासांसिप्टञ्चैयु । मृत्याश्वाभरणानिचेतिमनु ।। च ण्डाल, श्वपच, क्षत्तासूतावैदेह कस्तथा । मागधायोगवौचैवसप्ते तेऽत्यावसायिनः ॥ इत्यङ्गिरा ॥ श्वपच । डोम॰ डुमडा॰ इ॰ भा॰ प्र॰ ॥ श्वानंपचति । डुपचष्॰ । पचाद्यच् ॥

श्वपदम् । न॰ कुक्कुरपादे ॥

श्वपाक । पुं॰ निषादे । चण्डाले ॥ तस्योत्पत्तिर्यथा । क्षत्तुर्जातस्तथो ग्रायांश्वपाकइतिकीर्त्त्यते॰ इतिम नु । शूद्रेणवैश्यायांजात क्षत्ता॰ क्षत्रियेणशूद्रायांजाताउग्रा॰ ते नतस्यांजात, श्वपाकइत्युच्यतइति कुल्लूकभट्ट ॥

श्वफल । पु॰ बीजपूरे ॥

श्वफल्क । पु॰ वृष्णिपुत्रे । अक्रूर पितरि ॥

श्वफल्कपुत्र । पुं॰ अक्रूराख्ययादवे॥

श्वभीरु । पु॰ फेरौ । शृगाले ॥

श्वभ्रम् । न॰ भूछिद्रे । तत्पर्याया यथा । कुहरशुषिरविवरबिलम् । छिद्र निर्व्यथन रोक रन्ध्र श्वभ्र वपा शुषिरिति ॥ श्वभ्रयति । श्वभ्रग तौ । श्वभ्र । पचाद्यच् ॥ श्वशो भनमभ्रव्योमायत्र ॥ विदीर्णभू भागे ॥

श्वयथु । पुं॰ शोथे । स्विवृद्धौ । श्वयति॰ श्वयनमनेनवा । ट्वओ श्विगतिवृद्ध्यो । ट्विताऽथुच् ॥

श्वयीचि । पु॰ चन्द्रे ॥ व्याधौ ॥ श्वयति । ट्वओश्वि॰ । श्वयती च्छिदितिईचि । गुणायादेशौ ॥

श्ववृत्ति । स्त्री॰ सेवायाम् । चाक री॰ इ॰ भा॰ प्र॰ ॥ सेवातुदीन दृष्टिस दर्शनस्वामितर्जननीचक्रिया दिधर्मयोगात्॰ शुनोवृत्तिरिव । शुनइववृत्तिर्वा । सेवाश्ववृत्तिरा ख्यातातस्मात्तांपरिवर्ज्जयेदिति मनु ॥

श्वव्याघ्र । पु॰ श्वापदे । व्याघ्रादि हिंस्रपशौ ॥

श्वशुर । पु॰ पुंल्ये ॥ पतिपत्न्यो पितरि ॥ पत्युः पितापत्न्याः श्व शुर॰ पत्न्या पितापत्युः श्व शुर ॥ शुङ्खास्य॰ पूर्जायांवा । शुश्रूषते॰ अश्नुतेवा । अशूव्या प्तौ॰ सङ्घाते च । आशुशीर्घ्राषि त्युरन् ॥

श्वशुरा । स्त्री॰ अ॰इत्याम् ॥

श्वशुरौ । पु॰ २ स॰ श्वश्रू॰ श्वश्रू श्वशुरयो ॥ श्वश्रूश्वश्वशुरस्त तौ । श्वशुर: श्वश्र्वेतिपाणि कएकशेष: ॥

श्वशुर्य्य । पुं॰ देवरे ॥ श्याले ॥ श्वसुरस्यापत्यम् । राजश्वशुरा द्यत् ॥

श्वाश्व । पु॰ भैरवे ॥

श्वास । पु॰ श्वसिते । प्राणेनवा युवायोरन्तः प्रवेशने । समाध्यङ्गे रेचकविरोधिनि । प्राणवायौ ॥ श्वसिति । श्वस॰ । भावाद्येतिघञ् ॥ रोगविशेषे ॥ पिशुनोनरकं स्याच्छ्रायतेश्वासकासवान् । घृततैलप्रदातव्यसश्वसपत्सस्मितमितिशातातपीयकर्मविपाके ॥ अस्यौषध यथाबिभीतकस्य चूर्णं मधुश्वासनाशनम् ॥ पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् । सर्वरोगज्वरश्वासशोषपीनसहृद्रोहितिगारुडे १८९ अध्याय ॥ प्राणे ॥ हारोद्घाटने ॥

श्वासकास । पु॰ श्वासयुक्तकासरोगे । श्वासजनककासे ॥ यथा । श्वासकृत्राभवेच्छ्वास पूर्णोवादोषकोपनेरितिगरुडपुराणम् ॥

श्वासकुठार । पु॰ । श्वासरोगऔषधविशेषे ॥ यथा । रसोगन्धोविषञ्चापिटङ्कणञ्चमनःशिला । एतानिकर्षमात्राणिमरिचञ्चाष्टकर्षकम् ॥ कटुत्रयकर्षयुग्मं पृथगत्रविनिक्षिपेत् । रस । श्वासकुठारोयं सर्वश्वासनिवारणइतिभावप्रकाशे ॥

श्वासप्रश्वासधारणम् । न॰ प्राणायामे । श्वासप्रश्वासयोर्धारणं यत्तत् ॥

श्वासहेति । पुं॰ निद्रायाम् । स्वापे ॥

श्वासारि । पु॰ पुष्करमूले ॥

श्वासी । पु॰ वायौ । त्रि॰ श्वासरोगिणि ॥

श्वित्रम् । न॰ श्वेतकुष्ठे । कुष्ठे ॥ श्वेततो । श्वितावर्णे । स्फायितञ्चीतिरक् ॥ अस्यौषधन्तु । धात्रीखदिरयोः क्वाथं पीत्वावल्गुजसंयुतम् । शङ्खेन्दुधवलं श्वित्रं हन्तिचूर्णनसंशयः ॥

श्वित्रघ्नी । स्त्री॰ पीतपर्णाम् । विकुटी॰ इति॰ गौ॰ भा॰ प॰ ॥

श्वित्री । त्रि॰ श्वेतकुष्ठवति । श्वित्रमस्यास्मिन्वास्ति । अतइनिठनावितीनि ॥

श्वेत । पुं॰ शुभ्रवर्णे । सपेद॰ इ॰ भा॰ ॥ द्वीपविशेषे । श्वेतद्वीपे ॥ पर्वतविशेषे । इलावृतकीलरोहितस्वयोजनविस्तीर्णप्रागायतेहिरण्मयवर्षमर्यादागिरौ ॥ वानरविशेषे ॥ यथारामायणे । श्वेतोरजतसङ्काशचपलोभीमविक्रमः । बुद्धिमान्वानरवरस्त्रिषुलोकेषुविश्रुतइति ॥ कपर्दके ॥ शुक्रग्रहे । शङ्खे ॥ श्वेताभ्रे ॥ गिरावतारविशेषे ॥ न॰ रूप्ये । त्रि॰ शुक्लवर्णविशिष्टे । श्वेततो । श्विता॰ । पचाद्यच् ॥

श्वेतक पुं॰ वराटके ॥ न॰ रूप्ये ॥

श्वेतदीप । पुं॰ विष्णोर्धामविशेषे ॥ यत्रानिरुद्धमूर्त्तिर्भगवानास्ते ॥

श्वेतधातु । पु॰ खटिकायाम ॥ शुक्लवर्णधातुमात्रे ॥

श्वेतधामा । पु॰ इन्दौ । घनसारे अब्धिफेने ॥

श्वेतनील । पु॰ अम्बुदे । मेघे ॥ शुक्लनीलवर्णे ॥

श्वेतपत्र । पु॰ हंसे ॥ न॰ शुभ्रपर्णे ॥

श्वेतपत्ररथ पु॰ अष्टदिक्पाले । त्रिधा तत्रि ॥ श्वेतपक्षोहंसोरथोवाहनयस्य ॥

श्वेतपद्मम् । न॰ पुण्डरीके । सिताम्भोजे । अम्बुजभे ॥

श्वेतपर्णा । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

श्वेतपर्णास पु॰ श्वेततुलस्याम् अर्ज्जके । गन्धपर्णे ॥

श्वेतपाटला । स्त्री॰ शुक्लपाटलायाम् ॥

श्वेतपिङ्ग । पुं॰ सिंहे ॥ वृ॰ है॰ म्द्र ॥

श्वेतपिङ्गल . । पुं॰ सिंहे ॥ त्रि॰ शुक्लपिङ्गलवर्णयुक्ते ॥

श्वेतपिण्डीतक : । पुं॰ महापिण्डीतके ॥

श्वेतपुष्प : । पुं॰ सिन्धुवारवृक्षे ॥

श्वेतार्कः । श्वेतकरवीरे ॥ वरुणद्रुमे । न॰ शुक्लवर्णकुसुमे ॥

श्वेतपुष्पक । पु॰ करवीरवृक्षे ॥

श्वेतपुष्पा । स्त्री॰ मृदङ्ग्याम । श्वेतघोषा॰ वृ॰ गो॰ भा॰ प्र॰ ॥ नागदन्त्याम । मृगेर्वारौ ॥ श्वेतानिपुष्पाणियस्या ॥

श्वेतपुष्पिका । स्त्री॰ महाशणपुष्पिकायाम् ॥ पुत्रदाख्य म् ॥ वृ॰ रा॰ नट . ।

श्वेतप्रसूनक । पु॰ वृक्षविशेषे । वरुणद्रुमे ॥

श्वेतभण्डा । स्त्री॰ श्वेतापराजितायाम ॥

श्वेतमन्दारक । पु॰ पृथ्वीकुरबके । दीर्घायुष्ये । श्वेतमन्दारक॰ भा॰ प्र॰ ।

श्वेतमरिचम् । न॰ शिग्रुबीजे ॥ श्वेत मरिचमिव ॥ शुक्लमरिचे ।

श्वेतरक्त । पुं॰ पाटलवर्णे ॥ श्वेतयुक्तोरक्त : ॥

श्वेतरञ्जनम् । न॰ सीसके ॥

श्वेतरथ । पु॰ दैत्यगुरौ । शुक्रे ॥ श्वेतोरथोऽस्य ॥ शुक्लवर्णस्यन्दने ॥

श्वेतराजी । स्त्री॰ विचिके । सुदीर्घफले ॥

श्वेतरोचि : । पुं॰ चन्द्रे ॥

श्वेतरोहित । पुं॰ सितपुष्पे । सि

श्वेतकण्टकार्य्याम् ॥ पाषाणभेदाम् ॥ श्वेतदूर्व्वायाम् ॥ शिलावल्कलायाम् ॥ वंशरोचनायाम् ॥ शर्करायाम् ॥ लताविशेषे । क्षुरिकापर्ण्णिकायाम् । पर्व्वमूलायाम् ॥ अतिप्रियायाम् ॥ गुणास्तु श्वेतातिमधुराशीतास्त न्यदारुच्चकारिका

श्वेताविल्लत् । स्त्री॰ शुक्लचित्रतायाम् । चिभाण्डायाम ॥

श्वेताम्लि । स्त्री॰ क्षुपविशेषे । अम्लिकायाम् पिष्टोड्याम् ॥

श्वेतार्क । पु॰ शुक्लार्कवृक्षे । तपने । शर्करापुष्पे । वृत्तमल्लिकायाम् ॥ अस्यगुणा । श्वेतार्क कटुकस्तिक्तउष्णोमलविशोधन । मूत्रकृच्छ्राशोकाशि ब्रणदोषविनाशनकृत् ॥

श्वेतावर । पु॰ सितावरशाके ।

श्वेताश्व । पु॰ अर्ज्जुने ॥ सह देवपाण्डवे ॥

श्वेताह्वा । स्त्री॰ सितपाटलायाम् ॥

श्वेतेक्षु । पु॰ सितेक्षौ । वंशपत्रके । पाण्डुरेक्षौ ॥ अस्यगुणा । श्वेतेक्षु काठिनोरुक्षोगुरुश्चकफ मूत्रकृत् । दीपन पित्तदाहघ्नो विपाकेशीतलस्तथेति ॥

श्वेतोदर । पुं॰ कुवेरे ॥ त्रि॰ चि

काण्डशेष ॥

श्वोवसीयसम् । न॰ कल्याणे । मङ्गले ॥ वसुशब्द प्रशंसावाची॰ ईयसुन्नन्त । श्वस शब्दउत्तरपदार्थ प्रशंसामाशोर्विषयमाह । श्वोवसीयद्वृत्तिविग्रहे॰ मयूरव्यंसकादित्वात्समास । श्वोवसीय श्रेयस इत्यच् समासान्त अर्थ पर पदस्याश्व शब्द कालवाच्यपि । अभिधत्तेस्वभावेनतेनेमौमङ्गलार्थकाविति पाणिनीयमतदर्पण । श्वोवसीयसन्तेभूयात ॥

षकारस्य प्रारम्भ

ष । पुं॰ षकारे ॥ कचे ॥ त्रि॰ विज्ञे । निपुणे ॥ श्रेष्ठे ॥

षट्क । पु॰ षसासङ्घे । सङ्ख्याया स ङ्खासङ्घसूत्राध्ययने ष्विति कन् ॥ षष्ठेनरूपेणगृह्णातीत्यर्थे तु॰ तावतिथेनगृह्णातीति कन्नूवक्तव्य पूरणप्रत्ययस्यचनित्यंलुक् । षष्ठेनरूपेणगृह्णाति॰ षट्कोदेवदत्त ॥

षट्कटु । न॰ षडूषणे ॥

षटकर्ण । पु॰ कर्णवेधकोनयोर पश्ययोर्विद्यमानयोस्तृतीयस्याप्रत्यासमानायाम ॥

षटकर्म्मा । पु॰ यागादिभिर्युते ब्राह्मणे ॥ षटकर्माण्यध्ययनादीन्यस्य । तानियथा । इज्याध्ययन

वृत्तान्तरे । यथा । षट् कलमादौ त दनु च तुरङ्ग परिमन्तनु ॥ इ पेहि कल कल य चतुष्टय मिह स तनु० । छन्द षट्पदनामभवति फणिना यकगोत ० रुद्रे विरतिमुपैतिन्ट य तिसुखकरमुपनीतम् । उल्लालयुगलमन्ते भवेदष्टाविंशतिकलमिदम् ० पृणु पञ्चदश विरतिश्रित पठनेप गिङ्गतजनहितम् ॥ तथा । वामक रोदरकलितकमलसोदररुचिवदना ० गुरुपुरतोपितवेनवनामजल्पतिगु रुमदना० भवदभिलषणविशेषरभ सपारशेषितदिवसा० सुभ्रुतचन्द्र भयेनरजनिमभिजीवितमपिसा । निजहृदि विनिहितभवदभिसरणर ङ्गतरङ्ग गमनङ्ग मयति० भवदीय विलोकनमन्तरानमनोरथसुखमनु भवति ।

षट्पदप्रिय । पु० नागकेशरवृ क्षे ॥ न० रक्तोत्पले ॥

षट्पदा । स्त्री० यूकायाम् ॥

षट्पदातिथि । पु० आम्रवृक्षे ॥

षट्पदानन्द । पु० पुष्पवृक्षविशेषे । किङ्किराते । पीतभद्रे ॥

षट्पदानन्दवर्द्धन । पु० किङ्किराते । अपीकपादपे ।

षटपदी । स्त्री० यूकायाम् । वृ० हे० मृ० ॥

षट्पदेष्ट । पुं० नीपे । कदम्बे ॥

षट्प्रज्ञ । पु० कामिनीनो । कामुकी पिङ्ग ॥ धमार्थकामसर्ववित्तु । यथा । धमार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञास्ति यस्यासौ सषट्प्रज्ञइतिस्मृत ॥ इ० चि० शेष ॥

षड । पु० पेयान्तरे । भेदे ॥

षडश । त्रि० षष्ठांशे ॥ सङ्ख्या शब्दस्यवृत्तिविषयेपूरणार्थत्वम ॥

षडङ्ग । पु० वेदे ॥ षट्शिक्षादो न्यङ्गान्यस्य । षट्कोणोचुरवी । न० शिक्षादिषु वेदाङ्गेषु ॥ यथा । शि क्षाकल्पोव्याकरणं निरुक्तं ज्योतिष तथा । छन्दश्चेतिषडङ्गानिवेदानां वैदिकाविदुः ॥ छन्दः पादौतु वेदस्यहस्तौकल्पस्तुकथ्यते । ज्यो तिषामयनंचक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षाघ्राणन्तुवेदस्यमुखंव्याकर णंस्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोकेमहीयते ॥ इ० स्मृति ॥ शरीरस्यषडवयवे । यथा । जङ्घे बाहू शिरोमध्य षडङ्गमिदमुच्यते० इति ॥ षडादिषु ॥ इक्षुरसशि खाकेवकवचंनयनचयम् । करतल करपृष्ठोचषडङ्गन्यासकर्मणि ॥ गव्यविशेषे ॥ यथा ॥ गोमूत्र गोमयक्षीरंसर्पिर्दधिचरोचनाषडङ्गमेतन्माङ्गल्यपवित्रं सर्वदागवां मितिस्मृति ॥

प्रकाश ॥

षड्गया । स्त्री० षड्विधगयायाम ॥ यथा । गयागजो गयादित्यो गायत्री च गदाधरः । गयागयासुरश्चैव षड्गया मुक्तिदायिकेति वायुपुराणे गयापद्धतिः ॥

षड्गवम् । न० गोषट्कयुक्तहलादौ ॥ यथा । अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम् । चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥ षण्णां गवां समाहारः । गोरतद्धितलुकीति समासान्तष्टच् ॥

षड्गुणरहित । पु० मधुरादिषड्गुणरहिते परमात्मनि ॥

षड्गुणेश । पु० षडिन्द्रियनियन्तरि ॥

षड्ग्रन्थ । पु० महाकरञ्जपादपे । षट् ग्रन्थयो यस्य । अच्प्रत्यन्ववपूर्वा दित्यत्रा जितियोगविभागादच् ॥ षट्ग्रन्थाय स्यवा ॥

षड्ग्रन्था । स्त्री० वचायाम् ॥ षट् ग्रन्था ग्रन्थयो यस्याः सा ॥ शट्याम् ॥ शुक्लवचायाम् ॥

षड्ग्रन्थि । पु० षटपर्व्वणि ॥ स्त्री० वचायाम ॥ न० पिप्पलीमूले ॥

षड्ग्रन्थिका । स्त्री० शट्याम । गन्धमूल्याम ॥ षट् बह्वो ग्रन्थयो यस्याः । स्वार्थे कन् ॥

षड्ज । पु० तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ षड्भ्यः स्थानेभ्यो जात । पञ्चम्यामिति ड ॥ यथा । नासाकण्ठमुरस्तालुजिह्वांदन्तांश्च संस्पृशन् । षड्भ्यः सञ्जायते यस्मात्तस्मात्षड्ज इति स्मृत ॥ मयूरस्वरतुल्यस्वरोऽयम । यथा । षड्जं रौति मयूरो हि गावो नर्दन्ति चर्षभम् । अजाविरौति गान्धारं क्रौञ्चो नदति मध्यमम ॥ तानसेनमते सप्तस्वराणामध्ये प्रथमस्वरोऽयम् ॥

षड्धा । अ० षट्प्रकारे ॥ सङ्ख्याया विधार्थे धा ॥

षड्विध । त्रि० षट्प्रकारे ॥ षट् विधा प्रकारा यस्य ॥

षड्भावविरहित । त्रि० अस्तीत्यादिशरीरधर्मरहिते परमात्मनि अस्तीत्यादयो यथा । अस्ति जायते वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति ॥

षड्भुज । त्रि० षड्हस्तयुक्ते ॥

षड्भुजा । स्त्री० चण्डिकायाम् ॥ रुद्रचण्डायाम् ॥ चण्डवत्याम् ॥ न० खर्बुजाभिधेयफललताविशेषे । मधुफलायाम् । वृत्तकर्कट्याम् । तिक्तफलायाम् । खरबूजा० इ० भा० प्र० ॥ अस्याः फलगुणा यथा । तिक्तबाल्ये तदनु मधुरकिञ्चि

षण्डाली । स्त्री॰ सरस्याम् । का'मुक स्त्रियाम् । तैलमाने । कटाक॰ इ॰ भा॰ प्र॰ । इ'तहेमचन्द्रोमेदि निकारच ॥

षण्ढ । पु॰ षण्ढशब्दार्थे ॥ शास्यति लिङ्गाभावात् । शमउपशमे । शमे ढः । बाहुलकात्षः । यद्वा । सनति । षणसम्भवे कर्त्ता । अनिर्दे्ष्या दिनाषमेढं । बाहुलकात्सत्वाभाव ॥ अस्यदर्शनेसूर्य'दर्श'नम्॰ स्पर्श'नम्॰ स्पर्शनेतुस्नानं सूर्यावलोकनस्वप्रायश्चित्तम् ॥

षण्मुख । पु॰ कार्त्तिकेये । स्कन्दे । षट मुखान्यस्य ॥

षण्मुखा । स्त्री॰ षट्भुजायाम् । खरबूजा॰ इ॰ भा॰ ॥

षट् । त्रि॰ सङ्ख्यान्तरे । छ छे॰ इ॰ भा॰ । सङ्ख्येये ॥

षष्टि । स्त्री॰ सङ्ख्यान्तरेसाठ॰ इ॰ भा॰ । सङ्ख्येये । षट दशत परिमाणमस्य । प्रकृते षष्भावश्च प्रत्ययोऽपद्वत्वञ्च॰ पङ्क्ति विंशतिचिंशत्चत्वारिंशद्पञ्चाशत्षष्टीतिनिपातनात् ॥

ष'ष्टक । पु॰ न॰ ग्रोष्मजे॰ धान्यविशेषे । साठी॰ इ॰ भा॰ प्र॰ । षष्टिकाख्यधान्यविशेषः षष्टिका षष्टिरात्रेणपच्यन्तइतिष्टतीयान्तात्कन्॰ रात्रशब्दलोपश्चनिपात्यते । धान्यविशेषएव साधुन'पुन'पु॰ तिपिषष्टि'र्त्तेणपच्यन्ते ॥ अस्यलक्षणगुणाश्चयथा । गर्भस्थाएवयेपाकं यान्तितेषष्टिकामता ॥ षष्टिक शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्या षष्टिका समुदाहृता ॥ एतेपिव्रीहयः प्रोक्ताव्रीहिलक्षणदर्शनात् ॥ षष्टिकामधुराशीतालघवोबद्धवर्च'स । वातपित्तप्रशमना शालीनासदृशागुणैः । तत्र॰ साठागुणा । षष्टिकायाम ॥ अपिच । गौरीनील षष्टिकोऽयद्विधास्या.इ.र्योरुच्य शीतलोदोषहारी । वल्यः पथ्योद्दीपनोबीर्य'इति इत्तेतस्मात्किञ्चिदूनोद्वितीय ॥

षष्टिका । स्त्री॰ साठीतिप्रसिद्धधान्ये । अस्याः गुणाः । ष'ष्टकाप्रवरातेषालघ्वीस्निग्धात्रिदोषजित् । स्वाद्वीमृद्वीग्राहिणीचवलदाज्वरहारिणीति ॥ रक्तशालिगुणैस्तुल्यास्तत स्वल्पगुणा परे ॥ तेषाष'ष्टकशतपुष्पाद्यैनाम् । परे॰ षष्टिकशतपुष्पाद्यः ॥ शरदिषष्टिकाभि पाव'कज्वलयमितिवाचस्पतिमिश्राः ॥

षष्टिक्यम । न॰ षष्टिकधान्योत्पत्त्युचितभूमौ ॥ षष्टिकानाभवनक्षेत्रम् । यवयवकषष्टिकाद्यद्दितियत् ॥

षष्टिज । पु॰ षष्टिकधान्ये
षष्टितम । त्रि॰ षष्टे पूरणे ॥
षष्टिदुगा । स्त्री॰ स्कन्दभार्यायाम् ॥ तिथिभेदे ॥
षष्टिधा । अ॰ षष्टिप्रकारे ॥
षष्टिमत्त । पु॰ गजे ॥ षष्टिवर्षपर्य्यन्तस्य पुंवाहस्थित्या॰ षष्टिमत्तो हस्त्यतिसारस्वताभिधानम् ॥
षष्टिलता । स्त्री॰ भ्रमरमारीम ॥
षष्टिहायन । पु॰ गजे । हस्तिनि ॥ धान्यविशेषे ॥ त्रि॰ षष्टिसङ्ख्यक वत्सरवयोयुक्ते ॥
षष्ठ । त्रि॰ षण्णां पूरणे ॥ तस्य पूरणे डट् । षट्कतिकतिपयचतुरां थुक् ॥
षष्ठान्नकालिक । त्रि॰ तृतीयदिनभोजिनि ॥ न॰ द्विदिनमानान्तरभुक्ते ॥ यथा । द्वावेकान्तरितभुक्तमाहुः षष्ठान्नकालिकम् ॥
षष्ठिका । स्त्री॰ षष्ठ्याम् ॥
षष्ठी स्त्री॰ कात्यायन्याम् । गौर्य्याम ॥ मातृकाविशेषे ॥ सा च प्रकृतेः षष्ठोऽंशा॰ स्कन्दभार्या च ॥ यथा । प्रकृतेरिति सम्बन्धे॰ प्रधानांशस्वरूपा यादेवसेना च नारद । मातृकासु पूज्यतमा सा षष्ठी च प्रकीर्त्तिता ॥ पुत्रपौत्रादिदात्री च धात्री त्रिजगतां सती । षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तितेति श्रीदेवीभागवतम् ॥

तिथिविशेषे । गुणतिथौ ॥ षण्णां पूरण्याम डम॰ षोम॰ षाम॰ हुतर्थकौ ॥ अस्यायमन्वयोऽर्थ सत्त्वर जपदृषोपगवादिशब्दानाम् प्रवृत्तिनिमित्तम गोमान धनवानित्यादीनाम प्रवृत्तिनिमित्तम्॰ षपत्यार्थ त्यवत्सम्बन्धादे शब्दप्रवृत्तिनिमित्तत्वात ॥ पूरणप्रत्ययान्तत्वाट्टित्वात ङीप् ॥ षष्ठ्यान्तिथावुत्पन्नस्य फलं यथा । विद्वान वरिष्ठचतुर सुशीलः॰ प्रलम्बबाहुर्बलवीर्य्ययाश॰ । सत्यप्रतिष्ठो धनपुत्रयुक्तः षष्ठीप्रसूतो मनुजश्चिरायुरिति ॥
षष्ठीदण्डकपाठ । पुं॰ । ग्रन्थविशेषे ॥ यत्रैकगत षष्ठ्यर्थोक्ता ॥
षाट्कौशिक । पु॰ मृतदेहे ॥ यथा । मज्जास्थिस्नायव शुक्राद्रक्तात्त्वक्मांसशोणितम् । इति षाट्कौशिकानामदेहोभवतिदेहिनाम ॥
षाडव । पु॰ गाने । रागस्यजातिविशेषे । सप्तषट्स्वरमिलितरागरागिण्यौ । यथा । औडव पञ्चभि प्रोक्त स्वरै षड्भिस्तु षाडव । सम्पूर्ण॰ सप्तभिर्ज्ञेय एव रागस्त्रिधामत ॥ रसविशेषे ॥ सप्तरसविशेषवत्त्व स्याद्रसाज्ञे । यथा । सितामध्वादिमधुरोद्राक्षाद्याडिमकीरस॰ । विरसश्चोत्तमतीरा

एतेषांसर्व्ववर्णानामाश्रमीब्रह्मईश्वरि । तेषामाचारधर्मांश्चशृणुष्वावोवदामिते ॥ पुरैवकथिततावत् कालसम्बन्धचेष्टतम् । तप . स्वाध्यायहीनानाम्‌णामप्यायुषामपि क्रमप्रयासाशक्तानांकुलेदेहपरिश्रम । ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवचाश्रमौद्वौकलौयुगे ॥ गृहस्थस्यक्रिया . सर्वाआगमोक्ता कलौशिवे । नान्यमार्गैक्रियासिद्धिकदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेविवेदोक्तदण्डधारणम् । कलौनास्त्येवतत्त्वज्ञेयतस्तच्छ्रौतसस्कृति ॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेवकथितभद्रेसंन्यासग्रहणंकलौ । विप्राणामितरेषाञ्चवर्णानाप्रबलेकलौ उभयत्राश्रमेदेविसर्वेषामधिकारिता सर्वेषामेवसंस्कारा कर्माणिशैववर्त्मना । विप्राणामितरेषाञ्चकर्म्मलिङ्गपृथक्पृथक् । जातमात्रोगृहस्थस्यात्संस्कारादाश्रमीभवेत् । गार्हस्थ्याप्रथमकुर्यात्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्नेवैराग्यजायतेयदा । तदासर्वंपरित्यज्यसंन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्जयेद्बाल्येधनदारांश्चयौवने । प्रौढेधर्म्याणिकर्माणिचतुर्थे प्रव्रजेत्सुधी ॥ मातरंपितरंवृद्धभार्याञ्चैवपतिव्रताम् ॥ शिशुञ्चतनयंहित्वानावधूताश्रमंव्रजेत् ॥ मातृन्पितृन्शिशून्दारानस्वजनान्बान्धवानपि । य प्रव्रजतिहित्वैतान्समहापातकीभवेत् ॥ मातृहापितृहासस्यात्स्त्रीवधीब्रह्मघातक . । असन्तर्प्यस्वपित्रादीनयोगच्छेद्भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्नेषुसर्ववर्णेषुसत्क्रिया । शैवेनवर्त्मनाकुर्यादेषधर्म्म . कलौयुगे । इति ॥ अपिच । अवधूताश्रमेदेविकलौसंन्यासउच्यते । कृत्यु पक्रम्य । ब्रह्मज्ञानेसमुत्पन्नेविरतेसर्वकर्मणि । अध्यात्मविद्यानिपुण संन्यासाश्रममाश्रयेत् ॥ विहायवृद्धौपितरौशिशुभार्यांपतिव्रताम् . त्यक्त्वाऽसमर्थान्बन्धूश्चप्रव्रजन्नारकीभवेत् । ब्राह्मण क्षत्रियोवैश्य' शूद्र सामान्यएवच । कुलावधूतसंस्कारेपञ्चानामधिकारितेति ॥ सम्यङ्न्यास सन्न्यास । सम्यग्वान्तविद्यादिवत् । लोकद्वयभोगस्य . न्यासस्त्याग संन्यासइत्यर्थ । यथामुहूर्त्तमाहकालिदास . संन्यास . श्रुतियुगलेपयेभिमर्शैवैरल्पेकचिरसौन्दर्यजितर्श्चैः । नौरिवाश्चिरसदनेऽपवर्गसिद्ध्यैसीमेव्य

वसेत् पर्वतम् लेषुप्रौढोयोऽध्यानधारणात । सारात् सारं विजानाति पर्वत परिकीर्त्तित ॥ ६ ॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रह । मर्यादाश्च न लङ्घेत सागर परिकीर्त्तित ॥ ७ ॥ स्वरज्ञानवशो नित्यम् स्वरवादी कवीश्वर । स सार सागरे सारामिज्ञो यो हि सरस्वती ॥ ८ ॥ विद्याभारेण सम्पूर्णः सर्वभार परित्यजेत् । दुःखभार न जानाति भारती परिकीर्त्तित ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्ण पूर्णतत्त्वपदे स्थित । परब्रह्मरतो नित्य पुरीनामा स उच्यते ॥ १० ॥ इति हहच्छङ्करविजये श्रीविद्यारण्यस्वामिन ॥ अस्य धर्माचरणादिक मनुस्मृतौ ब्रह्मवैवर्त्त गरुडकूर्म पुराणादिषु द्रष्टव्यम । विधानन्तु श्रीमहानिर्वाणतन्त्रे श्रीसदाशिवेनोक्तम् ततोऽवगन्तव्यम् ॥ सन्न्यासोऽस्त्यि । अतङ्गि ॥ सन्न्यासविधिमाह योनक ‘ । सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य हन कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिलेभित्त्वो कलेवरम् । प्रोक्षण खननञ्चैव सर्वं तेनैव कारयेत् इति ॥

सन्मुख ‘ । त्रि॰ अभिमुखे ॥

सपक्ष . । त्रि॰ निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये ‘ यथा धूमवत्त्वे॰ महानसम् ॥ अनुकूले ॥ समान ‘ पक्ष ॰ इति विग्रहे॰ समानस्य तियोगविभागात् सादेश : ॥ यद्वा । समवत् सहशब्दन ‘ । तेना स्वपदविग्रहो बहुव्रीहि . ॰ समान पक्षोऽस्य॰ इति सपक्ष ॥

सपण ‘ । पुं॰ ग्लहे । पणेन सह वर्त्तमाने॰ व्यवहारविशेषे ॥ यथा यद्यहमपराजितो भवामि॰ तदा शतं दास्यामीति ॥

सपत्नाकरणम् । न॰ अत्यन्तपीडने । सपत्रनिष्पत्रादतिव्यथन इति डाच् ॥

सपत्राकृत । पुं॰ शतमृगादौ ॥ त्रि॰ अत्यन्तपीडिते ॥

सपत्राकृति । स्त्री॰ अत्यन्तदु : खे । निष्पत्राकृतौ ॥

सपत्न । पु॰ शत्रौ । सपत्नीव ॥ व्यञ्जन सपत्न इति निर्देशादकार । इवार्थे वा प्रत्ययो वा ।

सपत्नारि । । पु॰ वेणुवंशे ॥ यथो यथो ॥ सपत्नस्यारि : ॥

सपत्नी । स्त्री॰ समानपतिकायाम् ॥ समान एक पतिर्यस्या . ॰ इति विग्रहे॰ सपत्न्यादिषु समानस्य सभावो निपात्यते । नित्य सपत्न्यादिष्विति ङीप् ॥

सपत्नीक ‘ । पु॰ पत्नीसहिते ॥ सहपत्न्या वर्त्तते इति तथा नद्युतश्चेति

तेनमातामहादीनामेकपिण्डसम्बन्धे
पिनसपिण्डता ॥ सपिण्डस्यभाव .
। तल् । टाप् ॥
सपिण्डीकरणम् । न० श्राद्धविशेषे ।
प्रेतपिण्डस्य पितृपिण्डेनसहमिश्री
करणे ॥ तच्चपूर्णे संवत्सरेसपि
ण्डीकरणमितिमुख्यकल्प • तदशक्तौ
नवमेमास तदशक्तौषष्ठेमास .
तत्राप्यसक्तौत्रिपक्ष तत्राप्यशक्ता
वशौचापगमेप्रथममासस्य द्वादशभि
दिने द्वादशमासिकानिश्राद्धानिनि
र्वर्त्यतयेद्वादश सपिण्डीकरणका
ल ॥ सपिण्डीकरणविषयेकूर्मपु
राणं यथा । सपिण्डीकरणं प्रोक्तं पू
र्णेसम्वत्सरेपुन । कुर्याच्चत्वारिपा
त्राणिप्रेतादीनांद्विजोत्तमा ॥
प्रेत र्थे पितृपात्रेषुपात्रमासेचयेत्त
त । येसमानाइतिद्वाभ्यांपिण्डा
नप्येवमेवहि ॥ सपिण्डीकरणंश्रा
द्धदेवपूर्वंविधीयते । पितॄनावाह
येदत्रपृथक्पिण्डञ्चनिर्दिशेत् ॥ येस
पिण्डीकृता प्रेतानतेषांस्यात्पृथक
क्रिया । यस्तुकुर्यात्पृथकपिण्ड पितृ
हासोपिजायते • इति ॥
सपीतक । पु० राजकोषातक्याम् ॥
सपीति । स्त्री० आत्मीयेनजनेनसह
मिलित्वैककालकृतेपाने । तुल्यपा
ने । पानम । पापानेस्त्रियांक्तिन्
। घुमास्थेतीत्वम् । समानापीति
। समानस्यच्छन्दसीतिसभाव । स
हपीतिर्वा । सहस्य स आर्या ॥
सपीतिका । स्त्री० हस्तिघोषायाम् ॥
सपुत्र । त्रि० पुत्रेणसहवर्त्तमाने ॥
सप्तक । पुं० सप्तसङ्ख्यायाम् ॥
त्रि० सप्तसङ्ख्याविशिष्टे ॥ सप्त
भि क्रीतेवस्तुनि ॥ सङ्ख्यायाअ
तिशदन्ताया । कन्नित्याह्र्तीयेष्वर्थे
षुकन् ॥
सप्तकी । स्त्री० मेखलायाम् । काञ्च्या
म् । कटिभूषणे ॥ सपति । अप
समवाये । बाहुलकात्तन् । स्वार्थे
कन् ॥ यद्वा । सप्तभिरनेकाभि
किङ्किणीभिर्वा० सप्तस्वरान्वा० का
यति । कैशब्दे । आतोनुपसर्गे
क : । गौरादित्वान्ङीष् ॥
सप्तगङ्गम् । न० तीर्थविशेषे ॥
सप्तगोदावरम् । न० सप्तानागोदावरी
णांसमाहारे ॥ तीर्थविशेषे ॥
सप्तच्छद । पु० सप्तपर्णवृक्षे ॥ का
ण्डेकाण्डेसप्तच्छदाअस्य । सङ्
ख्याव्यज्ञक्तिविषयेवीप्सार्थत्व
म् । न० तत्पुष्पे ॥
सप्तजिह्व । पु० अनले । अग्नौ ॥ सप्त
काल्यादयोजिह्वाआकृतियस्याग्नेः
यथास । तायथा । कालीकराली
चमनोजवाचसुलोहिताचयसुधूम्र
वर्णा । स्फुलिङ्गिनोविश्वरुचीचदे
वीलेलायमानीतिचसप्तजिह्वा इति

याम् ॥

सप्तपत्रः । पु॰ सप्तच्छदे ॥ मुद्गरवृक्षे ॥ सप्तसप्तपत्राण्यस्य ॥

सप्तपदार्थवाद । पुं॰ आर्हतानां वादे ॥ यथा । जीवाजीवात्मकं विश्वं चेतनं स्वशरीरवत् । परं याभावयवानजीवं षड्विधं स्मृतं ॥ महीधरादिकं स्यात्पञ्चधा चास्रवादिकं । आस्रवं संवरो निर्जरो बन्धो मोक्ष एव च ॥ इन्द्रियाण्यविवेकादि केशोलुञ्चादिभिस्तप । जन्मान्यूर्ध्वगतिश्चेतिपञ्चानामर्थ उच्यते ॥ स्यादस्तीत्यादिना सप्तभङ्गीन्यायेन वादिनः । सप्तैव क्रमशोऽपास्यमतं साधयेत्सुधीरिति ॥

सप्तपदी । स्त्री॰ विवाहाङ्गसप्तपदीगमने । सप्तानां पदानां समाहारः । द्विगोरिति ङीप् ॥

सप्तपर्ण पु॰ छातवनीतिख्याते वृक्षे ॥ पर्यायास्तु । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इति ॥ सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित् ॥ दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः इति गुणाः ॥ काण्डे काण्डे सप्त सप्त पर्णान्यस्य । कचित् सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वमिति कैयटादिव्याख्यानात् ॥

न॰ मिष्टान्नविशेषे ॥ यथा । द्राक्षादाडिमखर्जूररम्भादिसहितं सशर्करम् । लाजचूर्णं समध्वाज्यं सप्तपर्णमुदाहृतम् ॥

सप्तपर्णी । स्त्री॰ लज्जालौ ॥

सप्तपलाश । पु॰ सप्तपर्णद्रुमे ॥ सप्त सप्त पलाशानि पत्राणि पर्वसु यस्य ॥ न॰ सप्तपर्णपुष्पे ॥

सप्तपातालम् । न॰ सप्तसङ्ख्याकाधोभुवने ॥ यथा । अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महाख्यं सुतलञ्चाग्र्यं पातालं सप्तमं विदुरिति ॥ नामान्तराण्यपि यथा । आभासं तलाख्यं वितलं च गभस्तिमत् । महातलं रसाकञ्च पातालं सप्तमं भुवि ॥ इति ॥ एतेषामधिपा यथा । सप्तस्वेतेषु दैत्येन्द्रभुजङ्गा बलदानवाः । सप्तसप्तसमाख्याताः स्तानप्यथ निबोध मे ॥ दैत्याः शङ्कुश्रुतिः पूर्वं प्रह्लादः शिशुपालकः कर्कम्भुकौ हिरण्याक्षो हङ्गभौ बलिस्तथा ॥ काद्रवेयाः कुटिलको वासुकिः कम्बलस्तथा । कार्कोटकोऽथ कालाङ्को दुर्दशस्तक्षकस्तथा ॥ विकटाक्षो हिताक्षश्च यमाक्षो विकटाननः करालो भीमनिर्ह्रादः पिङ्गलश्चेति राक्षसाः इति ॥

सप्तपुत्रसू । स्त्री॰ सप्तवस्करायाम् । सप्तपुत्रायाम् ॥

चैतद्धार्यं तैर्भुवनत्रयम् ॥ सन्ध्यात्रयमुपासीना गायत्रीजपतत्पराः । तस्मिन् लोके वसन्त्येते ब्रह्मणा ब्रह्मवादिनः ॥ इति पाद्मे ११ऽध्याय ॥

सप्तला । स्त्री॰ नवमालिकायाम् ॥ सप्तलाति । ला॰ । आतोऽनुपेति कः ॥ चर्मकषायाम् । सातलायाम् ॥ गुञ्जायाम् ॥ पाटलायाम् ॥

सप्तवाहन । पु॰ आदित्ये । सप्त अश्वा वाहनान्यस्य । सप्तनामक एकोऽश्वो वाहनमस्य वा ॥ एकोऽश्वो वहति सप्तनामेति श्रुतेः ॥ वहति॰ आदित्यरथम् ॥

सप्तशती । स्त्री॰ सप्तशतिकायाम् ॥ सप्तशतमन्त्रात्मकदेवीमाहात्म्ये ॥ गीतायाम् ॥ सप्तानां शतानां समाहारः । द्विगोरिति ङीप् ॥

सप्तशलाक । पु॰ विवाहोपयोगि वेधविशेषे ॥ यथा । ऊर्ध्वगा सप्तरेखास्तु तिर्यक् सप्त विलिख्य च । कृत्तिकादि च तु सप्तकक्षाङ्किता सुसंलिखेत् ॥ चन्द्ररेखास्थनक्षत्रं यदि तिष्ठति चेत्तदा । वेधः सप्तशलाकाख्यो विवाहे तत्र वर्जयेत् ॥ यद्रेखायां चन्द्रस्तिष्ठति सा चन्द्ररेखा । तत्र स्थितनक्षत्रे च तस्मिन् यदि सूर्यादीनामन्यतमोऽपि कश्चिद्ग्रहस्तिष्ठति । तदा सप्तशलाकाख्यो वेधः स्यात् । तत्र विवाहं वर्जयेदिति ॥ यथा । अग्नौ सप्तशलाकभिन्न पौरपापैरथवा विवाहे । रक्तांशुकेन रुदती गतासुमानाश्मशानभूमिं प्रमदा प्रयातीति फलम् ॥

सप्तशिरा । स्त्री॰ नागवल्ल्याम् ॥ ताम्बूल्याम् ॥

सप्तशृङ्ग । पु॰ हिमाचले ॥ सप्त शृङ्गवति ॥ दक्षिणदेशप्रसिद्धे गिरिविशेषे ॥ तत्र प्रसिद्धेऽम्बिकास्थाने ॥

सप्तसप्ति । पु॰ दिवाकरे । सूर्ये ॥ सप्त गायत्र्यादीनि छन्दांसि॰ सप्तयोऽश्वा॰ यस्य ॥ यथा । गायत्र्यादीनि सप्त छन्दांसि वै तानि मानि मे शृणु । गायत्री च बृहत्युष्णिग् जगती त्रिष्टुबेव च । अनुष्टुप् पङ्क्तिरित्युक्ताश्छन्दांसि हरयो हरेरिति विष्णुपुराणम् । सप्ताश्वरूपाश्छन्दांसि वहन्ते वामतो रविमिति मत्स्यपुराणञ्च ॥

सप्तसमिध् । स्त्री॰ बहुवचनान्त॰ सप्तप्राणानां सप्तसु विषयेषु ॥ विषयेषु समिध्यन्ते प्राणाः ॥

सप्तसागर । पु॰ महादानविशेषे ॥

सप्तसारस्वतम् । न॰ तीर्थविशेषे ॥

सप्तसूः । स्त्री॰ सुतवत्करायाम् । सप्तपुत्रप्रसूतायाम् ॥

सप्तस्रोत । न॰ तीर्थप्रभेदे । हिमवन्महिमवत्तकक्षीवामाश्रमे ॥ यथा

समामस्वेतियोगविभागात्• सभा याइतिनिर्देशात्समासस्यादेश । अस्यालक्षण यथा । यस्मिन्देशे निषीदन्तिविप्रावेदविदस्त्रय रा ज्ञश्चाधिकृतोविद्वान् ब्रह्मणस्तांसभां विदुरितिमनु ॥ चत्वारोवेदधर्म ज्ञा : पर्षत् त्रैविद्यमेववा । सानूते व सधर्म. स्यादेकोवाध्यात्मवित्तम • इतियाज्ञवल्क्य ॥ विद्वत्स इ ती • भा प्रकाशस्तथासत्त्ववर्त्तते• इत्युक्तं ॥ ग्रामनगरादौनियत जनसमूहस्थाने ॥ समाजिके । स भ्ये ॥ द्यूते ॥ मन्दिरे । राज्ञोऽमा त्यादिदर्शनगृहे ॥ अनुविधेयस्त्रेय सभ्यपुरुषवतीजनतासभा । अनु विधेयोराजादि . • स्त्रियाम् सभ्य स्य ॥

सभाग । त्रि• सभाक्रते ॥ अन्यै . पू ज्यमाने ॥ भजनभाग • • पूजा• सेवा । सहभागेनवर्त्तमान ॥ भागसहिते ॥

सभाजन : । पु • सभ्ये ॥ न• गमना गमनादिसमयेसुहृदादेरालिङ्गनादि व्यमङ्गलागतादिमानन्दोत्पादने । आनन्दने । आप्रच्छने ॥ सभाज प्रीतिसेवनयो । ल्युट् ॥

सभाजित . । त्रि• पूजिते ॥

सभाज्य : । त्रि• पूज्ये । भजनीये ॥

सभापति : । पुं • सभाधिपती ॥ यथा । श्रीमद्रामपुरेसोढाख्यरना मासभापतिरिति ॥

सभारचना । स्त्री• राजमन्दिरनिर्मितौ ॥ यथा । चापाकृतिन्यस्तनृपास नोद्रा सतीतिक्तीर्या नृपगौरवो चिता । निष्पातवीरैर्विदधीत म न्त्रिणा नरैरनूनानरसामरै सभा ॥

सभासत्•द् । पुं• सभास्तारे । सभ्ये । सामाजिके । सभासद्नोद्द । श्रु ताध्ययनसम्पन्ना कुलीना सत्य वादिन । राज्ञासभासद कार्या शत्रौमित्रेचयेसमा इतियाज्ञवल्क्य ॥ श्रुताध्ययनसम्पन्ना • धर्म शास्त्रज्ञा • । कुलीना • साङ्कर्य दोषशून्यमातापितृवंशपरम्परावा ॥ सभायामधिकृतत्वेनसौवर्णां धर्माधर्मविवेचनार्थंसौदतिउपवि शति । सदृलृ• । सत्सूद्विषेति क्विप् ॥ समाछिवाक सामात्य . सब्राह्मणपुरोहित । ससभ्य प्रे क्षकोराजास्वर्गे तिष्ठतिधर्मत : ॥ तत्राध्यक्षास्तनियुक्ता • सभ्यास्तु नियुक्ताइतिभेद । तत्रनियुक्ता नांयथावस्थितार्थकथनेपिअदिराजा न्यथाकरोतितदाऽसौनिवारणीयो न्यथादोष . । यथाहकात्यायन . । अन्यायेनापितंयान्तंयेनुयान्तिसभा सद . । तेपितद्भागिनस्तस्माद्बोध

क्रू रोयसोम्य ० पुरुषोङ्गनाच० ओजोऽयुग्म विषम ' समद्य । च र्ह्यरद्वा त्मकनामधेयानिपाद्यो मोक्तमस्य प्रदिष्टा ॥ मानस्यप्र कारविशेषे ॥ सतुयदागोलवाद्यो स्त्रा लोगानकर्णु ष्ट स्त्रपादादिषाल नद्य० एक्ताद्रासमभाविनपततितदा भवतोतिसङ्गीतशास्त्रम् ॥

समकाष . ' त्रि० तुल्ये ' समे ॥

समकन्या । स्त्री० विवाहोपयुक्तायाम् ॥ इतिधनञ्जय ॥

समकोल । पु० श्रम्भचे । द्विरस नो । सर्पे ॥ कु० त्रि० शेष ॥

समचम् । च० चच्चो समीपे ॥ च च्चोसमीप योग्य वा । चव्यय विभ क्तीतिसमीपे० यथार्थे वाऽव्ययोभा व । प्रतिपरोतिटच ॥

समगन्धक : । पुं० कृत्रधूपे ॥

समगन्धिकम् । न० उशीरे ॥

समग्र : । त्रि० समस्तेन । सर्वस्मि न् । विश्वस्मिन् । चशेषे । सम्पू र्णे ॥ सङ्कलमयमस्य ॥ सम ग्रसते वा । चन्येष्वोपोतियसिड॰ . ॥ शो भनाग्रके ॥ सद्वाग्रेणफलेनविद्यतेय तूतव ॥

समङ्ग । पुं० मूषके ॥ सम्यक्प्रका रेणच्छिद्रादिकरणेन० चङ्गयति० चिह्नयतिवस्त्रादिकम् । चाजि० । घच ॥

समङ्गा । स्त्री० मजीठइ० प्र० चोषधौ । पथायास्तु । मञ्जिष्ठाविकसाजि ह्वोसमङ्गाकालमेषिका । मराडूकप र्णीभराडीरोभराडोयोजनवल्लयपी ति ॥ लज्जालो । नमस्कार्याम् । गराडकार्याम् ॥ समङ्गतोङ्गति । चगि० । पचाद्यच् ॥

समचित्त . । त्रि० हर्षविषादशून्यम नसि । चात्मजिदि ॥ सम चित्त य स्त्रस . ॥ एकत्रिषयवाक्त . कारण स्त्रो

समज . । पुं० पशूनावृन्दे ॥ स कोय तेऽयवा । चज० । समुदोरच प शुष्ठित्यप् ॥ मूर्खस स्तौ ॥ न० विपिने ॥

समज्जा । स्त्री० यशसि । कीर्त्तौ ॥ स म्भ सर्वैर्ज्ञायते । ज्ञा० । घञर्थे क ॥

समज्या । स्त्री० परिषदि । सभायाम् ॥ समजन्त्यस्याम् । चज० । स ज्ञा यांसमजेतिक्यप् । चजो . क्यपिवो भावोन ॥

समञ्जसम् । न० उचिते । न्याये ॥ सम्यगज्ञोऽव । चचप्रत्यन्वविपथा ऽजितियोगविभागादच् ॥ यद्वा । स ङ्गतमञ्जसावस्त्वमव । प्रकीनपु स कोइतिङ्गलम् ॥ त्रि० समीचीने ।। चभ्यस्ते ।। चविरुद्धे । युक्ते ।। न्याय्ये । सत्त्ववयापि ॥

सम्यगन्वय ॥
समन्वारम्भणम् । न॰ समनुगमने ॥
समन्वित · । त्रि॰ सम्यगन्विते । स युक्ते ॥
समन्वितलय · । पुं॰ एकताले ॥ सम्यक् अन्वितो लयो नृत्यगीतवाद्यानां साम्यमत्र ॥ सम्यगन्वितो यो मध्यमलयो वा यस्मिन् ॥
समपद । पु॰ रतिबन्धविशेषे ॥ यथा । योषित् पादौ स्वदिशाप्यकाराभ्यां पीडयेत् स्तनौ । यथेष्टं ताडयेद्योनिं बन्ध समपद स्मृतः ॥ इति ॥ न॰ युद्धकालीनधन्विनां पादन्यासविशेषे । धन्विनां पादयोस्तुल्यरूपतया धारणे ॥ धन्विनां स्थाने ॥
समपर्य्यासनम् । न॰ परिवर्त्तने ॥
समपादम् । न॰ धन्विनां पादयोस्तुल्यरूपतयाधारणे ॥
समबुद्धि । त्रि॰ सर्वत्र रागद्वेषशून्ये ॥ कः कोऽह्यकर्मा॰ कृत्स्नव्यापृतबुद्धौ ॥
समभिव्याहार : । पु॰ सहिते ।
समभिव्याहृत : । त्रि॰ सहोच्चरिते ॥ सहिते ॥
समभिहार . । पुं॰ आभीक्ष्ण्ये । पौनःपुन्ये ॥ भृशार्थे ॥ समभिहरणम् । हृञ्॰ । घञ् ॥ सम्यगभिहारो वा ॥ विप्रकीर्णानां द्रव्याणां राशीभावे । शेषशेषिभावकपदयो .

सहोच्चारणे ॥
समभूमि । स्त्री॰ समानस्थाने । भाजी ॥
समम् । अ॰ सहार्थे । सार्द्धम् । समम् ॥ समति । अम॰ । अम् ॥
समय । पु॰ काले । दिष्टे । अनेहसि ॥ सम्यगेति । इण् गतौ । पचाद्यच् ॥ आर्यकाले ॥ समयेहि सर्वमुपकारि कृतम् । सर्वं समयेकृतमुपकार्य्यं भवति ॥ शपथे ॥ आचारे ॥ सिद्धान्ते ॥ धिषि । संविदि ॥ क्रियाकारे ॥ निर्देशे ॥ सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥ नियमे ॥ अवसरे ॥ समयनम् । समीयन्ते ऽनेनेन वा । समेत्यता । इण् । इगतौ वा । एरच् । पुंसीति घो वा । पचाद्यच् वा । सङ्गमे ॥
समयकार । पुं॰ सङ्केते ॥
समयज्ञ । त्रि॰ कालज्ञे ॥ समयं जानाति । ज्ञा॰ । क ॥
समयभेदी । त्रि॰ संविद् र तिक्रमकारिणि ॥
समया । अ॰ अन्तिके । निकटे । मध्ये ॥ समेति॰ समयनं वा । इण्॰ । आ समिण् निकषिभ्याम् ॥ कालविलम्बने ॥
समयाचार · । पु॰ समयोचिताचरणे ॥ तन्त्रविशेषे ॥

त् क्रियायांमिलने । सम्बन्धविशे
षे । यथा । घटादीनांकपालादौ
द्रव्येषुगुणकर्मणो । तेषुजातेश्चस
म्बन्ध समवाय प्रकीर्त्तित ॥
अवयवावयविनो॰ गुणगुणिनो ॰
क्रियाक्रियावतो॰ जातिव्यक्त्यो॰ नि
त्यद्रव्यविशेषयोश्चय सम्बन्ध स
समवायइत्यर्थ ॥ यथावा॰ श्रोत्रे
णशब्दसाक्षात्कारे॰ समवाय स
न्निकर्ष ॰ कर्णविवरवर्त्त्याकाश
स्यश्रोत्रत्वात् ॰ शब्दस्याकाशगुण
त्वात ॰ गुणगुणिनोश्चसमवायात् ।
सचनित्यसम्बन्ध । सचएकएव ॥
समवायते । अय॰ । घञ् ॥

समवायिकारणम् । न॰ उपादानका
रणे ॥ यत्समवेत कार्यमुत्पद्यते॰
तत्समवायिकारणम् । यथातन्त
व पटस्य॰ पटश्चस्वगतरूपादे ।
यथावा॰ परमाणुद्व्यणुकस्य॰ कपा
लश्चघटस्य । सर्वत्रसमवायिकार
ण द्रव्यमेव । समवायोस्त्यस्य । इ
नि । तच्चतत्कारणञ्च ॥

समवेत । त्रि॰ मिलिते । सङ्गते
॥ समवायसम्बन्धेनवृत्तौ । यथा ।
यत्समवेत कार्यंभवतिज्ञेयन्तुसम
वायिजनकंतत् ॥

समवेतसमवाय । पु॰ सन्निकर्षवि
शेषे ॥ यथ । शब्दत्वसाक्षात्का
रेसमवेतसमवाय सन्निकर्ष ॰
श्रोत्रसमवेतेशब्दे॰ शब्दत्वस्यसम
वायात् ॥

समश्नुवान । त्रि॰ सम्यक्प्रकारेण
व्याप्तिविशिष्टे ॥

समष्टि । स्त्री॰ सामान्ये । समस्त
व्याप्ते । यथा । समस्तत्वेन
स व्याप्ति समष्टिरितिकीर्त्तिता ।
अपिच । समष्टिरीश सर्वेषांस्वा
त्मतादात्म्यवेदनात् । तदभावात्
ततोन्येतुक्लाय तेव्यष्टिसंज्ञयेति ।
सङ्गाते ।

समष्ठिल । पु॰ क्षुपविशेषे । भण्डी
रे । मद्याक्ते । वास्तगन्धके । कोका
ग्रे । कण्टकिफले । उपदंशे ॥
कोकुआ॰ इ॰ भा॰ ॥

समष्ठिला । स्त्री॰ गण्डीरे । गण्ड
रदुर्वा॰ इ॰ प्र॰ शाकि ॥ सम्यग
ष्ठिलाबीज यस्या . ॥

समष्ठ्यस्थानम् । न॰ सकलाङ्गाने

समष्ठिल । पु॰ समष्ठिले ॥

समष्ठिला । स्त्री॰ समष्ठिलायाम् ॥
समेतिष्ठति । मिथिलादयश्चेति
साधु ॥

समष्ठीला । स्त्री॰ समष्ठिलायाम् ॥

समसनम् । न॰ समासिपादानामैक्य
साधने । अनेकस्यपदस्यएकपदीभव
ने ॥ सङ्क्षेपणे ॥ असुक्षेपणे
। सम्पूर्वात् ल्युट् ॥

समसुप्ति : । स्त्री॰ कल्पान्ते । महा

न्येऽध्यस्तत्वात्, तद्व्यतिरेकेणान्यस्तोऽप्यनुसन्धानेन, विद्यमानेति कार्यकारणात्मके प्रपञ्चे, चैतन्यमात्रगोचरोऽयं समाधिः, सलयपूर्वक उच्यते। तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाऽविद्यातत्कार्यस्याक्षीणत्वात्, एवं चित्तनेऽपि कारणसत्त्वेन, पुनः क्रमात् प्रपञ्चोत्थानात्, अयं सुषुप्तिवत् सबीजः, समाधिर्न मुख्यः। मुख्यस्तु, तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेण, अविद्यायां निवृत्तौ सर्गक्रमेण तत्कार्यं निवृत्तिरनाद्यविद्याया अपुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजोऽबाधपूर्वकः समाधिः। स एव, सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते इत्युक्तेन श्लोकेन प्रदर्शितः। तथाहि। सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि च। इन्द्रियकर्माणि, इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां, वाक्पाणिपादपायूपस्थाऽऽख्यानां वा ज्ञानाम्, आन्तर्यो मनोबुद्ध्योः कर्माणि, शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि, वचनादानगमनविहरणोत्सर्गानन्दाख्यानि च, सङ्कल्पाध्यवसायौ च।

एवं प्राणकर्माणि च, प्राणानां, प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि, बहिर्नयनमधोनयनमाकुञ्चनप्रसारणाद्यशितपीतसमानयनमूर्द्ध्वनयनमित्यादीनि। अनेन पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चप्राणाः, मनोबुद्धिश्चेति सप्तदशात्मकं लिङ्गसूक्ष्मम्, तच्च सूक्ष्मभूतसमष्टिरूपं, हिरण्यगर्भाख्यमिह विवक्षितमिति वेदितुं सर्वाणीति विशेषणम्। आत्मसंयमयोगाग्नौ, आत्मविषयकः संयमो धारणाध्यानसम्प्रज्ञातसमाधिरूपस्तत्परिपाके सति योगः, निरोधसमाधिः। यं पतञ्जलिः सूत्रयामास। व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणाम इति। व्युत्थानं, क्षिप्तमूढविक्षिप्ताख्यभूमित्रयम्, तत्संस्काराः समाधिविरोधिनः, ते योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणञ्चाभिभूयन्ते, तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति, ततश्च निरोधमात्रक्षणचित्तान्वयो निरोधपरिणाम इति। तस्य फलमाह। ततः प्रशान्तवाहिता संस्कारादिति। तमोरजसोः सर्वात्मना विक्षेपशून्यत्वेन शुद्धसत्त्वरूपं चित्तं प्रशान्तमित्युच्यते। पूर्व

नाममाकृतकृति । कृष्ठउत्तलवर्णे षु ॥ समानशब्देनपूर्वाचार्य्यैर्नि र्द्दिष्टादवगोभिधीयन्ते दृश्यसमानाकृ तिवचनादितिकैयटः । वचना दिति । यथा । इई उञ ऋत्लृक् लृक् दृश्यसमानाकृतिपूर्वव्याकरण वचनादित्यर्थ इतिविवरणम् । त्रि॰ सतो । साधौ ॥ समे । तुल्ये । अनातिरिक्तवर्णे ॥ एकस्मिन् ॥ समन्तादनित्यनेन । अन॰ । इत्त र्थे तिपरुष् ॥ समतिना अन॰ । ताच्छील्यवयोवचनशक्तिषु चानश् । आगमशासनमनित्यमितिसुमन ॥ सद्दमानेनवर्त्तत इतिवा । वीप सर्जनस्ये तिसभाव. ॥ समान मानमस्ये तिवा । समानस्यच्छन्द सीतिस । ।

समानकालीनः । त्रि॰ समकालो त्पत्तिकेः ॥ यथा । गोपुटुह्यमाना स्वागत । दुग्धास्वागतत्वादौ समानकालीनत्वभावनै । तेनगो विषयकवन्तमानदोहनकालीनग मनानुकूलक्षतिमान् । एवगोविष यकातीतदोहनसमानकालीनातो तगमनानुकूलक्षतिमानितिबोध ॥

समानयानकर्म्मा । पुं॰ सर्व्वः प्रभेदे ॥ यथा । तात्कालिकफललाभा र्थं सुसरकालीनफललाभार्थं वायत् राजान्तरेणसहान्यं प्रतियानादिक र्म क्रियते सलमानयानकर्मासन्धि रौय ॥

समानाधिकरण । पुं॰ समानविभ ये ॥

समानाभिहार । पुं॰ समानगुणाना मिश्रणे ॥ यथा । तोयद्मुक्तजल बिन्दूनां जलाशयेसमाभिहार यथागोमाहिष्यादिदुग्धपतितानांग व्यदुग्धानाम् ॥

समानालङ्कृति । स्त्री॰ अलङ्कारवि शेषे ॥ यथा । समानालङ्कृतिर्यो गोवस्तुनोरनुरूपयोरिति ॥

समानिका । स्त्री॰ वर्णवृत्ताक्षरे ॥ ह्रस्वगुरुकायदासङ्कलाभवेत्तदा । सप्तवर्णनिर्मितासासमानिकार्मता ॥ यथा । पद्मचारुचक्षुषानीलनीर जश्रिया ॥ आश्रितमनोभवाः शवाद्मीश्वितम् ॥ अनुष्टुप्भेदेपि । ग्लौरजौसमानिकातु । यथा । यशक्षयापादपद्मसत्तिहृततडागस द्म । श्री समानिकापरेषको चिताषमत्सरेण ॥

समानोदक । पुं॰ चतुर्द्दशपुरुषप र्य्यन्तजन्मनामस्मृतिपर्य्यन्तेच ॥ गोत्रजमात्रे ॥

समानोदर्य्य । पुं॰ सहोदरे । सो दर्य्ये ॥ समानेउदरेशयितः स्थित. । समानोदरेशयितसोदरात्स इतियत् । विभाषोदरइतिपा

स्थिते ॥ सम्यक् आरोपित ॥

समारोह । पु० सम्यगारोहणे । नीचादूर्द्धगमने ॥ सोपाने । समारुह्यतेऽनेन० समारोहणम् । समारोहतिवा । हृहे कर्मणि० भावे वा घञ् । पचाद्यच्वा ॥

समालम्बी । पु० भूतृणे ॥

समालम्भ . । पु० विलेपने । कुङ्कुमादिविलेपे ॥ समालभनम । डुलभष् प्राप्तौ । घञ् । उपसर्गात्खल घञोरितिमुम । घातने ॥

समालम्भनम् । न० विलेपे । घातने ॥ सम्यक् स्पर्शने ॥

समालिङ्ग । पु० समालिङ्गने ॥

समाली । पुं० कुसुमाकरे ॥

समावर्त्त । पु० विष्णौ । स सारचक्रस्यसम्यगावर्त्तकत्वात्तथा । जननमरणादिरूप स सारचक्रमस्यजीवान प्रतिसम्यगावर्त्तयन् समावर्त्त इत्यर्थ । । समाङ् पूर्वात् वृत्यर्न्तात् पचाद्यच् ॥ समावर्त्तनम् । वृतु० । भावेघञ ॥

समावर्त्तनम् । न० साङ्गाधीतवेदस्य गुरोरनुज्ञयागृहागमे । वेदाध्ययनानन्तरगार्हस्थ्याधिकारप्रयोजककर्मणि ॥ सम्पूर्वाद्वर्त्ततेर्ल्युट ॥

समावाय । पु० समुदाये । समूहे ।

समावास । पु० स्थाने ॥

समाविष्ट . । त्रि० आक्रान्ते ॥

समावृत्त । पुं० लब्धानुज्ञे । साङ्गवेदाध्ययनानन्तरत्वमिदानीगृहस्थोभवेतिगार्हस्थ्यायगुरो प्राप्तानुज्ञे ॥ समावर्त्ततेस्म । वृतु० । गत्यर्थेतित ॥

समावेदनम् । न० निवेदने ॥

समावेश । पु० विन्यासे ॥ एकत्रसह्यवस्थाने ॥

समावेशित . । त्रि० सह्यावस्थिते ॥ प्रविष्टे ॥

समाश । पु० सहभोजने ॥

समाश्रय । पु० वासस्थाने ॥ सम्यक्० आश्रय । सम्यगाधारे । सहाये ॥

समाश्रित . । त्रि० सम्यक् शरणागते ॥ सम्यक् प्रकारेणाश्रित ॥

समाश्वस्त : । त्रि० सञ्जातविश्वासे ॥

समाश्वास . पुं० सम्यगाश्वासे ॥

समास । पुं० सङ्क्षेपे । समर्थने ॥ ऐकपद्ये । पदयो पदानांवाएकीकृतौ । समसने ॥ समसनम० पदयो । पदानांवा० एकपदीकरणम् समास । सङ्क्षेप । भावे घञ । सचानेकपदैक्यम् । सच तुर्द्धा० प्रधानार्थस्यचातुर्विध्यात् । तथाचोक्तं महाभाष्ये । क्वचित्समास : पूर्वपदार्थप्रधान । क्वचिदुत्तरपदार्थप्रधान । क्वचि

ऽन्यपदार्थप्रधानः, कश्चिदुभय
पदार्थप्रधान इति ॥ पुनश्चायं द्विधा
नित्याऽनित्यभेदात् । अविग्रहो नि
त्यसमासः, अस्वपदविग्रहो वा ।
समस्यमानयावत्पदघटितविग्रह इ
ति यावत् ।। तद्भिन्नोऽनित्यः ॥
अपि च । कृत्तद्धितसमासैकशे
षसनाद्यन्तधातुरूपाः पञ्च वृत्तयः
। परार्थाभिधानं वृत्तिः, परस्य श
ब्दस्य योऽर्थस्तस्याभिधानमिति यावत् ।
... बोधकशक्तिर्वाक्यविषया । सा द्वि
धा । लौकिकोऽलौकिकश्च । परि
निष्ठितत्वात्साधुर्लौकिकः । प्र
योगानर्होऽसाधुरलौकिकः । य
था राज्ञः पुरुषः । राजन् अस्,
पुरुष सु, इति । अविग्रहो नित्य
समासोऽस्वपदविग्रहो वा । समा
सश्चतुर्विध इति प्रायोवादः, अव्ययी
भावतत्पुरुषबहुव्रीहिद्वन्द्वाधिका
रबहिर्भूतानामपि सह सुपेति विधा
नात् । पूर्वपदार्थप्रधानोऽव्ययी
भावः, उत्तरपदार्थप्रधानस्तत्
पुरुषः, अन्यपदार्थप्रधानो बहुव्री
हिः । उभयपदार्थप्रधानो द्वन्द्व
इत्यपि प्रायिकं प्रायोऽभिप्राय.
। सूपप्रति, उन्मत्तगङ्गमित्याद्य
व्ययीभावे, अतिमालादौ तत्पुरु
षे, द्वित्राः सपुत्रादिश्च बहुव्री
हौ, दन्तोष्ठमित्यादिद्वन्द्वे चाभा

वात् । तत्पुरुषविशेषः कर्मधा
रयः, तद्विशेषो द्विगुः । अनेकपद
त्वं द्वन्द्वबहुव्रीह्योरेव, तत्पुरुषस्य
क्वचिदेवेत्युक्तम् । किञ्च । सुपां
सुपा तिङा नाम्ना धातुनाऽथ तिङां ति
ङा । सुबन्तेनेति च ज्ञेयः समासः
षड्विधो बुधैः ॥ सुपां, राजपु
रुषः । तिङा, पर्यभूषत् । ना
म्ना, कुम्भकारः । धातुना, क
टप्रूः अजस्रम् । तिङां तिङा,
पिबत खादत । तिङां सुपा, कृन्त
विचक्षणेति यस्यां क्रियायां सा कृन्त
विचक्षणा । एहीडादयोऽन्यपदा
र्थे इति, मयूरव्यंसकादौ पाठात्
समासः । २ समुदाये । समर्थे ॥
समासक्त । त्रि, सम्यगासक्ते ।
संयुक्ते ॥
समासङ्गनम् । न, समासङ्गे । मेलने
संयोगे ।
समासत्तिः । स्त्री, सन्निकर्षे ॥
समासन्नः । त्रि, प्रत्यासन्ने । निक
टवर्त्तिनि ॥ समासीदति स्म । स
द्लृ, गत्यर्थे क्तः । समासा
[illegible] ॥
समासवान् । पुं, तुम्बे । अङ्गिरस
र्षे ॥ त्रि, समासाश्रये । समा
सविशिष्टे ॥
समासादित । त्रि, आहृते । प्राप्ते ॥
समासाद्यः । त्रि, प्राप्ये । गम्ये ।

चापं शक्यं । समीसाद्यते । घञ्
ल० । च्छलीयं तु
समासार्था । स्त्री० समस्यायाम् ।
पूरणकृतपद्यांशच्छायायाम् । क
विशक्तिपरीक्षार्थमपूर्णतया पठ्य
मानायाम् । यथा । शतचन्द्रं न
भस्तलमिति । तत्र० दामोदरक
राघातविह्वलीकृतचेतसा। दृष्टं चा
णूरमल्लेनेत्यादिना० सा० पूर्यते
॥ समासैर्थीयस्याः ॥
समासोक्ति । स्त्री० अर्थालङ्कारभेदे
॥ यथा । परोक्तिर्भेदकैः श्लिष्टैः
समासोक्तिः । प्रकृतार्थप्रतिपाद
कवाक्येन० श्लिष्टविशेषणमाहात्म्या
न्नतु विशेष्यस्य सामर्थ्यादपि० यदप्र
कृतस्यार्थस्याभिधानं सा समासोक्तिः
॥ उदाहरणम् । लहिऊण तुज्झ बा
हुफंसं जीए सकोविउल्लासो । जय
लच्छी तुह विरहे ण हीउज्जला दुव्वला य
सा ॥ अत्र जयलक्ष्मीशब्दस्य केवल
कान्तावाचकत्वं नास्ति । प्राकृत
स्य संस्कृतं तु । लब्ध्वा तव बाहुस्पर्शं
यस्याः सको प्युल्लासः । जयलक्ष्मी
स्तव विरहे न खलूज्ज्वला दुर्बला ननु
सेति ॥ अत्र बाहुस्पर्शलाभप्रयुक्तो
ल्लासादिसाधारणविशेषणबलाज्जय
लक्ष्मीवृत्तान्तेनायिकावृत्तान्तरूप
तया गम्यत इति समासोक्तिरलङ्का
रः ॥

समाहरणम् । न० समाहारे ॥
समाहार । पु० । समुच्चये । संसमुदा
यकरणे । एकत्रकरणे । बहूनामि
न्नानावाच्यव्यापारेणबुद्ध्यावापच्चम्
लोत्रिभुवननवद्वाणीकरणे ॥ संक्षे
पे ॥ समूहे । संहतिप्रधानेचार्थे वि
शेषे ॥ यथा छत्रोपानहम् वाक्त्व
चम् । शमीदृषदमिति ॥ चत्र
संहतिरेवस्य्वादिकवचन नित्यं क्लीब
ता च भवतो ॥ समाहरणम् । ह
ञ० । घञ् । सम्यगाहारे ॥
समाहित । त्रि० यतात्मनि । अ
नन्यमनसि । समाहितत्वमेका
ग्रमनसः श्रवणादिषु ॥ समाधि
स्थे ॥ उक्तसिद्धान्ते ॥ आहिते
॥ निर्विवादीकृते ॥ प्रतिज्ञाते ।
सम्मते । अङ्गीकृते ॥ समाधीयते
स्म । क्त । दधातेर्हिः ॥ सम्य
गाहित । स्थितो वा ॥ सावधाने ॥
अलङ्कारान्तरे ॥
समाहृत । त्रि० संक्षिप्ते ॥
समाहृति । स्त्री० संग्रहे । समा
हरणम् । भावे क्तिन् ॥ एककर्तृ
काणामनेककर्तृकाणां वा एकाभि
प्रायाणां वाक्यानां समाहरणे ॥ स
क्षिप्तैः० संक्षेपेण प्रतिपद्यते ऽन
या । क्तिन् ॥
समाह्वय । पुं० आह्वये । सङ्गरे ॥
आह्वाने ॥ प्राणिद्यूते । पशुभिः

कल्पयेत्प्राज्ञ सर्वकर्मसुसर्वदे तिमत्स्यपुराणम् ॥ छन्दोगपरिशिष्टेपि । नाङ्गुष्ठादधिकान्यूनासमित्स्थूलतयाक्वचित् । ननिर्मुक्तत्वचाचैवनसकीटानपाटिता ॥ प्रादेशान्नाधिकानोनानतथास्याद्विशाखिका । नसपत्रानिर्वीर्याहोमेषुचविजानतेति ॥ निषिद्धलक्षणयथा । विशीर्णाविदलाह्रस्वावक्रास्थूलाद्विधाकृता । कृमिदष्टाश्चदीर्घाश्चसमिधोनैवकारयेत् ॥ अत्रदोषायथा । विशीर्णायुःक्षयंकुर्याद्विदलापुत्रनाशिनी । ह्रस्वानाशयतेपत्नींवक्राबन्धुविनाशिनी ॥ कृमिदष्टारोगकरीविद्वेषणकरीद्विधा । पशून्मारयतेदीर्घास्थूलार्थविनाशिनीतितन्त्रम् ॥ नवग्रहाणांसमिधोयथा । अर्कः पलाशः खदिरस्त्वपामार्गोथपिप्पल . उदुम्बरः शमीदूर्वा, कुशाश्चसमिधः क्रमादिति ॥

समिध । पु० असितार्चिषि । अग्नौ ॥

समिन्धनम् । न० समिधि ॥

समिर । पु० वायौ ॥ इ० द्वि० चन्द्र ॥

समी । स्त्री० शम्याम् । बीजगुप्त्याम् ॥ समति । अम० । अच् । गौरादि ॥

समीकम् । न० साम्परायिके । युद्धे ॥ समनम् । अम० । अनीकादयश्चेतिकन् ॥ सम्यगयनवा । ईगत्या स्त्री । बाहुलकात्क ।

समीक्षम् । न० साङ्ख्यशास्त्रे ॥

समीक्षणम् । न० सम्यङ्निरूपणे ॥ प्रेक्षणे ॥ सम्यक्प्रकारेणईक्षणं दर्शनम् ॥

समीक्षा । स्त्री० तत्त्वे ॥ बुद्धौ ॥ निभालने । समीक्षणे । दर्शने ॥ मीमांसाशास्त्रे ॥ सम्यगीक्षणमनयावा ॥ ईक्ष० । गुरोश्चेत्य । टाप् ॥ यत्ने ॥

समीक्ष्य । त्रि० समीक्षणीये । दर्शनीये ॥

समीक्ष्यमाण । त्रि० प्रेक्ष्यमाणे ॥

समीच । पु० समुद्रे । अकूपारे ॥ स अस्तियस्मिन् ॥ कृण्० । समीणकृतिचट्दीर्घत्वञ्चधातोः ॥

समीची । स्त्री० मृग्याम् । एण्याम् ॥ वन्दनायाम् ॥ टित्वान्ङीप् ॥

समीचीनम् । न० सत्ये । ऋते । तथ्ये ॥ त्रि० तद्वति ॥ सम्यगेव । विभाषाञ्चेरदिक्स्त्रियामितिख । समः समि ॥ शोभने ॥

समीन । त्रि० समाम् अधीष्टः भृतः भूतः भावि । समायाः खः ॥ मीनसहिते ॥

समीप । त्रि० अव्यवहिते । निकटे

क्षतिसुभगाङ्गी तेभाबाऽमीभिरयज नोव्रजतिसु,तरादर्प राज स्तएवतवा द्भुधा ।। अतसतायोग • उक्तोदा हरणे स्वसतायोग ' यथोदितसधू सरो• गलितयौवनाकामिनी• सरोविगतवारिज • मुखमनच्चर खाकृती । प्रभुर्द्धनपरायणः० सत तदुर्गत सज्जनोन् पाक्षगत ' खलो• मनसिसन्नशस्यानिमे ।। अतश्यिनिधू सरेशल्ये शस्यान्तरा णीतिशोभनशोभायोग ॥ द्वितीय समुच्चये यथा । सत्वन्यायुग पद्यागुणक्रिया । गुणौचक्रियेगुण क्रिया ' । क्रमेणोदाहरणम् । विदलितसकलारिकुलतवबलमिदम भवदाशुविमलञ्च । प्रखलमुखा निनराधिपमलिनानिचतानिजाता नि ॥ अथमेकपदेतयावियोग प्रियवाचोपगत सुदृ सखोमे । नववारिधरोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यं कालुषसतवाहिते ष्वकस्मात्सितपङ्कदरसोदराश्रुव्यचु । पतितञ्चमहीपतेन्द्रतेषा वपुषिप्रसक्टमापदाकटाक्षै ' ॥ बहूनासमाहारे ॥ खलिकपोतन्याये नबहूनाकार्यसाधने । कारणाना समुद्योग । सद्वितीय समुच्चयः ॥

समुच्छेद । पु• विनाशे ॥

समुच्छ्रय । पुं• विरोधे । वैरे ॥ उच्छ्राये । उन्नतौ ॥ स,मुद्,उत्° श्रय णम् । श्रिञ् • । एरच् ॥

समुच्छ्राय ' । पु• समुच्छ्ये ॥ सम्य गुच्छ्राय • ॥

समुच्छ्रित । त्रि• उच्चे ॥

समुज्झित । त्रि• त्यक्ते ॥ समुज्झि तेस्म । उज्झउत्सर्गे । क्त ॥

समुत्कीर्ण । त्रि• सम्यगुल्लेखिते । विद्धे ॥

समुत्क्रम ' । पु• ऊर्द्ध्वगमने ॥ सम्यगुत्क्रमे ॥

समुत्क्रोश । पुं• कुररपक्षिणि ॥ सम्यमुत्क्रोशति । क्रुश• । अच ॥

समुत्त । त्रि• क्लिन्ने ॥ समुनत्ति । उन्दीक्लेदने । अकर्मकत्वात् कर्त्तरिक्तः । नुदविदेतिपक्षे नत्वा ऽभाव ' ॥

समुत्थ । त्रि• समुद्भवे ॥ समुत्थिते ॥

समुत्थनम् । न• समुद्योगे ॥ व्याधीनांनिर्णये ॥ ऊर्द्ध्वगमने ॥ सम्यक्प्रकारेणोत्थाने । उठावना• उभाकर्ना• इ• भा• ॥ यथा । इन्द्रध्वजसमुत्थान प्रमादाञ्ज्ञात यदि । तदाद्यादृपमेवर्षे कार्त्त व्यना माराप्नुग ' ॥

समुत्थित ' । त्रि• सम्यगुत्थिते ॥

समुत्पतनम् । न• कूर्दने ॥

समुत्पन्न : । त्रि• समुद्भूते ॥

समुत्पिञ्ज । त्रि० अत्यन्तव्याकुले ॥ समुत्पिञ्जति । पिजिहिंसायाम् । अच् ॥ पु० भृशमाकुलसैन्ये । पिञ्जले ॥

समुत्सुक । त्रि० अनुरक्ते ॥ सम्यगुत्कण्ठिते ॥ सम्यगिष्टार्थोद्युक्ते ॥

समुद् । त्रि० सानन्दे ॥ मुदासह वर्त्तते । द्व० ॥

समुदक्त । त्रि० कूपादेरुद्धृतजलादौ । उद्धृते । समुदच्यतेस्म । अञ्चु० । क्त ॥

समुदय । पु० सङ्घे । गणे । समूहे ॥ संयुगे । रणे । युद्धे ॥ समुद्गमे ॥ समुदीयते० समुदयते वा । इण० । अयगतौ वा । एरच् । पचाद्यच्वा ॥ समेत्योदयो ॥ राशाधान्यविरचयाद्युत्पत्तिस्थाने ॥ समुदयन्ति० उत्पद्यन्ते० अस्मादर्थाः । एरच् ॥ दिने । न० लग्ने ॥

समुदागम । पुं० समन्ताज्ज्ञाने ॥

समुदाचार । पुं० अभिप्राये । आशये ॥

समुदाय । पुं० समूहे ॥ युद्धे ॥ समुदायते । अयगतौ । चाद्यूर्द्धः । अच् । समुदयनम । अपदानादौ यञ् वा ॥ पृष्ठस्थायिबले ॥ उद्गमे ॥

समुदित । त्रि० समुत्पतिते समुन्नते ॥ सम्यक्प्रकारेणकथिते ॥

समुदीपगम । न० पश्चिमापरस्य स्सपईयागमने

समुद्ग । पु० सम्पुटके ॥ समुद्गच्छति । गम्लृ० । अन्येभ्योऽपीति ड ॥ यमकभेदे ॥ अर्धाभ्यासः समुद्गः स्यादस्यभेदास्त्रयोमताः ॥ त्रि० मुद्गसहिते ॥

समुद्गक । पुं० सम्पुटके । भूषणाद्याधाने ॥ समुद्गच्छति । गम्लृ० । अन्येभ्योऽपीति ड । स्वार्थे कन् ॥

समुद्गत । त्रि० उत्पतिष्णौ ॥

समुद्गम । पु० ऊर्ध्वगतौ ॥ उत्पत्तौ ॥

समुद्गयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । नयशोभिदुरासीलोपधामरणाहते ॥ नयशोभिदुरा० सीसी० लोपधा० मरणाहते ॥ अस्यार्थः । नय शुभावहोविधि० नयशोभो० भाग्यवान् । सचासौ दुरा लोक० तेजस्वित्वाद्दुर्दर्शइति विशेषणसमासः० तस्मिन । श्रीपधाम श्रीपाश्रयः अतिशुभ्रवर्ण० । अतएवरणाहत० रणार्थी अर्थः । श्रीपधामआसौ० रणाहतश्च तस्मिन्० एवंविधेवीरेसीसी । नयशोभिदुरा० साम्यनादरनिमित्ता

प्रकीर्त्तिनिर्दर्शनेक्षा॰ उपधा॰ उपाय॰ मरणाहृती॰ प्राणत्यागविशेष्यर्थं॰। का॰ नक्षापीत्यर्थं ॥
समुद्गीतम् । त्रि॰ उच्चैर्गीते ॥
समुद्गीर्ण । त्रि॰ वमिते ॥ उत्तोलिते ॥ कथिते ॥
समुद्धत । त्रि॰ अविनीते ॥ समुद्गीर्णे ॥ समुद्धन्निस्म॰ समुद्धन्यतेस्मवा । हन्को गत्यर्थत्वात्कर्त्तरिक्त कर्मणिवा ॥
समुद्धरणम् । न॰ उद्धरणे ॥ सम्यगुद्ध्रियते । उद्धरतेर्ल्युट्॰ भावेवा ॥ वान्तान्ने ॥ उन्नये ॥ भुक्तोज्झितान्मूलितयो . स्यादुद्धरणमुन्नयेद्धृतिरभस . ॥
समुद्धर्त्ता । त्रि॰ उद्धारकर्त्तरि ॥ श्रीगुरौ ॥ सम्यगनायासेन॰ उत्॰ ऊर्ध्वं सर्वं बाधाबधिभूतेशुद्धवित्रस्य विधर्त्ता॰ धारयिता ॥ उन्मूलयितरि ॥ यथा ॥ चनकानांसमुद्धर्त्तेतिरघु ॥
समुद्धृत : । त्रि॰ समुत्क्षीर्णे ॥ अपनीते ॥ उत्थापिते ॥ यथा । जलौघमग्नासचराचराधराविषाणकोट्याखिलविश्वमूर्त्तिना । समुद्धृतायेनवराहरूपिणासमेस्वयम्भूर्भगवान्प्रसीदतु ॥ सम्यक्प्रकारेणउद्धत ॥
समुद्भव । पुं॰ उत्पत्तौ ॥ आरम्भ सम्यगुद्भव ॥ समुद्भवत्यस्मादा ॥ अपादानार्थे ॥ भुवोऽच्छदेरप् ॥
समुद्भूत । त्रि॰ समुत्पन्ने ॥
समुद्र । पुं॰ अम्भोधौ । तत्पर्यायाः । समुद्रो॰ ब्धिरकूपार॰ पारावार॰ सरित्पति॰ उदन्वानुदधि॰ सिन्धु॰ सरस्वान्॰ सागरो॰ र्णव॰ । रत्नाकरो॰ जलनिधि॰ र्यादःपति॰ रपाम्पतिरिति ॥ समुनत्ति॰ उन्दी॰ । स्फायीतिरक् ॥ चन्द्रोदयेसम्यकउन्दन्ति क्लिद्यन्त्यापोयत्रवा । अपामुक्तेवसमुन्दनसमुद्रइतिस्मृतइ॰ वायुपुराणम् ॥ समीचीना॰ उद्रा॰ जलचरविशेषायस्मिन्निति वा ॥ सहमुद्रयामर्यादयावर्त्तते॰ इतिवा ॥ परमात्मनि ॥ समुत्पद्य भूतानिद्रवन्तिलयगच्छन्त्यस्मिन्निति व्याख्यानात् ॥ सङ्ख्याविशेषे ॥ अन्त्यादिमत्सुध समुद्रइति रामायणटीकायांमहेश्वरतीर्थव्याख्यानात् ॥ ढगणस्यद्वितीयपर्याये । आदिगुरुत्रिकले॰ ऽ।॰। त्रि॰ समुद्रासहितेपत्रादौ ॥
समुद्रकफ : । पुं॰ समुद्रफेने ॥ समुद्रस्यकफइव ॥
समुद्रकान्ता । स्त्री॰ नद्याम् ॥ समुद्रस्यकान्ता । समुद्र : कान्तोयस्या वा ॥ पृक्कायाम् ॥

समुद्रगा। स्त्री॰ नद्याम् ॥
समुद्रगृहम्। न॰ जलयन्त्रालये। फाहारेवा घर॰ ब्र॰ भा॰ चि॰ शेष ।
समुद्रचुलुक । पु॰ अगस्त्यमुनौ॥ समुद्रश्चुलुकोगण्डूषोऽस्य॥
समुद्रदयिता। स्त्री॰ नद्याम ॥
समुद्रनवनीतम । न॰ पीयूषे । चन्द्रे॥ समुद्रस्यनवनीतमिव॥
समुद्रनेमि । स्त्री॰ समुद्रमेखलायाम्। भूमौ ॥ समुद्रोनेमिरिवनेमिरस्याः ॥
समुद्रफलम्। न॰ अग्निफले। औषधविशेषे॥ तद्गुणायथा। फल समुद्रस्यकटूष्णकारि॰ वातापहभूतनिरोधकारि। त्रिदोषदावानलदोषहारिकफामयभ्रान्तिनिरोधकारीशिरा॰ नि॰ घण्ट॰॥
समुद्रफेन । पु॰ फेने। अब्धिकफे। डिण्डीरे॥ समुद्रफेनश्चक्षुष्योलेखन शीतल सर। कषायोविषपित्तघ्न, कर्णरुक्कफहृल्लघु॥
समुद्रमेखला। स्त्री॰ भुवि। पृथ्वायाम्। विश्वम्भरायाम्॥ क्षिरायाम्॥ समुद्रोमेखलायस्याः॥
समुद्रयात्रा। स्त्री॰ पोतैनसमुद्रगमने॥ समुद्रयात्रादय' कर्णौनिषिद्धायथा, समुद्रयात्रास्वीकार कमण्डलुविधारणम्। द्विजानामसवर्णासुकन्यासूपयमस्तथा। देवरेणसुतोत्पत्तिर्मधुपर्कपशोर्वध। मांसादन तथाश्राद्धे वानप्रस्थाश्रमस्तथा॥ दत्तायाश्चैव कन्यायापुनर्दानं परस्यच। दीर्घकाल ब्रह्मचर्यं नरमेधाश्वमेधकौ॥ महाप्रस्थानगमन गोमेधश्चतथामख। इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः॥ इतिब्रह्मादयोक्तम् ॥ अपिच। एतानिलोकगुप्तार्थं कलेरादौमहात्मभि। निवर्तितानिकर्माणिव्यवस्था॰ पूर्वकं बुधैरिति॥
समुद्रयानम्। न॰ पोते। वहित्रे॥ यथा। समुद्रयानैरत्नानिमहामूल्यानिसाधुभि'। रत्नपरीक्षकै: सार्द्धमानयिष्ये वणिजितिमत्स्यपुराणम्॥
समुद्रयायी। त्रि॰ समुद्रेणद्विपादिनापोतरगामिनिजने॥ समुद्रयायीबन्दीचतैलिककूटकारक, कूतिमनु'॥ समुद्रयायिभि, सार्द्धं स विद सूत्यलिङ्गं तक्तितमत्स्यपुराणं॥
समुद्ररसना। स्त्री॰ पृथ्व्याम्॥ समुद्रोरसनाकाञ्चीयस्याः॥
समुद्रलवणम्। न॰ काङ्क्षी। सिन्धु

टे । सामुद्रे ॥ समुद्रस्थलवणम् । समुद्रजलजात लवण वा ॥
समुद्रवह्नि । पु० वाडवे । वडवानले ॥
समुद्रविजय । पु० कृष्णादि तत्पितरि ॥
समुद्रसिन्धुसङ्गमः । पु० । तीर्थविशेषे ॥
समुद्रसुभगा । स्त्री० गङ्गायाम् ॥
समुद्रा । स्त्री० शम्यां ॥ शम्या ॥
समुद्रान्तम् । न० जातीफले ॥ अव्यावसाने ॥
समुद्रान्ता । स्त्री० तुण्डिकेय्याम् कापासाम् ॥ समुद्रोन्तोयस्या ॥ यद्वा । मुद्रयासहवर्त्तमानोन्तः समीपोयस्याः । चाक्षादकत्वात् ॥ दुरालभायाम् । यासे । यवासे ॥ समुद्रोन्तोऽस्यस्याः । चर्थाद्यच् ॥ समुद्रोन्तोऽस्यावा ॥ मरुन्मालायाम् ॥ पृक्कायाम् ॥ समुद्रोतोऽस्याः ॥
समुद्राम्बरा । स्त्री० पृथिव्याम् । अचलायाम् ॥ समुद्रोम्बरवसन यस्याः ॥
समुद्रायणा । स्त्री० नद्याम् । सरिति ॥ समुद्रोऽयनं गतिर्यस्याः ॥
समुद्रारु । पु० ग्राहविशेषे ॥ सेतुबन्धे ॥ तिमिङ्गिले ॥
समुद्भेद । पु० प्रादुर्भावे ॥
समुन्दनम् । न० आर्द्रीभावे । क्लेदे ।

क्लेमे । उन्दी० ल्युट् ॥
समुन्न । त्रि० आर्द्रे । समुनत्ति । उन्दी० अकर्मकत्वात् कर्त्तरिक्तः । नुदविदेतिपर्णनत्वम् । सम्यगुन्नः क्लिन्नो वा ॥
समुन्नत । त्रि० समुन्नद्धे ॥ सम्भविशेषे । कृ० धरणि ॥
समुन्नति । स्त्री० समुच्छ्रये । उत्सेधे ॥ अतिशये ॥
समुन्नद्ध । त्रि० समुद्धृते ॥ पण्डितम्मन्ये ॥ गर्वित । दृप्ते ॥ ऊर्ध्वबद्धे ॥ प्रभौ ॥
समुन्नय । पु० समुच्छ्रये
समुन्नाह । पु० उच्छ्राये ॥
समुपक्रम । पु० आरम्भे ॥ समुपक्रमणम् । क्रमु० । घञ् ॥
समुपजोषम । अ० आनन्दे । काल्यार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयोः । अम्प्रत्यय ॥
समुपस्थित । त्रि० प्राप्ते ॥
समुपेत । त्रि० सम्प्राप्ते ॥
समुपेयिवान । त्रि० सम्यगुपगते ॥
समुल्लसत् । त्रि० सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसद्दनकान्तिपूरामृते भवानलविभज्जितानमिममूर्च्छतोनरान् । विदेकमयचन्द्रिकाचयचमत्कृतिं तन्वती तमोऽनु ममशाततो . समदिशन्तनोरङ्गना ।
समुल्लिखन् । त्रि० पादादिनाभूमि

सम्पत्०द्० । स्त्री० भूतौ ॥ गुणोत्कर्षे । हारभेदे ॥ सम्पद्यनमनयावा । पद्० । सम्पदादित्वात् क्विप् ॥ अथसम्पद्धच्यन्ते सत्येकमर्थिकमर्थ । महतश्चिन्तन सम्पत्तया प्राप्यमहाफलम ॥ इतीयतारायाम् ॥ वासनासन्ततौशरीरारम्भका दिपुण्यादिकर्मभिरभिव्यक्तायाम् । साद्विधा । दैवी० आसुरीति भेदात् । अनयोर्विस्तारस्तुभगवद्गीतायाषोडशाध्यायेयथा । श्रीभगवानुवाच । अभयसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थिति । दान दमश्चयज्ञश्च स्वाध्यायस्तपआर्जवम् । अहिंसासत्यमक्रोधस्त्यागश्शान्तिरपैशुनम । दयाभूतेष्वलोलुपत्वंमार्दवं ह्रीरचापलम् ॥ तेज क्षमाधृति शौचमद्रोहोनातिमानिता भवन्तिसम्पदं दैवीमभिजातस्यभारत ॥ दम्भोदर्पोभिमानश्चक्रोध पारुष्यमेवच । अज्ञानञ्चाभिजातस्य पार्थसम्पदम सुरीम् ॥ दैवीसम्पद्विमोक्षायनिबन्धायासुरीमता । माशुच सम्पदं दैवीमभिजातोसि पाण्डव ॥ द्वौभूतसर्गौलोकेस्मिन् दैवआसुरएवच । दैवोविस्तरश प्रोक्तआसुर पार्थमेशृणु ॥ प्रवृत्तिञ्चनिवृत्तिञ्चजनानविदुरासुरा । नशौचनापिचाचारोनसत्य तेषुविद्यते ॥ असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् । अपरस्परसम्भूत किमन्यत् कामहैतुकम् । एताह्दृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माण क्षयायजगतोऽहिता ॥ काममाश्रित्यदुष्पूरं दम्भमानमदान्विता । मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रता ॥ १० ॥ चिन्तामपरिमेयाञ्चप्रलयान्तामुपाश्रिता । कामोपभोगपरम एतावदितिनिश्चिता ॥ आशापाशशतैर्बद्धा कामक्रोधपरायणा । ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ इदमद्यमयालब्धमिद प्राप्स्येमनोरथम् । इदमस्तीदमपिमेभविष्यतिपुनर्धनम् ॥ असौमयाहत शत्रुर्हनिष्येचापरानपि । ईश्वरोहमहं भोगीसिद्धोहं बलवान् सुखी ॥ आढ्योभिजनवानस्मिकोन्योस्तिसदृशोमया । यक्ष्येदास्यामिमोदिष्यइत्यज्ञानविमोहिता ॥ अनेकचित्तविभ्रान्तामोहजालसमावृता । प्रसक्ताकामभोगेषुपतन्तिनरकेऽशुचौ ॥ आत्मसम्भावितास्तब्धाधनमानमदान्विता । यजन्तेनामयज्ञैस्तेदम्भेनाविधिपूर्वकम् ॥ अहङ्कार बल दर्पं कामक्रोधञ्चसंश्रिता । मामात्मपरदेहेषुप्रद्विषन्तोऽभ्यसूयका ॥

स्थिते ॥

सम्पीड । पुं॰ गोदने ॥

सम्पीडनम् । न॰ सम्यक प्रकारेणव्यथने ॥

सम्पुट । पुं॰ कुरुबके ॥ समुद्गके ॥ पेटके ॥ एकजातीयेभयमध्यवर्त्तिनि ॥ रतिबन्धविशेषे ॥ यथा । सम्प्रसार्य्योभयोपाद्दौबध्वातजंघिलक । भगलिङ्गस्य योगाद्भवति सम्पुटोऽपिस ॥

सम्पुटक । पुं॰ समुद्गके । भूषणाद्यावपने । उव्वा॰ वु॰ भा॰ प्र॰ ॥ सम्पुट्यते । पुटसंश्लेषणे । कुन् ॥

सम्पूर्ण । पुं॰ रागजातिविशेषे ॥ यथा । षोडव पञ्चभिः प्रोक्त. स्वरैः षड्भिस्तुषाडव । सम्पूर्णः सप्तभिः प्रोक्तोरागजातिस्त्रिधामते ति ॥ त्रि॰ न्यूनत्वदोषरहिते । कृत्स्ने । परिपूर्णे ॥ सा॰ ॥ सम्पूर्यतेस्म । पूरी॰ । आप्यने । कर्त्तरि॰ कर्मणिवाक्त : ॥

सम्पृक्त । त्रि॰ खचिते । मिश्रिते । चारब्धे । कबरे । मिश्रे ॥ सयुक्ते ॥ ससृष्टे । सम्पृच्यतेस्म । पृची॰ । क्त ॥

सम्प्रचाल । पुं॰ तपेःविशेषलब्धसम्यक्ज्ञानप्रस्थविशेषे ॥

सम्प्रज्ञात । पुं॰ समाधिप्रभेदे ॥ त्रि॰ सम्यक्प्रकर्षेणज्ञाते ॥

सम्प्रज्ञातसमाधि । पुं॰ सविकल्पकसमाधौ ॥ ब्रह्माहमस्मीतिचिन्तयतो॰ यावच्चेतोव्याप्रतिस्तावत्सम्प्रज्ञातसमाधि ॥

सम्प्रतापन । पुं॰ कुम्भीपाके ॥

सम्प्रति । अ॰ अधुनार्थे ॥ सम्॰ प्रति॰ एतयो समाहारद्वन्द्व ॥ न्याय्ये ॥

सम्प्रति . । पुं॰ पूर्वकल्पस्थार्हद्भेदे ॥

सम्प्रतिपत्ति । स्त्री॰ उत्तरविशेषे । साध्यस्यस्वीकारः ॥ गुणाभियोग प्रत्यर्थीयदित प्रतिपद्यते । स्यात् सम्प्रतिपत्ति आध्याक्षर्विपश्चिद्भ्रह्मा ॥ निश्चये ॥ उत्पत्तौ ॥

सम्प्रतिपन्न । त्रि॰ सम्यगज्ञाते ॥

सम्प्रतिष्ठा । स्त्री॰ स्थितौ ॥

सम्प्रतीति . । स्त्री॰ सत्यकख्याती ॥ सम्यकज्ञाने ॥

सम्प्रत्यय । पुं॰ आदरे । अङ्गीकारे ॥ ज्ञाने । निश्चये ॥ यथासज्ञा सम्प्रत्ययायस ज्ञात्वनिश्चयायेतितद्यर्थ ॥

सम्प्रदाता । त्रि॰ दातरि । सम्प्रदानकर्त्तरि ॥

सम्प्रदानम् । न॰ दानपात्रे । चतुर्थीकारके । त्यागोद्देश्ये ॥ सम्यक प्रकर्षेणदीयतेऽस्मैतत् । सम्यक प्रपूज्यदानं वा ॥

प्रसन्नधी ॥ स्वात्मनश्चान्वितौदेवि तद्ध्यानाचारतत्पर । चार्थपञ्चान्वितौदेशितथास्वरूपविग्रहधृक् ॥ श्रीवैष्णो तत्यसञ्ज्ञातपुत्र . ध्यानपरायण . । केवलविष्णुतत्त्वञ्च प्रोक्तोभागवत मिदी ॥ इतिश्रीमत्सिसङ्गमतन्त्रे १ खण्डे ८ पटल . ॥ चत्वारोवैष्णवसम्प्रदायभेदा यथा । श्रीम ञ्चारायणोब्रह्मानारदोव्यासएवच । श्रीलमध्वपद्मनाभौनृहरिर्माधवस्त था ॥ अक्षोभ्योजयतीर्थश्चज्ञानसि न्धुर्महानिधि । विद्यानिधिश्चराजे न्द्रोजयधर्ममुनिस्तथा । पुरुषोत्त- मोब्रह्मण्योव्यासतीर्थमुनिस्तथा । श्रीमांल्लक्ष्मीपति श्रीमान्माधवेन्द्र पुरिस्तथा ॥ सम्प्रदायविहीनायेम न्त्रास्तेनिष्फलामता . । अत ' क लौभविष्यन्तिचत्वार : सम्प्रदायि न : ॥ श्रीमाध्विरुद्रसनकावैष्णवा ' क्षितिपावनाइति ॥ सम्प्रदानम् । हुदाञ्‌ • । घञ • भावइतियुक ॥

सम्प्रधारणम् । न• विचारे॥ सम्प्रश्ने ॥

सम्प्रधारणा । स्त्री• उचितानुचितनि श्चये । समर्थने । इदमुचितमेवेति निश्चये ॥ सम्प्रधारणम् । धृञ् • । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष . । पु • विस्मरणे ॥

सम्प्रयोग . । पु • रते ॥ निधुवने ॥ ॥ अन्विती । सम्बन्धे ॥ कार्मणे ।

वशीकरणादिकर्मणि ॥ त्रि• प्रार्थि ते ॥

सम्प्रयोगी । पु • कामकेली । कामि कामुके ॥ सम्प्रयोजके ॥

सम्प्रश्न । पु • सम्प्रधारणे ॥

सम्प्रसाद . । पु • सुषुप्तिस्थाने ॥ स म्यक्प्रसीदत्यस्मिन । सदॢ• । घ ञ ॥ विदुषि ॥ प्राज्ञे ॥

सम्प्रसाधनम् । न• पवित्रीकरणे ॥ शोभाजनके ॥

सम्प्रहार । पु• गतौ ॥ युद्धे । रणे सम्प्रहरणम् । हृञ् • । घञ् ॥ हननें• इतिधरणि ॥

सम्प्रहृष्ट . । त्रि• पुलकिते । पुलकि तगात्रे ॥

सम्प्राप्त । त्रि• समागते ॥ सम्यक् प्रकारेणप्राप्त . ॥

सम्प्राप्ति ' । स्त्री• सम्यक्प्रापणे ॥

सम्प्रैष । पुं• नियोगे । विधौ ॥

सम्प्लव ' । पु • एकीभाविनेतरेतरच लीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये ॥ सङ्क्षोभे । उ न्नती ॥ यथा । मेघ सम्प्लवती ॥ सम्प्लवनम् । प्लुङ् • । ऋदोरप् ॥ समुप्लवतीवा । पचाद्यच् ॥

सम्प्लवोपल : । पुं• चन्द्रकान्ते ॥

सम्फाल : । पुं• मेषे ॥

सम्फुल्ल : । त्रि• विकचे । विकसि ते । प्रफुल्ले ॥ सम्फलति ' । ञिफ

ज्ञानम् सम्यग् ज्ञानम् ॥
सम्यगदर्शनम् । न॰ अथथात्मदर्शने । शास्त्रोपपत्तिभ्यामवधारितेऽथथात्मदर्शने ॥ अतेयान स्यदत्वादात्म्यैकत्वबुद्धिरेवसम्यग्दर्शनमित्याहुर्भाष्यकारो ॥
सम्यक् । अ॰ दृढे ॥ प्रशस्तायाम् ॥
सम्यक् । त्रि॰ मनोज्ञे ॥ सङ्गते ॥ सत्यवचने । च्युते ॥ समयादिशून्ये ॥ अर्थेनसहसम्यगञ्चतिसङ्गच्छतयितिसम्यक् । अञ्चु॰ ऋत्विगादिना॰ क्विन् । सम समीतिसम्यादेश ॥
सम्यगव्यय । पुं॰ आयतुरीयाश्रव्यये ॥
सम्राट् । पु॰ राजसूययागकर्त्तरि । राजसूयिनि । चतुरब्धसीमावच्छिन्नायाभूमेरीश्वरे । चक्रवर्त्तिनि । सार्वभौमेनृपवरे ॥ द्वादशराजमण्डलस्येश्वरे ॥ क्रियतपरिमाणायाभूमेराज्ञोनृपान्येभ्यत्ववदाज्ञयाशास्ति॰ तस्मिन्नपि । राज्ञआज्ञयाशासके ॥ यथाहयेनेष्टराजसूयेन॰ मण्डलस्येश्वरश्च । शास्तियश्चाज्ञयाराज्ञ स सम्राडित्यमर ॥ सम्यक्॰ राजति ॥ राज्॰ । क्विप् । मोराजिसम : क्वौ ।
सयावसानम् । न॰ तीर्थविशेषे ॥
सयीनि । पु॰ इन्द्रे ॥ त्रि॰ समानयोनौ ॥
सर । पु॰ कटूरे । दध्यग्रे । दध्युत्तरे । दध्नउपरिस्थमण्डे ॥ गतौ ॥ बोधे ॥ लवणे ॥ निर्झरे ॥ नीरे । जले ॥ सरोवरे ॥ त्रि॰ सारके । भेदके ॥ सरति । सृ॰ । अच् । दध्नस्तूपरियोभागी घनः स्नेहसमन्वित । सनीकीसरइत्युक्तोदघ्नोमण्डस्तुमस्त्विति ॥ सरस्वादुगुरुर्बल्यो वातघ्निप्रणाशन सोऽग्निरवलिप्रधमन पित्तश्लेष्मविवर्द्धन ॥
सर काक । पु॰ हसे ॥
सर काकी । स्त्री॰ वरटायाम् । हंस्याम् ।
सरक । पु॰ न॰ शीधुपाने । शीधुपाने ॥ इक्षुशीधुनि ॥ अच्छिन्नाध्वगपङ्क्तौ । अच्छिन्नाध्वगानापङ्क्तिर्यस्मिन । सरक॰ सडक॰ इ॰ भा॰ प्र॰ वर्त्मनि ॥ न॰ गगने । आकाशे ॥ तीर्थविशेषे ॥ सरसि ॥ त्रि॰ गन्तरि । गतिशीले ॥ स्त्रियते । सृङ् गतौ । क्ल आदिभ्य॰ सञ्ज्ञायांवुन् ॥ सरति । सृगतौ । प्रसृत्व ' समभिहारेवुन्॰ कुलिचावुन ॥
सरघा । स्त्री॰ मधुमक्षिकायाम् ॥ रङ्घणम् । रधिगतौ । सनोघवे

तिथिल्करणादन्येभ्योऽपीति घ ञागमशास्त्रस्यानित्यत्वात् नुम् । सर णिवागत्यावर्त्तते ॥

सरजम् । न० नवनीते ॥

सरजा । स्त्री० मल्लिकायाम् । रज स्वलायाम् ॥ पु० त्रि० शीघ्र ॥

सरट् । पु० वायौ ॥ वारिदे ॥ सरघायाम् ॥ सरति । सृ० । सर्त्तेरटि ॥

सरट । पु० कृकलासे । सरति । सृ० । शकादिभ्योऽटन् ॥

सरटि । पु० वायौ । मेघे ॥

सरटु । पु० सरटे ॥

सरणम् । न० गमने । लोहमले ॥ सर्त्तत्यनेन । सृ० । जुचङ्क्रम्येत्यादिना युच् ॥ धावने । भावे ल्युट् वा ॥

सरणा । स्त्री० गन्धालिकायाम् । प्रसारण्याम् ॥ विस्तृतायाम् ॥ सरति । सृ० । बाहुलकात् युच् । टाप् ॥

सरणि । स्त्री० पङ्क्तौ । मार्गे । पद्धतौ । श्रेण्याम् ॥ सरन्त्यनया । सृ० गतौ । अर्त्तिसृधृधमीत्यनि ॥

सरणी । स्त्री० कण्टकारायाम् ॥ पथि । पङ्क्तौ ॥ ङीष् ॥ सर माद्र० कुतिहिमगिरिप्रसिद्धे निष्पद्यमानविशेषे ॥

सरण्ड । पुं० धूर्त्ते ॥ सरटे । भूषणविशेषे ॥ सरति । सृ० । शण्डमृगप्रभृत्यण्डन् ॥ कामुके ॥ खगे ॥

सरण्यु । पु० वारिवाहे ॥ मातरिश्वनि ॥ सरति । सरन्ति वा । सृ० । सृयुवचिभ्योऽन्युजागूजक्नुचः इत्यन्युच् ॥ सरण्युः शीघ्रगामीति वेदभाष्यम् ॥ जले ॥

सरत् । पु० तन्तौ । सूत्रे ॥

सरथ । त्रि० रथेन सह वर्त्तमाने ॥

सरद्वान् । पुं० गौतमसुते ॥

सरपत्रिका । स्त्री० पद्मपत्रे ॥

सरभसम् । त्रि० सत्वरे ॥

सरमा । स्त्री० कुक्कुर्याम् ॥ देवशुन्याम् ॥ राक्षसीभेदे । विभीषणस्य पत्न्याम् ॥ सरति । सृ० । बाहुलकादमः ॥ कश्यपपत्नीविशेषे । श्वमरादीनां मातरि ॥ त्रि० श्रीयुते ।

सरयु । पु० पवने । वायौ ॥

सरयु । स्त्री० नदीविशेषे ॥ सरति । सृ० । सर्त्तेरयु ॥

सरयू । स्त्री० नदीप्रभेदे । सरति । सृ० । सर्त्तेरयूरित्येके ॥ सरयूसलिलं लघुस्वादुपुष्टिप्रदायकम् ॥

सरल । पु० पीतद्रौ । पूतिकाष्ठे ॥ अस्य गुणाः । सरलो मधुरस्तिक्तः कटुपाकरसो लघुः । स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः ।

सृत । कफानिलखेदय्काका सालक्ष्मीवयापह ॥ इति ॥ देव दारुविशेषे ॥ बुद्धे ॥ अग्नौ ॥ स रति । स० वाहुलकादलच् । तथा दित्वाद्दाकल । वाहुलकाद्दुण । ॥ त्रि० उदारे ॥ ऋजौ । अवक्रे ॥ यथा । सरलाविरलायन्ते घनाय कोकलिद्रुमा : ॥ नवमीनवपुष्पा गामस्मिन्स सारकानने ॥

सरलद्रव । पु० ढकधूपे । श्रीवेष्टे ॥ सरलस्यदेवदारो द्रव ॥

सरला । स्त्री० सर्वानुभूतौ । त्रिपुटा याम । चिडति । श्वेतत्रिधारेति ख्यातौषधौ ॥ सरति । स० । वा हुलकात्कलन् । टाप् ॥

सरलाङ्ग । पु० श्रीवेष्टे ॥

सरलाधिका । स्त्री० सोनेय्याम् ॥

सर । न० नीरे ॥ तडागे । स ञा नञोभयजलाश्रये ॥ अस्यजलगुणा । सारस लघुलष्याग्रवल्य स्वादुक षायवदिति ॥ देवखातजलाशये ॥ सियते । सगतौ । कर्मण्यसुन् ॥

सरसम् । न० सरसि ॥ रसवतिमासे ॥ त्रि० रसस युक्ते ॥

सरसम्प्रतम् । न० सुद्मम् । त्रि कर्टे ॥

सरसा । स्त्री० द्राचावाम् ॥ रसविशि ष्टायाम् ॥

सरसिजम् । न० पद्मे ॥ सरसिजातं म् । जनजनने० जनौप्रादुर्भावेवा । सप्तम्यांजनेर्ड । तत्पुरुषइति० ङेरलुक् ॥

सरसी । स्त्री० कासारे । सरसि ॥ स्त्रियते । स० । कर्मण्यसुन् । गौरादित्वान् ङीष् ॥ प्रकृतिच्छ न्द । २१ प्रभेदे ॥ तल्लक्षणोदाह रणे यथा । नजभजजाजरौयदित द्वामदितासरसीकवीश्वरे । ॥ वि कुरकलापथे वलक्षतप्रमदासुलसद्र सोर्मिषु० स्फुटवदनाम्बुजासुविल सद्गुणवालसद्भालवल्लिषु । कुचयुग चक्रवाकमिथुनानुगतासुकलाकु तूहली० व्यरचयदच्युतोव्रजमृगोन यनासरसीषुविभ्रम ॥

सरसीक । पु० सारसपक्षिणि ॥

सरसीरुहम् । न० पद्मे । नलिने । सारसे । सरस्यारोहति । रुह० । इगुपधेतिक । तत्पुरुषेकृतीत्य लुक ॥

सरस्वान् । पु० सागरे । अर्णवे ॥ नदे । सरोनीर ० गतिर्वाऽस्त्यस्मि न् । भूम्निमतुप् । तसौमत्वर्थइ तिभत्वान्नपदकार्यम् ॥ त्रि० रसि के ॥

सरस्वती । स्त्री० वाण्याम् । वाचि ॥ वाग्देव्याम् । पर्यायास्तु । ब्राह्मी तुभारतीभाषागीर्वाग्वाणीसरस्वती ति ॥ अस्याध्यान यथा । वाणीम्

पूर्णनिशाकरोज्ज्वलमुखीकर्पूर कुन्दप्रभाचन्द्रार्धाङ्कितमस्तकानिजकरे सविभ्रतीसादरात् । वीणामक्षगुणं सुधाढ्यकलशं विद्यांश्च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढाभजे ॥ नदीविशेषे । ब्रह्मसमुद्भवायाम् ॥ वाक्प्रदायाम् । ब्रह्मसुतायाम् ॥ अस्याजलगुणायथा । सरस्वत्याजलं स्वादु पूतं सर्वरुजापहम् । रुच्यञ्च दीपनं पथ्यं देहकान्तिकरं लघु ॥ सातुदिग्भेदेनसप्तनामीयथा । पुष्करेपितामहयज्ञे समाहूता० सुप्रभा १ नैमिषेसत्रयाजिभिरूर्षिभिराहूता० काञ्चनाक्षी २ गयदेशेगयराजयज्ञआहूता० विशाला ३ उत्तरकोशलायामौद्दालकमुनियज्ञे समाहूता० मनोरमा ४ । कुरुक्षेत्रेकुरुणा यज्ञे समाहूता० ओघवती ५ । गङ्गाद्वारे दक्षप्रजापतियज्ञे समाहूता० सुरेणु ६ । हिमालयेब्रह्मणः पुनर्यज्ञे समाहूता० विमलोदा ७ तत्सप्तसरस्वत्यः समागता । अतस्तत्तीर्थंसप्तसारस्वतनाम्नाप्रसिद्धमितिमहाभारतेशल्यपर्वं ॥ स्त्रीरत्ने ॥ गवि ॥ नदीषु ॥ मनुपत्न्याम् ॥ ज्योतिष्मत्याम् ॥ ब्राह्म्यामोषधौ ॥ सोमवल्ल्याम् ॥ दुर्गायाम ॥

कुरुक्षेत्रविशेषे ॥ सरोऽस्त्यस्याः । सरांसिसन्त्यस्यांवा । मतुप् । ङीप् ॥ तीर्थविशेषे ॥

सरस्वतीसङ्गम । पु० तीर्थविशेषे ॥

सरस्वतीसागरसङ्गम । पु० तीर्थविशेषे ॥

सरस्वत्यरुणासङ्गम । पु० तीर्थविशेषे ॥

सरहस्य । त्रि० मन्त्रदेवताज्ञानसहिते

सरा । स्त्री० निःसृतायाम् ॥ गन्धालिकायाम् । प्रसारण्याम् ॥ झरे ॥

सराग । त्रि० रागसहिते ॥

सराव । पुं० शरावार्थे । सेर० ठ० भा० प्र० कुडवद्वयपरिमाणे । मानिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके ॥ यथा । करसरावकसम्पद्वाणागारकोषिषु । भिक्षार्थमटनकाश्चारोवा नाप्यगभौषिषु ॥ सरणम् । सृ० । अदोरप् । सरतिवा । अच् । सरसराशेऽवति । अव । अण्० अव्वा ॥

सरि । पु० स्त्री० निर्झरे । उणादौ ॥ सरणम् । सृ० । अच्च ॥

सरिका । स्त्री० हिङ्गुपत्र्याम् ॥

सरित् । स्त्री० नद्याम् । तरङ्गिण्याम् ॥ सरति । सृ० । हृसृरुहियुषिभ्यइतिसर्वेरिति ॥ सूत्रे ॥

सरितामनाथ । ( पुं० समुद्रे ॥
सरिताम्पति । (

सरितांवरा । स्त्री॰ गङ्गायाम् ॥ यथा । त्व देवसरितानाथ त्व देवि सरितांवरे । उभयोः सङ्गमेजा त्वाम् स्नामिदुरितानिवै ॥ इतिगङ्गासागरसङ्गमस्नानमन्त्र ॥

सरित्पति । पुं॰ समुद्रे । पारावारे । सरितांपति ॥

सरिद्वरा । स्त्री॰ गङ्गायाम् । विष्णुपद्याम् ॥ सरित्सुवरा ॥

सरिन्नाथ । पु॰ समुद्रे ॥

सरिमा । पु॰ अनले । वायौ ॥ सरति । सृ॰ । हृभृधृसृस्तृशृभ्य इमनिच ॥

सरिलम् । न॰ सलिले । जले ॥ रलयोरैक्यम् ॥

सरिषप । पु॰ सर्षपे । कटुस्नेहे ।

सरी । स्त्री॰ निर्झरे ॥

सरीसृप । पु॰ सर्पे । पृदाकौ । आशीविषे ॥ कुटिलं सर्पति । सृप॰ । नित्यकौटिल्ये गताविति यङ् । पचाद्यच् यङोचिचेतिय ङोलुक् ॥ वृश्चिकराशौ ।

सरीसृपन् । त्रि॰ अतिशयेनसर्पति ॥

सरूप । त्रि॰ सदृशे ॥ समानरूपमस्य । ज्योतिर्जनपदेतिसमानस्यस ॥

सरोजम् । न॰ अब्जे । पद्मे ॥ सरसिजातम् । जनी॰ सप्तम्यांजनेर्डः । तत्पुरुषकृत्यबहुलोत्ति डेर्लुक् ॥

सरोजखण्ड । पु॰ पद्मवने ॥ सरोजानांसमूहः । कमलादिभ्यखण्डः ॥

सरोजन्म । न॰ पद्मे ॥

सरोजी । पु॰ ब्रह्मणि । सुरज्येष्ठे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री॰ कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे ॥ सरोजानिसन्त्यस्याम् । पुष्करादिभ्यो इनि ॥

सरोत्सव । पुं॰ सारसखगे ॥

सरोध । त्रि॰ रुद्धे ॥ रोधेनसहवर्त्तमान ॥

सरोरुट् । ) पु॰
सरोरुहम् । ) न॰ अम्बुजे ॥

सरोरुहासन । पु॰ ब्रह्मणि । कमलासने ॥

सरोवर । पु॰ पद्माकरे । तडागे ॥

सर्ग । पु॰ स्वभावे ॥ निर्मोचे ॥ निर्मोचस्त्यागेमोचाभावोवा । मोक्षाभावेयथा । इहैवतैर्जितःसर्गोयेषांसाम्येस्थितंमनः ॥ निश्चये ॥ यथा । एषचावश्यकर्तव्यदितिसर्गएषतेऽस्ति ॥ अध्याये ॥ मोहे ॥ उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणिघञ् ॥ सृष्टौ ॥ यथा । सर्गश्चप्रतिसर्गश्चेति ॥ कौमारवार्षं प्राजापत्यौमानवइत्यादिभेदे पुराणेषुविस्तरेणोक्तः॰ द्वैतप्रपञ्चे । स्थूलदेहोत्पत्तौ । अचे

ततस्तष्टौ ॥ सर्ज्यन्ते येषुसृष्ट्या : प्राणिनोऽइतिव्युत्पत्त्या॰ पृथिव्यादि लोका सर्गपदवाच्याश्च । अथो क्तगुणत्रोअन्मएतस्मिहतोऽहम् । भूतसत्त्वेन्द्रियार्थानासम्भव सर्ग उच्यते । इतिश्रीविष्णुभागवतम् ॥
सर्गक्रम । पु॰ प्रकृतेर्महदाद्युत्पत्ति क्रमे ॥ यथा । प्रकृतेर्महास्ततोऽह ङ्कारस्तस्माद्गणस्तुषोडशक । तस्मा दपिषोडशकात्पञ्चभ्य पञ्चभूता नीति ॥ सर्गस्योत्पत्ते क्रम ॥
सर्गबन्ध । पु॰ महाकाव्ये ॥ सर्गा णांबन्धोयत्र ॥
सर्ज्ज । पु॰ सालवृक्षे । सर्जभा॰ इतिख्याते ॥ सृजति । सृजेरिगुप धेतिक॰ ॥
सर्ज्जक । पु॰ पीतसाले । आसने । बन्धूकपुष्पे । विजयसार॰ इ॰ भा॰ प्र॰ वृक्षे ॥ सृजति । सृजवि सर्गे । ण्वुल् । यद्वा । सर्ज्जति । सर्जअर्जने क्वुन् ॥ त्रि॰ सृष्टिक र्त्तरि ॥
सर्ज्जगन्धा । स्त्री॰ रास्नायाम् ॥
सर्ज्जतैलम् । न॰ सर्ज्जतैले । राततैल इ॰ भा॰ ॥ तैलसर्ज्जरसोद्भूतंवि स्फोटव्रणनाशनम् । कुष्ठपामाकृमि हरवातश्लेष्मामयापहम् ॥
सर्ज्जनम् । न॰ विसर्ज्जने ॥ सृ ष्टौ ॥

सर्ज्जनिर्यास । ) पु॰ राले । धूनके
सर्ज्जमणि । )
सर्ज्जरस । पु॰ धूनके । यक्षधूपे । सर्ज्जस्यसालस्यरस ॥ बाह्यमण्ड विग्रहे ॥
सर्ज्जि । ) स्त्री॰ ) सर्ज्जिकाक्षारे ।
सर्ज्जिका । ) ) सज्जो॰ इ॰ भा प्र॰ सर्ज्जिकाल्पगुणातस्माद्विशेषा द्गुल्मशूलहृत् । तस्मात॰ यवक्षा रात ॥
सर्ज्जिकाक्षार । पु॰ कापोते । सुवर्च्चले । सौवर्च्चले । रुचके । सज्जो॰ साजी॰ इ॰ भा॰ प्र॰ सर्ज्जिकारजस क्षार । शाकपा र्थिवादि । सर्ज्जिकाद्रव्यात्क्रिय माण क्षारइत्यर्थ ॥
सर्ज्जिक्षार । ( पु॰ ) सर्ज्जिकाक्षारे ॥
सर्ज्जी । स्त्री॰ )
सर्ज्जू । स्त्री॰ वणिजि । विद्युति । सर्ज्जति । अर्जअर्जने । कृ पचमि तनिधनिसर्ज्जिखर्ज्जिभ्यऊ ॥ अभिसारे ॥ हारे ॥
सर्ज्य : । पु॰ सर्ज्जरसे ॥
सर्प्प । पु॰ अहौ । नागेश्ये पक्षटे । अश्लेषायां यथा । सर्प्प , पृदा कुर्भुजगोभुजङ्गोहिर्भुजङ्गम । आशीविषोविषधरश्चक्रीव्याल . स रीसृप ॥ कुण्डलीगूढपाच्चक्षु श्र वा काकोदर फणी । दर्वीकरोदी

सर्पणोऽस्त्रदमूकोविशेषश्च ॥ उरग पन्नगोभोगोजिह्मग पवनाशनकृति ॥ सर्पति । सृपलृगतौ । पचाद्यच् ॥ नागकेशरे ॥ मसुरारिवल्लेच्छ जातिविशेषे ॥ यदामावस्यद्वितीय भेदे ऽ। ८० ॥ यवमाश्यमष्टप्रभेदे ॥ ८८० ॥ सर्पण । गमने ॥

सर्प्पकङ्कालिका । स्त्री॰ वृक्षभेदे ॥ सर्प्पकङ्कालिका॰ तीक्ष्णा॰ विषदंष्ट्रा॰ विषापहेतिपर्याया ॥

सर्प्पकङ्काली । स्त्री॰ सहायाम । सर्प्पकङ्कालिकायाम ।

सर्प्पगन्धा । स्त्री॰ अहिभुजि । रक्तापचिकायाम ॥ वृक्षविशेषे । ककाकी॰ सर्प्पगन्धाचरसनाचपलङ्कषेति पर्याया ॥

सर्प्पघ्न । पु॰ सर्पघ्नगुञ्जौ ॥

सर्प्पघातिनी । स्त्री॰ सर्पकङ्कालो भेदे । सर्प्पसहायाम् । सपाङ्ग्या ॥

सर्प्पन् । त्रि॰ गच्छति ॥

सर्प्पत्वच । पु॰ नकुले ॥ दू॰ हे॰ न्द्र ॥

सर्प्पदंष्ट्र । पु॰ दन्तीवृक्षे ॥

सर्पदंष्ट्रा । स्त्री॰ वृश्चिकाल्याम् ॥

सर्प्पदंष्ट्रिका । स्त्री॰ अजशृङ्ग्याम् ॥

सर्प्पदण्डा । स्त्री॰ सैंहल्याम ॥

सर्प्पदण्डी । स्त्री॰ गोरक्ष्यां ॥

सर्प्पदन्ती । स्त्री॰ नागदन्त्यां ॥

सर्प्पदमनी । स्त्री॰ वन्ध्याकर्कोटक्याम् ॥

सर्प्पनासा । स्त्री॰ सर्पघातिन्याम् ॥

सर्प्पनिर्मोचन । पु॰ धूपविशेषे ॥ यथा, कार्पासास्थिभुजङ्गत्वचानिर्मोचन भवेत् । सर्प्पनिर्मोचनोधूप॰ प्रशस्त सततग्रहे ॥

सर्प्पपुष्पी । स्त्री॰ नागदन्त्याम ॥

सर्पफणज । पु॰ सर्पफणजात मणौ ॥

सर्पभुज् । पु॰ मयूरे ॥ सर्पान्भुङ्क्ते । भुज॰ । क्विप् ॥ द्विमुखाहौ ॥ त्रि॰ सर्पभक्षके ॥

सर्पराज । पु॰ अहिराजे । वासुकौ ॥ सर्पाणाराजा । राजाह सखिभ्यष्टच ॥

सर्पलता । स्त्री॰ नागवल्ल्याम् ॥

सर्पविद्या । स्त्री॰ गारुडे ॥ सर्पाणाविद्या ॥

सर्पसत्रम् । न॰ जनमेजयारब्धेसर्पनाशकीयज्ञविशेषे ॥

सर्पसत्री । पु॰ जनमेजये ॥

सर्पसहा । स्त्री॰ सर्पघातिन्याम ॥

सर्पसुगन्धा । स्त्री॰ रास्नायाम् ॥

सर्पहा । पु॰ नकुले ॥ दू॰ हे॰ न्द्र ॥

सर्पाक्षम । न॰ रुद्राक्षे ॥

सर्पाक्षी । स्त्री॰ कन्दविशेषे । गन्ध

सर्वकर्त्ता । पुं॰ स्रष्टरि । ब्रह्मणि ॥
सर्वकर्म्मसन्न्यास । पु॰ देहादिव्यापाराणामविद्ययात्मन्यध्यारोपितानामविद्ययाबाधे ॥ सर्वकर्मणां सम्यङ्न्यास ॥
सर्वकर्मीण । त्रि॰ पुरुषे ॥ सर्वकर्माणिव्याप्नोति । ततसर्वादेरितिख ॥
सर्वकेशी । पु॰ नटे ॥ सर्वकेशोऽस्यास्ति । सर्वादेरिति॰ इनि ॥
सर्वचार । पु॰ बहुचारे । महाचारे । सावनडु॰ भा॰ प्र॰ । मलवत्स्वविशेषधर्मे ॥
सर्वग । पु॰ शङ्करे ॥ ब्रह्मणि । विभौ । आत्मनि ॥ सर्वं गच्छति । गमृल॰ । अन्तात्यन्तेतिड ॥ न॰ सलिले ॥ त्रि॰ सर्वगामिनि ॥
सर्वगत । त्रि॰ विभौ ॥ सर्वानुस्यूतसम्भावे ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अन्तर्बहिश्चतत्सर्वं व्याप्यनारायणः स्थित ॥ सर्वगतत्व सर्वान्यव्यवधानमावमितिव्याख्यातार । व्यापित्वमितियावत् ॥
सर्वगन्धम् । न॰ कुङ्कुमादिगन्धद्रव्यवृन्दे ॥ यथा । कुङ्कुमागुरकर्पूरकस्तूरीचन्दनेषु ॥ चतुर्जातकादौ । यथा ॥ चतुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैवसर्वगन्धविनिर्दिशेदिति ॥
सर्वङ्गा । स्त्री॰ प्रियङ्गौ ॥
सर्वग्रन्थ । पु॰ ) पिप्पलीमूले ॥
सर्वग्रन्थिकम् । नं॰ )
सर्वङ्कष । त्रि॰ खले ॥ सर्वङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रेतिखच्च अरुर्द्विषदिति मुम् ।
सर्वजनीन । ) त्रि॰ सार्वजनिके
सर्वजनीय । )
॥ सर्वस्यासौजनश्च । पूर्वकालैकेतितत्पुरुष । सर्वजनायहित । सर्वजनाट्ठञ्खञ्च ॥ षष्ठीतत्पुरुषात्तु॰ छ ॥
सर्वजित् । पु॰ वत्सरविशेषे ॥ तत्फलं यथा । उत्पातोत्कर्षणमेवो जलं नैवोपजायते । मध्यार्घं सर्वजिद्वर्षे सर्वमेवविनश्यति ॥ त्रि॰ सर्वजयकर्त्तरि ॥
सर्वजीव । पु॰ ईश्वरे ॥ सर्वान्जीवयति । जीव॰ । अच् ॥
सर्वज्ञ । पु॰ शिवे । ईश्वरे ॥ सर्वं जानाति । सर्वविषयानवच्छिन्नं तन्त्यलक्षणज्ञानवानिति । ज्ञा॰ । आतोनुपसर्गेक ॥ यथा । सर्वेज्ञायत्यस्मात्मन सर्वस्यापरोक्षत्वात् ॥ यथा । सर्वेज्ञायस्मात॰ सर्वज्ञायेनवा ॥ सर्वस्यासौज्ञश्चेतिवा ॥ आनन्दमये ॥ यथा । अशेषप्राणिबुद्धीनांवासनास्तत्रसंस्थिता । ता

सर्व्वदमन । पु॰ शकुन्तलात्मज॰ भरते ॥ कार्त्तवीर्य्ये ॥

सर्व्वदर्शन । पु॰ विपणी॥ सर्व्वाणिदर्शनानि आत्मसात्कृतान्यस्येत्यर्थः॥ सर्वात्मकत्वात् ॥

सर्व्वदर्शी । पु॰ विपणौ ॥ सर्वेषां प्राणिनां कृताकृतं सर्वं पश्यति स्वाभाविकेन बोधेनेति तथा ॥ बुद्धे ॥ त्रि॰ सर्व्वज्ञे ॥ सर्व्वं द्रष्टुं शीलमस्य सुप्यजातौ णिनिस्ताच्छील्ये ॥

सर्व्वदा । अ॰ सर्व्वस्मिन्काले ॥ सर्वैकान्यकियत्तदः काले दा ॥

सर्व्वदुःखक्षय । पु॰ मोक्षे ॥ सर्वदुःखानां क्षयो विनाशोऽस्मिन्॰ इति तथा ॥ सर्व्वपीडानाशे ॥

सर्व्वदृक् । त्रि॰ सर्वज्ञे ॥ अखिलस्य पदार्थस्यावलोकयितरि । सर्वं पश्यति । दृशिर॰ । क्विप् ॥ ईश्वरे ॥ सर्वमतीतानागतादि॰ पश्यतिस्वरूपबोधेनेति तथा । क्विन्प्रत्ययश्च त्यदयत्तदिषु दृशो ज्ञाने इति कुत्वम् ॥

सर्व्वदेवमुख । पुं॰ अग्नौ । अग्नौ ।

सर्व्वधन्तम । त्रि॰ सर्व्वस्याधारयितृतम ।

सर्व्वधारी । पुं॰ वत्सरविशेषे ॥ तत्फलं यथा । कीदृशा शालिमुद्गाश्चकाशुमाषाश्चैव च । सुलभं जायते सस्यं जगत् सर्वधारिणि ॥ त्रि॰ सर्व्वस्य धारयितरि ॥

सर्व्वधावक । पु॰ सर्व्वधुरीणे ॥ सर्वाधारेषु॰ सर्वधुरा । पूर्वकालैकसर्वेति समास [illegible] पूरित्य । वहति॰ [illegible] वत् । सर्वधुराया वह [illegible]

सर्व्वधुरीण । पु॰ सर्वलाधुरीणे सर्वभाराणां वाहके गवादौ । सर्वधुरावहे ॥ सर्वधुरां वहति [illegible] सर्व्वधुरादि तत्

सर्व्वनाम । न॰ सर्वादिपञ्चत्रिंशत्॥ तानि यथा । सर्व॰ विश्व॰ उभ॰ उभय॰ डतर॰ डतम॰ अन्य॰ अन्यतर॰ इतर॰ त्वत्॰ त्व॰ नेम॰ सम॰ सिम॰ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्॰ तद्॰ यद्॰ एतद्॰ इदम्॰ अदस्॰ एक॰ द्वि॰ युष्मद्॰ अस्मद्॰ भवतु॰ किम्॰ इति ॥

सर्व्वनियन्ता । त्रि॰ परमेश्वरे । चिदात्मनि ॥ परमार्थतोऽसङ्गस्याऽपि चैतन्यस्य॰ आध्यासिकसम्बन्धवत्त्वाधिष्ठानत्वात् सर्वजीवप्रवर्त्तकत्वेन॰ सर्वनियन्तृत्वमितिज्ञेयम् ॥

सर्व्वन्दम । पु॰ शाकुन्तलेये॰ भ

रति ॥

सर्व्वपथीण । पु॰ सारथौ ॥ सर्वपथान्व्याप्नोति । तत्सर्वादि पथ्य ङ्गकर्म्मपात्रपात्र व्याप्नोतीतिख ॥

सर्व्वपथीन । पु॰ रथे ॥ सर्वपथान्व्याप्नोति । तत्सर्वादेरितिख ॥

सर्व्वपात्रीण । पु॰ ओदने ॥ सर्वपात्रं व्याप्नोति । तत्सर्वादेरितिख ॥

सर्व्वपूर्णत्वम् । न॰ सम्भारे ।

सर्व्वभक्ष । त्रि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा । ) स्त्री॰ गलस्तन्याम् । सर्व्वभक्ष्या । ) छाग्याम् । अजायाम् ॥ इ॰ हे॰ न्द्र : ॥

सर्व्वभूतगुहाशय । पु॰ चिदात्मनि॰ परमेश्वरे ॥ सर्वभूतानांस्थावरजङ्गमानां॰गुहासुबुद्धिषुशेते । शीङो धिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पु॰ लोकात्मनिपरमेश्वरे ॥ यथाऽऽहु । द्यांमूर्द्धानंयस्य विप्रावदन्ति॰ खन्नैनाभिचन्द्रसूर्यौ चनेत्रे । दिश श्रोत्रे विद्धिपादौ क्षितिञ्चसोऽचिन्त्यात्मासर्वभूतप्रणेता । इति ॥

सर्वभूतात्मक । त्रि॰ प्रत्यगभिन्नेपरमात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्मज्ञानिनि ॥ यथा । जडाजडात्मकं सर्वमात्ममात्र प्रपश्यति । सएवसर्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति सर्वभूतपात्मभूतस्य॰ आत्मास्वरूपम्यस्य ॥

सर्वभूताशयस्थित । त्रि॰ आत्मनि॰ चैतन्यानन्दघनेचिन्मात्रे ॥ सर्वभूतानामाशयेहृद्येन्तर्यामिरूपेण॰ प्रत्यगात्मरूपेणचस्थितोय॰ सएवस ॥

सर्वभृत् । त्रि॰ नामरूपात्मकस्यजगतो धारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सदात्मना॰ सर्वङ्कल्पित॰ धारयति॰ पोषयतिच॰ निरधिष्ठानभ्रमायोगात् । डुभृञ्धारणपोषणयो । क्विप । तुक् ॥

सर्वमङ्गला । स्त्री॰ दुर्गायाम् ॥ सर्वेभ्य सर्वेषांवामङ्गला ॥ सर्वाणिमङ्गलानियस्याइतिवा ॥ सर्वाणिहृदयस्थानिमङ्गलानिशुभानिच । ददातिचेप्सितांलोकेतेनसासर्वमङ्गलेतिदेवीपुराणम् ॥ अपिच । मङ्गलंमोक्षवचनमाशब्दोदातृवाचकः । सर्वान्मोक्षान्याददातितेनसासर्वमङ्गला ॥ हर्षेसम्पदिकल्याणेमङ्गलपरिकीर्त्तितम् । तान्ददातिचयादेवीसाएवसर्वमङ्गला ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ अन्यच्च । सर्वमङ्गलशब्दश्च सम्पूर्णैश्वर्यवाचक । आकारोदातृवचनस्तस्मात्सासर्वमङ्गला ॥ ॥ इ॰ ब्र॰ वै॰ पु॰ श्रीकृष्णजन्मखण्डे २७ ऽध्याय : ॥

सर्व्ववेशी । पु॰ नर्त्तके । नटे । सर्व्वे षांवेश शीलमस्य । इनि॰ । स कलवेशधारिणि । बहुरूपी॰ इ॰ भा॰ ॥

सर्व्वव्यापी । त्रि॰ आकाशवत्सकल पदार्थव्यापनशीले । यथा । सर्व्व व्यापिनमात्मान क्षीरेसर्पिरिवार्पि तमिति ॥

सर्व्वश । अ॰ सर्व्वप्रकारेणेत्यर्थे ॥

सर्व्वशाखामतम । न॰ न्यायविशेषे ॥ यथा । भरणीक्रत्तिकापित्र्य विशाखाश्वमघासुच । सर्व्वशाखा मत प्रोक्त व्रत तत्रविवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । त्रि॰ महानिर्व्वाणाग मज्ञे ॥

सर्व्वशान्तिकृत् । पु॰ द्वौ व्यक्तो । आकुन्तकेये ॥ त्रि॰ सर्व्वशांतिवि धायिनि ॥

सर्व्वसगर्गेत्थम् । न॰ जीव रवे ॥

सर्व्वसङ्गत । पु॰ षष्टिकाधान्ये ॥ त्रि॰ सर्व्वप्रिये । सकलसङ्गति युक्ते ॥

सर्व्वसत्त्वसमुद्भवा । स्त्री॰ प्राद्ववि ॥ सर्व्वेषांप्राणिनांसमुद्भवउत्पत्तिर्जी वनतश्चयस्याम् ॥

सर्व्वसन्नहनार्थक । पु॰ सर्व्वसैन्यसन्नहने । सर्व्वाभिसारे ॥ सर्व्वेषांसन्नहनम्॰ सर्व्वसन्नहनम् । स र्व्वसन्नहनमर्थोयस्यस॰ ॥

सर्व्वसन्नाह । पु॰ सर्व्वात्मनि ॥

सर्व्वसह । पु॰ गुग्गुलौ ॥ त्रि॰ स कलसहिष्णौ ॥

सर्व्वसाक्षी । पु॰ परमात्मनि ॥ सर्व्वे षांशुभाशुभकर्म्मणां॰साक्षी॰ सा क्षाद्द्रष्टा ॥ त्रि॰ सर्व्वविषयद्र- ष्टरि ॥

सर्व्वसिद्धि । पु॰ श्रीफलेविल्वे ॥ त्रि॰ सिद्धियुक्ते ॥

सर्व्वसुखप्रद । पु॰ परमात्मनि ॥ भगवति ॥

सर्व्वस्वम् । न॰ समस्तधने ॥

सर्व्वस्त्री । पु॰ गोपकन्यायानापिता ज्ञातेसङ्करजातौ ॥ त्रि॰ सर्व्वस्त्र विशिष्टे ॥

सर्व्वहर । त्रि॰ सर्व्वसंहारकारिणि॥

सर्व्वहितम् । न॰ मरिचे ॥ त्रि॰ स र्व्वेषांहितकारिणि ॥

सर्व्वाकार । त्रि॰ समस्तदेहाद्याका रविशिष्टे॰ भगवति ॥ यथाहुरा चार्य्या । सर्व्वाकारेभगवानुपास्य तेयेनयेनभावेन । तन्मयतावमभ् स्त्वोचिन्तामणिवत्समर्थ्येतीति ॥ सर्व्वोवाद्याकारयस्मात्सर्व्वाकार स्तम् ॥

सर्व्वाङ्गम् । न॰ सकलावयवे ॥

सर्व्वाङ्गसुन्दर . । पु॰ औषधविशेषे ॥ यथा । रसगन्धकतुल्यांशौशोभा

सलिकलीति॰ इलच्। रलयोरैकत्वम् ॥

सलिलम्। न॰ जले ॥ उपादाना ख्यायांद्वितोयायातुष्टौ ॥ सलति॰ गच्छतिनिम्नदेशम्। सलगतौ। स लिकल्यनिमहिभण्डिभण्डिशण्डि पिण्डितुण्डिकुकिभूभ्यइलच् ॥ सलिलव्यञ्जकदेशाद्गागं लिद्रष्टव्या। कविशिक्षेधावापिकालिदासोक्तो यथा। अद्याऽर्णोदुम्बरसिन्दुवरा पर्णप्रवालातिविशालशाखा। ब लमोकपार्श्वा क्षुरगाश्चित्तलवा म्बुनिर्देश्यमल समाशु॥ शोषातिशीतलवसत्स्वपुष्पिदर्भोसाखादु सान्द्रसलिलाकिलशोभ्रशार्दा। इत्य बिलोक्यवसुधामिहकूपवापी कासारकुण्डखननंविदधीतशश्वत् ॥ शोषगतजलदेशमाह। सिधुप्र तानमरुकार्घ्यवगोडर्गशिनिम्नधरा म्बरगमम्बुनिसर्गभावात्। द्वारा ह्नकुण्ठतरवश्वविनिस्तृणोर्व्यंतदृष्ट न विक्षतिमह्नुपमाडुरार्याः ॥ शु भजलस्थानमाह। यामादुदीरितह रित्तृणनोलभागैवंभमराडलवि भागवतिप्रशस्तम्। वाच्यं वनतद्वि षगर्भवनेन्दुभागैनिम्नाढ्यंभूमित टिनीनगदिक्शिराभिरिति ॥

सलिलकुन्तल. । पुं॰ शैवाले॥ सलिलकुन्तलइव ॥

सलिलक्रीड । पु॰ जलक्रीडे। अलमंद्रिरइ॰ भा॰ प्र॰ ॥

सलिलज । त्रि॰ जलोत्पन्ने ॥ न॰ पद्मे ॥

सलिलनिधि । पु॰ समुद्रे ॥ यथा। मौर्व्वागम्ब्लपस्तं द्विशिद्विशिज लदास्त्व शरण्योगिरीणामुवामाता सभाजाममरवितटपिनाजन्मभूमि स्त्वमेवागाधौर्यं किमुतामहकत्वमिस लिलनिधेकिन्तुविज्ञापयामः सर्वौ प्रायेनमैवावकषिमुनिकपाहस्य ब्याकुयणीया।" जलानांनिधि ॥

सलिलेन्धन । पु॰ वाडवाग्नौ ॥ स लिलमिन्धनं यस्य ॥

सलील । त्रि॰ लीलयासहवर्त्तमाने॥

सलोकता । स्त्री॰ समानलोकता याम् ॥

सल्लकी । स्त्री॰ गजभक्ष्यायाम्। शल्ल क्याम् । सत्त्लत्यलक्वतैसाद्यतेग जैः। लक॰। कुन्। गौरादि ॥

सल्लक्ष्यम्। न॰ प्रत्यगभिन्नब्रह्मणि॥ सच्चतल्लक्ष्यश्चेतितया ॥

सव । पु॰ यज्ञे ॥ सोमोयत्राभिषु यते रसार्थं खण्डशत्रैयज्ञाध्वरेससव ॥ सञ्न॰ने ॥ सूयतेसोमोऽत्र। पु अ॰। ऋदोरप् ॥ यद्वा। सूयते ऽनेनवा। षूप्रेरणे। अप्॥ घेी वा। न॰ जले ॥

सवनम्। न॰ यज्ञस्नाने। सूत्याय॰

भिधीयतइति ॥ सवति ॥ सुव ति० कर्मणिलिोकप्रेरयति । सूप्रे रणे । तृच् । चकारऋ ॥

सवितृदैवत । पु० हस्तनक्षत्रे ॥ सविता दैवतयस्य ॥

सवित्रम् । न० प्रसवसाधने ॥ सूय तेऽनेन । सू० । अर्त्तिलूधूसूख नेतीत्र : ॥

सवित्रिय । सूर्यसम्बन्धीयि ॥

सवित्री । स्त्री० जनन्याम् । तृजन्ता त०ङीप् ॥

सविध । त्रि० अन्तिके । निकटे ॥ समानाविधाऽस्य० सहविधयेतिवा ॥ सप्रकारे ॥

सविस्मय . । त्रि० आश्चर्ययुक्ते । वी चापन्ने ॥ विस्मयेनसहवर्त्तत इति तथा ॥

सवेश । त्रि० निकटे ॥ वेशान्विते समानोवेशोऽस्य०सहदेशेनेतिवा ॥

सव्य । पुं० विष्णौ ॥ त्रि०वामे । प्र तीपे प्रतिकूले । दक्षिणे ॥ सूयते । षू० । अचोयत् ॥ यद्वा । सुनो ति । बाहुलकाद्य . ॥

सव्यभिचार । पु० हेत्वाभासान्त रे ॥ यथा । अनैकान्तिक ' स व्यभिचार .। सत्रिविध. । साधा रणाऽसाधारणानुपसंहारिभेदात् ॥

सव्यलीक : । त्रि० सापराधे ॥

सव्यसाची । पुं० अर्जुने । पार्थे ॥ सव्येनवामेनहस्तेनापि०शरान्० सचितुसन्धातु शीलं यस्य । णि नि ॥

सव्येष्ठ .। पु० सारथौ ॥ सव्येतिष्ठ ति । सुपिस्थइतिक । स्थास्थिन् स्थृणामितिष . । हलदन्तादित्य लुक् ॥

सव्येष्ठा । पुं० सूते ॥ सारथौ " सव्येवामेतिष्ठति । ष्ठा० । सव्ये ष्ठचछन्दसीति० क्ट . डिच । अम्बाम्बेत्यत्र०स्थास्थिन्स्थृणामुपस ङ्ख्यानात्षत्वम्० सुपामादित्वाद्वा । हलदन्ता दित्यलुक् । सव्येष्ठरौ० सव्येष्ठरइत्यादिरूपाणि ॥

सशस्य । त्रि० शस्ययुक्तेभूम्यादौ ॥

सशल्या । स्त्री० नागदन्त्याम् ॥

सश्मश्रु : । स्त्री० श्मश्रुयुक्तस्त्रियाम् । नरमानिन्याम् ॥

ससत्त्व । त्रि० प्राणियुक्ते ॥

ससत्त्वा । स्त्री० गर्भिण्याम् ॥

ससन्देह . । पुं० अर्थालङ्कारप्रभेदे ॥ यथा । ससन्देहस्तुभेदोक्तौ० तदनु क्तौचसंशय । भेदोक्तौयथा । अ यमार्त्तण्ड : किं सखलुतुरगै स प्तभिरित कृशानु किंसर्वा प्रसरति दिशोनैवनियतम् कृतान्त किं सान्मन्महिषवहनोसाविति चिर स मालोक्याजौत्वांविदधतिविकल्पा नृपतिभटा ॥ भेदोक्तावित्यनेननक्वे

मर्यादिमिपुरुषप्रयमहदिनरात्रिसन्ध्याध
र्मायूयसाक्षिणोभवत•ज्वलच्चितारो
हणेनपतिदेहेनसहगमनमहकरी
मौत्यनुगमनेसङ्कल्प '॥
सहचर । पुं॰ नीलझिण्ट्याम् ॥ पी
तझिण्ट्याम् । पीयाबांसाइ॰ भा॰
प्र॰ ॥ त्रि॰ अनुचरे ॥ सहचरति
। चर॰ । पचाद्यच् ॥ वयस्ये ॥ प्र
तिबन्धकी ॥
सहचरित '। त्रि॰ सहानुष्ठिते ॥ स
हे ऋारिते ॥
सहचरी । स्त्री॰ नीलझिण्ट्याम ॥ पी
तझिण्ट्याम् ॥ झिण्टीमात्रे ॥ भा
र्यायाम् । पत्न्याम् । वयस्याया
म् ॥ सहचरति । चर॰ । पचादौ
चरड्तिटित्वनिपातनात्•ङीप् ।
सहज । पुं॰ निसर्गे । स्वभावे ॥
तृतीयभवने ॥ त्रि॰ सहोत्थे । सह
स्वभावे । सहोदरे ॥ सहतुल्ये • उ
दरे• जात॰ । जनी॰ । पञ्चम्य
मीतिड '॥
सहजन्मा । पुं॰ सोदरे ॥ सहसमाने
उदरेजन्मयस्य स : ॥
सहजमित्रम् । न॰ स्वाभाविकेसुहृदि
। यथा । अरिर्मित्रमुदासीनोऽन
न्तरस्तत्परं परं । क्रमेणमण्डल
चिन्त्य सामादिभिरुपक्रमै ॥ अ
रि : • अनु । मित्रम्• सुहृद्॰
। उभयविलक्षण • उदासीन : ।
तैवत्रयस्त्रिविधा : । सहजा '•
कृत्रिमा • प्राकृताश्चेति ॥ सह
जमित्रम् • भागिनेयपैतृष्वस्रीय-
मातृष्वस्रीयादिरितिमिताक्षरा ॥
सहजा । स्त्री॰ भगिन्याम् । सहोदरा
याम् ॥ प्रकृतिप्रभेदे । आत्मनास
हैवजातायाम् ॥ यथापक्ष्यादीना
माकाशगमनादिलक्षणाप्रकृति स
हजा ॥ टाप् ॥
सहजात । त्रि॰ सहोदरे ॥ यमजे ॥
सहजारि । पुं॰ स्वाभाविकेशत्रौ ॥
यथा । सहजारि सापत्न्यपितृव्य
तत्पुत्रादिरितिमिताक्षरायामाचा
राध्याय ॥
सहञ्जकम् । न॰ अस्थिसहितेपक्वमांसे
। सास्थिपक्वमांसे । इतिमासकृति
प्रसिद्धे ॥ यथा । छागादेर्मांसम्
स्थ्यादि कुट्टित खण्डितं पुन ।
शुद्धमांसविधानेनपचेदेतत् सहञ्जक
म् ॥ सहञ्जकं गुणयन्ये शुद्धमांसगु
णं स्मृतमितिभावप्रकाश ॥
सहदेव '। पुं॰ पञ्चमपाण्डवे । मा
द्रीतनये । नकुलानुजे ॥ जरासंध
सुते ॥ त्रि॰ देवैनसहिते ।
सहदेवा । स्त्री॰ बलायाम् ॥ दण्डो
त्पले । शारिवौषधौ ॥ महदेवा
याम् । अर्हन्मातरि ।
सहदेवी । स्त्री॰ महाबलायाम् । पी
तपुष्पायाम ॥ यथा । ज्वरंहति

ज्ञापयामिसुरेश्वरीमिति ॥

सहस्रनयन ः । पुं॰ इन्द्रे ॥ सहस्र नयनान्यस्य ॥

सहस्रनेत्र ः । पुं॰ इन्द्रे ॥ विष्णौ । सहस्रनेत्राण्यस्य ॥

सहस्रपत्रम् । न॰ कमले । पद्मे । नलिने ॥ सहस्रमत्र्बहूनिपात्राण्यस्य ॥

सहस्रपात् । पु॰ विष्णौ ॥ सहस्र पादायस्य । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

सहस्रपाद ः । पुं॰ कारण्डे ॥ मार्त्तण्डे ॥ यज्ञपुरुषे । विष्णौ ॥

सहस्रभित् । न॰ कस्तूर्याम् ॥ अम्लवेतसे ॥

सहस्रभुज ः । पुं॰ विष्णौ ॥ कार्त्त वीर्यार्जुने ॥

सहस्रभुजा । स्त्री॰ दुर्गायाम् ॥ महाकाल्याम् ॥

सहस्रमरीचि ः । पुं॰ सूर्ये ॥

सहस्रमूर्द्धा । पुं॰ ईश्वरे ॥ विष्णौ ॥ सहस्राणिअपरिमितानि मूर्द्धानोऽस्य ॥

सहस्रमूली । स्त्री॰ द्रवन्त्यामौषधौ ॥

सहस्रमौलि ः । पु॰ विष्णौ ॥ अनन्ते ॥

सहस्ररश्मि ः । पुं॰ सूर्ये ॥

सहस्रलोचन । पु॰ इन्द्रे ॥ विष्णौ ॥

सहस्रबाहु ः । पुं॰ कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

सहस्रवीर्य्या । स्त्री॰ दूर्वायाम् ॥ सहस्रवीर्याण्यस्याः ॥ महाशतावर्याम् ॥

सहस्रवेधम । न॰ काञ्जिकविशेषे । चुक्रे ॥

सहस्रवेधी । पु॰ अम्लवेतसे । चुक्रे ॥ कस्तूर्याम् । न॰ रामठे । हिङ्गुनि । त्रि॰ सहस्रवेधकर्त्तरि ॥ सहस्रं वेधितुं शीलमस्य । विध विधाने । सुप्यजातौणिनि ः ॥

सहस्रवीर ः । पुं॰ विष्णावपि ॥

सहस्रा । स्त्री॰ अम्बष्ठायाम् ॥

सहस्रांशु ः । पु॰ सहस्रतमेभागे ।

सहस्रांशु ः । पु॰ भानौ । रवौ । तपने ॥ सहस्रमंशवोयस्य ॥

सहस्राक्ष ः । पुं॰ पाकशासने । इन्द्रे ॥ विष्णौ सर्व्वेश्वरसाक्षिणि ॥ सहस्रमक्षीण्यस्य । सहस्राण्यपरिमितान्यक्षीण्यस्मात् । बहुव्रीहौ सक्थ्यक्ष्णो ः स्वाङ्गात्षच् ॥

सहस्रार ः । पुं॰ न॰ शिरोवर्त्तिनि तालुस्थसहस्रदलकमले ॥

सहस्रार्चि ः । पु॰ विष्णौ । सूर्य्ये सहस्राण्यर्चींषियस्य ः । सहस्राण्यनन्तान्यर्चींषिप्रकाशायस्यविश्वरूपधरस्यविष्णोरिति ॥

सहस्री पुं॰ सहस्रसङ्ख्यासैन्ययुक्ते ।

साहस्रे ॥ सहस्रं बलमस्यास्ति । तप
सहस्राभ्यांबिनीनी॰ इतीनि ॥
बलिनोयेसहस्रं यसाहस्रास्तेसहस्रि
णः ॥

सहा । स्त्री॰ नखभेषजे । दण्डोत्प
लायाम् । सहदेवायाम् ॥ सुद्गप
र्ण्याम् ॥ घृतकुमार्याम् ॥ उर्व्या
म् । भूमौ ॥ सहते । षह॰ । अ
च् । टाप् ॥ सेवन्त्याम् ॥ शुक्ल
झिण्टीयाम ॥ स्वर्णक्षीर्याम् ॥
रास्नायाम् ॥ स्वर्णक्षीर्याम् ॥ त
रणीपुष्पे ॥ पीतदण्डोत्पलाया
म् ॥

सहाचर । पु॰ पीतझिण्ट्याम् । क
टसारिका॰ कटसरैय्या॰ इ॰ भा॰
प्र॰ । सहचरे ॥ सहस्माचरति ।
चर॰ । अच् ॥

सहाय । पु॰ चक्रवाके ॥ त्रि॰ सह
चारिणि । अनुचरे । अभिसरे ॥
सहअयते॰ अयतिवा । अय॰ । इ
गतौवा । पचाद्यच् ॥ राज्ञः सहा
यायथा । सहपाश्च तथापुष्टा सत
त प्रतिमानिताः । राज्ञासहाया.
कर्त्तव्याः पृथिवींजेतुमिच्छतेति
मात्स्ये १८८ अध्याय ॥ यथोक्त
देवीभागवतेव्यासेन । शक्तायेत्थ म
तिर्दंताहरिणाइवचात्रिने । प्रविष्टो
यर्यावि विष्णुः सहाय प्रत्यपद्यत
॥ यथापदिसहायोभूद्वासुदेव क

थञ्चन । समयेस्वजन. सर्व. सं
सारेस्मिन्नराधिप ॥ दैवेविमु
खतांप्राप्तेनकोप्यस्तिसहायवान् ।
पितामातातथाभार्याभ्रातावाथसहो
दर ॥ सेवकोवापिमित्रं वापुत्रश्चै
वतथौरसः । प्रतिकूलेगतेदैवेनको
प्येतिसहायतामिति ॥

सहायता । स्त्री॰ सहायौघे । सहाया
नासमूहः । गजसहायाभ्यामिति
तल् । साहाय्ये ॥ सहायस्यकर्म
भावोवा । तल् ॥

सहायत्वम् । न॰ साहाय्ये ॥

सहार । पु॰ आम्रवृक्षे । रसाले ॥
महाप्रलये ॥ इतिहलायुध ॥

सहारी । पुं॰ षाडिवसाम्ये ॥ आद्य
न्तकार्षी पञ्चाम्नवर्षी । तच्चैक
धारीवाच्य सहारी ॥ यथो । क
सादिकेतु धर्मं कहितुम् । वदेच्छ
न'भम॰ इन्दीवराभम् ॥

सहारोग्य । त्रि॰ नीरुजि ॥

सहित । त्रि॰ सहिते । संयुक्ते ॥
सम्बीयतेस्म । डुधाञ् क्त । दधा
तेर्हि । समोहिततततयोर्वालोप
॥ सम्यग्हिते । हितेनसहवर्त्त
माने ॥

सहिता । त्रि॰ सोढरि । सहनशीले
॥ सहते । षह॰ । तृच् । तीषस
हेतिवेट् ॥

सहिष्णु । त्रि॰ सहने । क्षमरि ।

रिणीयते । अदायादेणयम् ॥ स
हीदरेस । वड० । स सम्प्रसा
रयम् । गुण० ॥ त्रि० जठंनसह
वर्त्तमाने ॥

सहोत्य : । प० तृतीयभ्रातरि ।

सहोदर : । पुं० सहजे । सोदरेभ्रा
तरि ॥ सहउदरेवर्त्तते । वोप
सर्ज्जनस्य ॥ सह० समानम् ० उ
दरयस्येतिवा ॥

सहोदर । त्रि० साधुनि ॥ सहते ।
यच० । सिंशीरादयस्येतिचीरन् ।

सह्य । पु० मलयाद्रिसमीपवर्त्ति
निशैलविशेषे । न० आरीग्ये ॥
साम्ये । त्रि० सहनीये । सोढ
व्ये । सुमधुरे ॥ सहते० सोढु
मर्होवा । यत्० । शक्तिसहोश्चे
तियत् ॥ गोदावरीभीमरथीकृष्णा
वैण्यादिकास्तथा । सह्यपादोद्भवा
नद्य स्मृता पापभयापहा ॥

सा । स्त्री० लक्ष्म्याम् ॥ दुर्गायाम् ॥

सांयात्रिक । पुं० पोतवणिजि । व
हित्रगामिनिवणिग्जने ॥ संयात्रा
द्वीपान्तरगमनायसम्भूययात्रासाप्र
योजनमस्य । तदस्यप्रयोजनमिति
ठञ् ॥

सांयुगीन । त्रि० रणोत्सुके । युद्ध
कुशले ॥ संयुगेरणेसाधु । प्रति
जनादिभ्य : खञ् ॥

सांराविणम् । प० न० समन्ताच्छब्दे

। इत्युभयत्रैकविनि ॥ सद्युते ॥

सांवत्सर । पु० गणके ॥ यस्यजन्म
यमाद्ववराहमिहिर । तत्रसांवत्स
रोऽभिजात प्रियदर्शनो० विनी
तवेश ० सत्यवागनसूयक ० स
म ० सुसंहितोपचितगात्रसन्धिरवि
कलसार० चारुकरचरणनखनयनचिबु
कदशनश्रवणललाटभ्रूत्तमाङ्गोवपु
ष्मान्गम्भीरोदात्तघोष ० प्रायशरी
राकारानुवर्त्तिनोहिगुणास्तदोषा
श्चभवन्ति ॥ १ ॥ तत्रगुणा शुचि
र्दक्ष प्रगल्भोवाग्मीप्रतिभानवा
न्देशकालवित्सात्त्विकोनपरिषद्भी
रु : सहाध्यायिभिरनभिभवनीय .
कुशलोऽव्यसनीशान्तिकपौष्टिका-
भिचारस्नानविद्याभिज्ञोविबुधार्च
नव्रतोपवासनिरत : स्वतन्त्राश्चर्यो
त्पादितप्रभाव पृष्टाऽभिधाव्यन्यत्र
दैवात्ययादृयवगणितसंहिताहोरा
ग्रन्थ धर्वेत्ता ॥ २ विशेषायाराणां
सांवत्सरसूत्रे द्रष्टव्य ॥ सवत्सर
वेत्ति । तदधीतेतद्वेदेत्यण् ॥ न०
फले ॥ पर्वणि ॥ सन्धिवेलादिषु०
सवत्सरात्फलपर्वणोरितिशेषिको
ऽण ॥

सांवत्सरिक । त्रि० संवत्सरसम्बन्धि
नि ॥ कालाट्ठञितिप्रे षिकोव्यर्थे
ठञ ॥ संवत्सरव्याप्यभूते ॥ प्रतिव
र्षंकर्त्तव्ये श्राद्धादिकर्मणि ॥

लक्ष्मी 'तुल्यार्थं साक्षाच्छब्दयोगे० तुल्यार्थैरतुलोपमाभ्यामिति० ह तीयाप्रयोगभ्वित '। साक्षाल्लक्ष्मी रित्यादिप्रथमान्तप्रयोगेतु० प्रत्यक्षा र्थकएश्प्रतिभाति । ० लक्ष्म्यासा क्षादिति० लक्ष्म्यातुल्यैतिवत्० लक्ष्मीसाक्षादितिभवतिच

साक्षात्कार । पु० इदानीमित्यमेवेत्य परोक्षज्ञाने ॥ प्रत्यक्षकरणे ॥ साक्षात्करणम् । कृञोघञ् ॥

साक्षी । त्रि० प्रत्यक्षद्रष्टरि । द्रष्ट रि ॥ साक्षादिन्द्रियार्थसन्निकर्षं विनैवेक्षतेपश्यतिप्रकाशयतीति० निर्विकारे० आत्मनि ॥ स्वप्रकाश ज्ञानमात्रस्वरूपोप्यात्माऽविद्योपहि त, सन्० साक्षीत्युच्यते । यथा हुवार्त्तिककारा । नर्त्तकाहिक्रि याद् ' धीसाक्षिताकारिकारिय धीविक्रियासहस्राणांसाक्ष्यतोऽमवि क्रियइति ॥ यथा । नेत्रस्वरूपेयो धेनपश्यतिसर्वमितिसाक्षी । इति व्यवधानमन्तरेणसाध्यस्तसर्वस्वरू पचैतन्येनपश्यतीत्यर्थः । साक्षाद् द्रष्टरिसंज्ञायामिति०इनि ॥ शून्य वादिभिरपिशून्यत्वियेसाक्ष्यभ्युपे य० किमुवक्तव्यमितरैरित्याह । प्र त्यकसाक्ष्यतिरेकेणनाभावोपिप्रसि ध्यति । किमुभावोजगत्यस्मिन्सा क्षीचानन्यसिद्धिकः । अभावोपि०

शून्यमपीत्यर्थः ॥ पुरेपौरान्पश्य न्नरयुवतिनामाकृतिमयानसुवेशा न्स्वर्णालङ्करणकलितांश्चित्रसदृशा न् । स्वयसाक्षीद्रष्टेत्यपिचकलय न्ते ' सहरमन्मुनिनव्यामोहभज ति गुरुदीक्षाचततम ॥ साक्षाद् द्रष्टरि । सर्वप्राणिनांसाक्षाच्छुभा शुभद्रष्टरि ॥ चेतनत्वेनाविषय त्वेनचसाक्षित्वद्रष्टृत्वम् । चेतनो हिद्रष्टाभवति । यस्मैप्रदर्श्यतेवि षय, ससाक्षी ॥ तथाहि० अर्थि प्रत्यर्थिनौ० विवादविषयं साक्षि णेदर्शयतः । एवप्रकृतिरपिस्वच रितविषयंपुरुषायदर्शयतीतिपुरु ष साक्षी । नचाचेतनोवा० वि षयोवा० शक्योविषयंदर्शयितुमि ति० चैतन्यादविषयत्वाच्चभवति साक्षी । अतएवद्रष्टापिभवतीति साङ्ख्यविद ॥

साक्ष्यम् । न० साक्षिकर्मणि ॥ यथा । समक्षदर्शनात्साक्ष्यंश्रवणाच्चैव सिद्ध्यतीतिमनु ॥

साख्यम् । न० सख्ये ।

सागर '। पु० समुद्रे । अब्धौ । सग रपुत्रैःखातेजलाशये ॥ सगरस्य र्ऽयम् सगरैखातत्वादित्या त् । तस्येदमित्यण् ॥चौरादि त्वस्य,पमयासागरव्यपदेशइतिवृद्धा ॥ मृगविशेषे ॥ दशपद्मस

ङ्ख्यायाम् ॥

सागरगा । स्त्री॰ नद्याम् ॥

सागरगामी । त्रि॰ सिन्धुगे । समुद्रयायिनि ॥

सागरगामिनी । स्त्री॰ नद्याम ॥ सूक्ष्मैलायां ॥

सागरनेमि : । ) पुं॰
सागरमेखला । ) स्त्री॰ पृथिव्याम् ॥

सागरोनेमिर्मेखलावायस्या ' ॥

सागरानूप । पु॰ समुद्रतीरप्रदेशे ॥ सागरस्यअनूप : ॥

सागराम्बरा । स्त्री॰धरायाम् । पृथिव्याम् ॥ सागरोऽम्बरं वसनम् यस्या ' ॥

सागरालय : पुं॰ अप्पती । वरुणे ॥

सागरोत्थम् न॰ समुद्रलवणे । त्रि॰ सिंधुजे ॥

साग्नक : । पुं॰ शिंशपायां ॥

साग्र । त्रि॰ अग्रेणसहिते ॥

साङ्कर्य्यम् । न॰ सङ्करतायाम् ॥ जातिसाङ्कर्य्यम्॰पङ्क्तिसाङ्कर्य्यमिति । तत्रपङ्क्तिसाङ्कर्य्यंदोषाय-था । नसंवसेत्पतितैर्नचाण्डालैर्नपुक्कसै ' । नमूर्खैर्नावलिप्तैश्चनान्त्यैर्नान्त्यावसायिभि : ॥ एकशय्यासनपङ्क्तिभाण्डपक्वान्नमिश्रणम् । याजनाध्यापनेयोनिस्तथैवसहभो-जनम् ॥ सहाध्यायस्तुदशम : सह-याजनमेवच । एकादशसमुद्दिष्टा-दोषा ' साङ्कर्यसंज्ञिता : ॥ समीपेवाप्यवस्थानात्पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेनसाङ्कर्यंपरिवर्जयेत् ॥ पङ्क्तिसाङ्कर्यदोषवारणोपायायथा । एकपङ्क्त्युपविष्टायेन स्पृशन्तिपरस्परम् । भस्मनाकृतमर्यादानतेषांसङ्करोभवेत् । अग्निनाभस्मनाचैवसलिलेन ... पङ्क्तिर्विभिद्यतइति कूर्मे १५ अध्याय : ॥

साङ्काश्यम् । न॰ नगरविशेषे ॥ सङ्काशेननिर्वृत्तं नगरम् । सङ्काशादिभ्योण्य :

साङ्कृति : । पुं॰ मुनिविशेषे । वैयाघ्रपद्यगोत्रस्यप्रवरे ।

साङ्ख्य । पु॰ कपिलमुनिकृतदर्शनविदिशापिषि ॥ सङ्ख्याप्रकुर्वतेचैवप्रकृतिञ्चप्रचक्षते । तत्त्वानिचतुर्विंशत्तेनसाङ्ख्या. प्रकीर्तिता ' ॥ औपनिषदेपुरुषे ॥ सम्यक्ख्यायते॰ सर्वोपाधिशून्यतया प्रतिपाद्यते॰ परमात्मतत्त्वमनयेति॰ सङ्ख्या॰ उपनिषद्॰ तयैवतात्पर्यपरिसमाप्त्याप्रतिपाद्यतेय , साङ्ख्य ' । सचौपनिषद : पुरुषएव ॥ सख्यासे । सङ्ख्यासम्यगात्मबुद्धि : ॰ तांवदतीति॰ ज्ञानान्तरङ्गसाधनतयाससाङ्ख्य : ॰ सन्न्यास : ॥ न॰ वेदान्तशास्त्रे ॥ निरतिशयपुरुषार्थप्राप्त्यर्थंसर्वा

नयं विवक्षयं संख्यातव्या जीवो० ब्रह्म० तयोरैक्य० तद्बोधोपयोगि नवचत्वार्यादय पदार्थाः । ० ते स ङ्ख्यायन्ते० व्युत्पाद्यन्तेऽस्मिन् ॥ आत्मज्ञाने ॥ शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते इति व्यासस्मृतिः ॥ ज्ञानशास्त्रे षड्दर्शनान्तर्गतदर्शनविशेषे । कापिले ॥ यथा । 'कपिलो नामसिद्धेश 'कालविप्लुतम् । प्रोवाचासुरये साङ्ख्यतत्त्वज्ञाननिर्णयम् ॥ इति श्रीभागवतम् ॥ साङ्ख्य सङ्ख्यात्मकत्वाच्च कपिलादिभिरुच्यते० इति मत्स्यपुराणम् ॥ सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति० सङ्ख्या सम्यग्ज्ञानम्० तस्यां प्रकाशमानमात्मतत्त्वं साङ्ख्यमिति श्रीधरस्वामी ॥ अपिचाहुः । साङ्ख्यं द्विविधं मुनिनास सारविमुक्तिकारणं प्रोक्तम् । एताः सप्ततिरार्याभाष्यञ्चाप्यत्र गौडपादकृतम् ॥ एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ । आसुरिरपि पञ्चशिखाय तेन च बहुधाकृतं तन्त्रम् । शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः । सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य । आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ इति साङ्ख्यप्रवचनभाष्यम् ॥ अस्याध्ययने प्रारब्धमुद्दिश्य कालिदासो यथा । त्रियुग्मी श्रीयुग्मभे सद्घटवाणांसमारम्भित साङ्ख्यशास्त्रादिशास्त्रम् । मृदुत्रिपथमभूङ्भभूङ्युक्ते दिने ध्वेवतद्बोधसिद्धिं तनोतीति ॥

साङ्ख्यमतम् । न० षष्टितन्त्रादौ ॥ साङ्ख्यानांमतम् ॥ यथा । त्रिगुणं यत्प्रधानं तत्पुरुषार्थेन हेतुना । प्रवर्त्ततेवासनात्वक्तृ प्रि० स्वचेतिकापिलाः ॥ नान्तःकरणमेवात्मा० किन्त्वन्यः सर्वगतः स्वप्रकाशः० स्वस्य भोगापवर्गानुगुण्येन हेतुना यत्प्रधानमस्ति तदात्मनैव स्थितमन्तःकरणं तत् सधर्म्मकं प्रवर्त्तते० तदेवं श्रुत्यावासनास्ते नोच्यत इति बद्धोऽत्यर्थं ॥

साङ्ख्ययोगः । पुं० चिन्तनविशेषे । निदिध्यासनपूर्वभाविना श्रवणमननरूपेण० नित्यानित्यविवेकादिपूर्वकेण० इमे गुणत्रयपरिणामाश्च नात्मनः० सर्वे मिथ्याभूताः ० तत्साक्षीभूतो नित्यो विमुक्तो निर्विकारः सत्यः समस्तजडसम्बन्धशून्य आत्मा त्वहमेव वेदान्तवाक्यविचारजन्ये चिन्तने ॥

साङ्गः । त्रि० अङ्गसहिते ॥ अङ्गेन अङ्गैर्वा सहितः ॥

संर्व्ये । यथा । प्रजनार्थंस्त्रियः स्रष्टाः सन्तानार्थंचमानवाः । तस्मात्साधारणोधर्म्मः श्रुतौपत्न्यासहोदितः ।। अपिच । अहिंसा सत्यमस्तेयशौचमिन्द्रियसंयमः । दम . क्षमार्जवन्दानसर्वेषांधर्मसाधनमिति ।। आत्मज्ञानतितिक्षा चधर्म्मः साधारणोनृपेतिच ।।

साधारणस्त्री० । स्त्री०वेश्यायाम् ।।

साधारणानैकान्तिक । पुं० हेत्वाभासान्तरे । साध्याभाववद्वृत्तौ ।। यथापर्वतोऽग्निमान् । प्रमेयत्वादिति । प्रमेयत्वस्यवह्न्यभाववतिह्रदे विद्यमानत्वात् ।। साध्यवदन्यवृत्तौ । यथा । शब्दोनित्य . नि स्पर्शत्वात् मचविरुद्धसङ्कीर्णदोषः . उपधेयसङ्करेऽप्युपाधेरसङ्करात् ।।

साधारणी । स्त्री० सदृशायाम् । समानायाम् ।। कुञ्चिकायामितिहेमचन्द्रः ।।

साधारण्यम् । न० साम्ये ।। कुञ्चिकायाम् । इतिहेमचन्द्र ।।

साधारिका । स्त्री० घटिकायाम् । नाडिकायां ।।

साधिका । स्त्री० साधनकर्त्र्याम् ।। सुषुप्तौ ।। सुषुप्तसाधकेतिहेमः ।।

साधित । त्रि० दापिते । धनादिना वशीकृते । धनादिप्रदापिते ।। प्रदापितधने ।। साध्यतेस्म । साध० । क्त ।। सिद्ध ।।

साधिमा । पु० साधुत्वे ।। साधोर्भावः । इमनिच् ।।

साधिष्ठ . । त्रि० अतिशयेनबाढे अतिदृढे । बाढ्ये ।। न्याय्ये । शोभनतमे । अयमेषामतिशयेनबाढः । अतिशायिनेतमबिष्ठनाविति ष्ठन् । अन्तिकबाढयोर्नेदसाधौ ।।

साधिष्ठान । त्रि० कोपे । अधिष्ठानेन कूटस्थचैतन्येनसहिते ।

साधीयान् । त्रि० अतिबाढे ।। अतिशोभने । अतिसाधौ ।। अयमनयोरतिशयितोबाढ साधुर्वा । द्विवचनेतीयसुन्० अन्तिकबाढयोरिति बाढशब्दस्यसाधादेशः । टेरिति साधोष्टिलोपः ।।

साधु । त्रि० उत्तमकुलोत्पन्ने । अस्य पर्यायायथा । महाकुलकुलीनार्य्य सभ्यसज्जनसाधवइति । वार्द्धुषिके ।। चारौ । शोभने । मनोज्ञे । स्वभावसुन्दरे ।। प्रवीणे । योग्ये ।। स्वधर्मवर्त्तिनि ।। अपकारिष्वप्युपकारशीले ।। मद्योपिषि ।। पुण्यकारिणि ।। वेदमार्गस्थे ।। शास्त्रविहितकारिणि ।। सर्वहिते ।। नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पन्नमुमुक्षौ ।। कुलधर्माश्रिते ।।

यशोध्याम् ॥ आतपत्रे ॥ कृत्स्न वपाल . । पाठान्तरे॰ साधुतम पि ॥

साध्य : । पुं॰ गणदेवताविशेषे ॥ साध्य सिद्धि । साध॰ । कर्त्तरि ण्यत्॰ इतिभावेण्यत् । सा॥ध्य स । यत्रभावत् । साध्याद्वादश विख्याता . पुराणेषुपुरातनै . । तेयथा । मनोमन्त्रसप्राणश्चनरोयानो पानस्तथा । नारायणोनरश्चैव हरिश्चिन्तथाविभु : ॥ प्रभुश्चवाद शैवैतेसाध्या . प्रोक्ता पुरातनैरिति ॥ विष्कम्भादान्तर्गतेयोगविशेषे ॥ तत्रोत्पन्नस्यफल यथा । असाध्यसाध्य : किलसाध्यजात : शूरोतिधी रोविजितारिपक्ष ' । बुद्ध्यासुपा र्थे परिसाधितार्थं . परक्रतार्थं सुतरांविनीत . ॥ स्मरे । कामे ॥ देवे । सुरे ॥ त्रि॰ साधनीये ॥ कृष्णोपाय : सुखोपायेद्विविध . साध्यउच्यते ॥ साधनाभिमते ॥ साध्यतेऽत्र । क्रतुपत्र । यथा । प्रतिज्ञादोषनिर्मुक्त साध्यंसत्कार णान्वितम् । निश्चित लोकसिद्धश्च पक्ष पक्षविदोविदु . ॥ साध्यसाध नाभिमत पक्ष विदु : । यथाप्यन्य असाध्य व्याप्यम्॰ तद्विशिष्टधर्मी पक्षइतिभेद : । तथाप्यत्रवाक्प्रत्या प्यर्थादिधर्मविशेषविशिष्टस्यपक्षत साधर्मिणोऽथमस्यपदैरेवसाध्यत्वात् साध्यपक्षयोरभेदाभिधानमितिव्यव हारतत्त्वम् ॥ व्याप्ये ॥ साध्यते ऽनेनेतिव्युत्पत्त्यापक्षे ॥ यथा ॰प र्वतोवह्निमानित्यत्रपर्वत ॥ सा धयितुंयोग्ये ॥ यथापर्वतोवह्निमा नित्यत्रवह्नि . साध्य ' ॥ साध्यस्य वस्तुनोऽभावेसाधनै क्रियप्रयोजनम् ॥

साध्यतावच्छेदकम् । न॰ अनुमिति विधेयांशेभासमानधर्मे ॥

साध्यव्यापकत्वम् । न॰ साध्यसमा नाधिकरणात्यन्ताभावाप्रतियोगि त्वे ॥

साध्यसम ' । पुं॰ हेत्वाभासान्तरे ॥ यथाक्तगोतम । साध्याविशिष्टस्य साध्यत्वात्साध्यसम . ॥ ४८ ॥ साध्येनवह्न्यादिना॰ अविशिष्ट ॰ तुल्यत्वतयाहृ॰ साध्यत्वादिति॰ साधनीयत्वादित्यर्थ । यथाहि॰ साध्य साधनीय ॰ तथाहेतुरपिचेत् ॰ साध्यसमइत्युच्यते । अतएवअा सिद्धइतिव्यवह्रियते । अयस्याश्र यासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद् धिभेदात्॰ त्रिविध । आश्रयासि द्धिश्च॰ पक्षेपक्षतावच्छेदकाभाव . । यथाकाञ्चनमय ' पर्वतोवह्निमा नित्यादौ । स्वरूपासिद्धि ' ॰ प क्षे हेतुताऽवच्छेदकावच्छिन्नस्याभा व । यथाह्रदोद्रव्यधूमादित्यादौ

र्युक्तोयशोहर्षप्रदोभृष । चड्स्क सप्तकेतासेसानन्दोवीरबीरसे ॥ त्रि० आह्लादयुक्ते ॥

सानन्दूर । पु० तीर्थविशेषे ॥

सानसि । पुं० काञ्चने ॥ सनोति षणुदाने । सानसिवर्णसोत्थादि नाअसिप्रत्ययउपधाह्रस्व ॥ त्रि० सम्भजनीये ॥

सालिका । स्त्री० वाद्यविशेषे । सना ई० कुतिलोकप्रसिद्धे ॥ वंशी वाद्ये ॥

सानु । पु० न० स्त्री । प्रस्थे । पर्वतस्यसमभूभागे ॥ वने ॥ वात्या याम ॥ मार्गे ॥ अग्रे ॥ कोविदे ॥ सनोति । षणु० । दृसनिजनी तिञुण् । अर्के ॥ पल्लवे ॥

सानुक्रोश । त्रि० सदये ॥

सानुज । पु० तुम्बुरुवृक्षे । तीच्छा पत्रे ॥ न० प्रपौण्डरीके ॥ त्रि० अनुजेनसहवर्तमाने ॥ सानुज रा ममोर्ई ॥

सानुबन्ध । त्रि० सपरिवारे ॥ अवि च्छिन्ने । सानुस्यूते ॥

सानुमान् । पु० पर्वते ॥ सानवोवि द्यन्तेऽस्य । मतुप् ॥

सानेयिका । स्त्री० सानेय्याम् ॥

सानेयी । स्त्री० वंश्याम् ॥ कु०श० र०मी० ॥

सान्तपनम् । न० कृच्छ्रसान्तपनाभिध व्रतविशेषे ॥ यथा । गोमूत्र गोमय क्षीर दधिसर्पि कुशोदकम् । ए कराचोपवासश्च कृच्छ्र सान्तपनस्मृ तम् ॥ गोमूत्रादिषड्द्रव्याण्येकी कृत्य कस्मिन्नहनिभक्षयेत्०नान्यत् किञ्चिद्यात् । अपरदिने चोपवास इत्येतत्०सान्तपनकृच्छ्रस्मृतमित्य र्थः ॥ सन्तपति, तप० । ल्यु । तस्येदङ्कर्म । अण् ॥

सान्तर । त्रि० विरले ॥ अन्तरेणस हित ॥

सान्त्व । न० अत्यर्थमधुरैवाक्यै । कर्णमन प्रीतिजनके ॥ साम नि । प्रियशब्दार्थप्रदानसम्बन्धादि भि क्रोधोपशमने । द्रव्यदास्त्वा मितुभ्य मा भैषीरित्यादिसमाधा नोक्तौ ॥ सान्त्वयति । षान्त्वसामप्र योगे । चुरादिरदन्त । एरच्०घञ् वा ॥ दाक्षिण्ये ॥

सान्त्वनम । न० प्रणये ॥ सान्त्वाते षान्त्व० । ल्युट् ॥

सान्त्वना । स्त्री० प्रणये ॥ प्रथम सा न्त्वनानन्तेति कोषान्तरम् ॥ सामनि

सान्त्वनावाद । पुं० प्रियवचने ।

सान्दीपनि । पुं० मुनिविशेषे ॥ अ स्त्रादिविद्याभिज्ञे०अवन्तिपुरवासि नि कृष्णरामकृष्णयोर्गुरौ । सन्दी पनस्यापत्यम् । अतइञ् ॥

सान्दृष्टिकम् । पुं० व्यापारान्तरं

सामक । पु॰ तर्कुशाणे ॥ सामाभिज्ञे ॥ सामअधीते॰ वेदवा । क्रमादिभ्योवुन् ॥ न॰ मूलऋणे ॥
सामग । त्रि॰ ब्राह्मणविशेषे । छान्दोगे ॥ सामगायति । गैशब्दे । गापोष्टगितिटक् । टिड्ढाणञ' । तेनस्त्रियांसामगी ॥
सामगर्भ॰ । पु॰ विष्णौ ॥
सामग्री । स्त्री॰ कारणसमूहे ॥ यथा । सामग्रीचेद्वफलविरहेणोव्याप्तिरेवेति तत्त्वमृद्व॰ पदाङ्कदूत ॥ द्रव्ये ॥
सामग्र्यम् । न॰ समुदायत्वे ॥
सामज । पु॰ गजे ॥ कुञ्जरे ॥ त्रि॰ सामेत्थे । सामार्थे ॥
सामञ्जस्यम् । न॰ औचित्ये । युक्तियुक्ते ॥
साम । न॰ सहस्रशाखिपितृदेवताकेवेदविशेषे ॥ गीतिविशिष्टायामृचि ॥ ऋच्यध्यूढ सामोच्यते ॥ वाक्यविशेषस्यार्थागीतौ ॥ सामपदन्तुगीतिमात्रस्यैवाभिधायकमित्यन्यत् । चतुर्णांवेदानांमध्येगानमाधुर्येणातिरमणीयत्त्वाद्विष्णोर्विभूति सामेत्युच्यते । राज्ञांशत्रुवशीकरणोपायविशेषे । सान्त्वे । प्रियवाद्' र्थप्रदानसत्त्वत्त्वादिभि शत्रो क्रोधोपशमने ॥ यथा । परस्परोपकाराणादर्शनगुणकीर्त्तनम् । सम्बन्धस्यसमाख्यानमायत्या . सम्प्रकाशनम् ॥ वाचापेशलयासाधुतवाहमितिचापर्णम् इतिसामविधानज्ञै सामपञ्चविधस्मृतम् '। स्यतिपाप॰ रोष बाऽनेनवा । षोअन्तकर्मणि । सातिभ्यामनिनमनिणाविति मनिन् ॥ साऽनम् । सामसान्त्वप्रयोगे । बाहुलकात् मनिन्वा ॥ त्रि॰ शोभने । धनवर्थे ॥
सामन । पुं॰ सामवति ॥ सामास्यास्ति । पामादित्वन्न ॥
सामनी । स्त्री॰ पशुबन्धनरज्जौ ॥
सामन्त । पु॰ प्रतिवासिनि । समन्तोन्तएकदेशोस्य । प्रादिभ्योधातुजस्येतिसमास ' । समन्तायाःदेशाव्यवहितभूमेरयम् । तस्येदमित्यण् ॥ माण्डलिके ॥ चतुर्दिक्षि ॥ त्रि॰ सहाये ॥
सामन्य: । पु॰ सामविदि ॥ सामसुसाधु॰ प्रवीणो॰ योग्योवा । ततसाधुरितियत् । येचाभावकर्मणोरितिप्रकृतिभाव . ॥
सामयिक । त्रि॰ समयोचिते । समयेकार्यकर्त्तरि ॥ समय प्राप्तः । समयस्तदस्यप्राप्तमितिठञ ॥ विनयादित्वात्स्वार्थेठग्वा । समयोत्थे ॥
सामयोनि । पुं॰ ब्रह्मणि । द्रुहिणे । कुञ्जरे । गजे । त्रि॰ सा

ब्राह्मण क्षत्रियो वैश्य. शूद्र '
सामान्यएवचेति ॥

सामान्यम्। न॰ जातौ॥ तद्द्विविध
म्। यथा। सामान्यं द्विविधम् प्रो
क्तम् परञ्चापरमेव च। द्रव्यादित्रि
कवृत्तिस्तु सत्तापरतयोच्यते। पर
भिन्ना च या जातिः सैवापरतयोच्य
ते। व्यापकत्वात् परापि स्याद्व्याप्य
त्वादपरापि च। द्रव्यत्वादिकजा
तिस्तु परापरतयोच्यते। इति भा
षापरिच्छेदः॥ तल्लक्षणं यथा। नि
त्यत्वे सत्यनेकसमवेतत्वमिति। अ
नेकसमवेतत्वं संयोगादीनामप्य
स्ति॰ अत॰ सत्यन्तम्। नित्यत्वे
सति समवेतत्वं गगनपरिमाणादी
नामप्यस्ति॰ अत उक्तमनेकेति।
नित्यत्वे सत्यनेकवृत्तिसामान्यमु
पेक्ष्य समवेतत्वमुक्तम्। एकव्यक्ति
वृत्तिस्तु न जातिः। यत उक्तम्। व्य
क्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थि
तिः। रूपहानिरसम्बन्धो जातिबा
धकसङ्ग्रहः॥ एकव्यक्तिकत्वा
दाकाशत्वं न जातिः। तुल्यवृत्ति
कत्वाद्घटत्व कलसत्वं न जातिद्वय
म्। सङ्कीर्णत्वाद्भूतत्वं मूर्त्तत्वं न
जातिः। अनवस्थाभयात् सामान्य
त्वं न जातिः। विशेषव्यावर्त्त
स्वभावरूपहानिः आदतो विशे
षत्वं न जातिः। समवायसम्बन्धा



भावात् समवायो न जातिः। द्रव्या
दित्रिकवृत्तिरिति। परत्वमधिक
देशवृत्तित्वम्॰ अपरत्वमल्पदेश
वृत्तित्वम्। सकलजात्यपेक्षया
ऽधिकदेशवृत्तित्वात् सत्ताया पर
त्वम्। एतद्बोधनाय द्रव्यादीति।
तदपेक्षया चान्यासां जातीनामपर
त्वम्। परभिन्ना सत्ताभिन्ना। व्या
पकत्वात् परापि द्रव्यत्वं व्याप्यत्वादप-
रापि च। पृथिवीत्वाद्यपेक्षया व्या
पकत्वात्॰ अधिकदेशवृत्तित्वा
त्॰ द्रव्यत्वं परत्वम्। सत्तापेक्ष
याऽल्पदेशवृत्तित्वात्॰ द्रव्यत्वम्॰
अपरत्वञ्च। तथा च धर्मद्वयस
मावेशादुभयमविरुद्धम्। इति मुक्ता
वली॥ नित्यमेकमनेकानुगतं सा
मान्यम्। तच्च द्रव्यगुणकर्मवर्त्ती-
ति॰ तर्कसङ्ग्रहः॥ सामान्यं गुण
साम्येन यत्र वस्त्वन्तरैकतेति लक्षण
लक्षितोऽर्थालङ्कारविशेषः॥ य
था। प्रस्तुतस्य यदन्येन गुणसाम्य
विवक्षया। ऐकात्म्यं बध्यते योगात्
तत् सामान्यमिति स्मृतम्। अताह
समर्पितात्मसतया विवक्षितुं यदप्रस्तु
तार्थेन सम्पृक्तमपरित्यक्तनिजगुणमे
कतदेकात्मतया निबध्यते॰ तत्समा
नगुणनिबन्धनात्॰ सामान्यम्। उ
दाहरणम्। मलयजरसविलिप्ततन
वो नवहारलताविभूषिताः सिततर

समासमम् हे ॥

सामि । अ० अर्द्धे ॥ निन्दायाम ॥ सामयति । षामसान्त्वप्रयोगे । अच्छ ॥

सामिधेनी । स्त्री० धाय्यायाम् । अग्निज्वालनार्थं ऋचि । ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ॥ समिधामाधानी । समिधाम धाने षेण्यण । षित्वान्ङीष् । यस्येति लोप ॥ समिन्धि ॥

सामिधेन्य । पु० मन्त्रविशेषे ॥ समिधामाधाने । समिधामाधाने षेण्यण् ॥

सामीची । स्त्री० वन्दनायाम् ।

सामीप्यम् । न० सान्निध्ये । देशकालाभ्याम् अल्पान्तरतायाम् प्रत्यासत्तौ । अव्यवहितत्वे ॥ समीपमेव । चतुर्वर्णादित्वात्० ष्यञ् ॥

सामुद्रम् । न० देहलक्षणे ॥ लवणविशेषे । करके । वशिरे ॥ अस्य गुणा यथा । सामुद्र मधुरपाकेसलिल मधुरगुरु । नात्युष्णं दीपनभेदिसक्षारमविदाहि च ॥ श्लेष्मलवातनुत्तिक्तमरूक्ष नातिशीतलम् ॥ समुद्रोदके सामुद्रमुदकं क्षारं सर्वदोषप्रकोपणम् ॥ समुद्रफेने ॥ धाराजलप्रभेदे ॥ तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् । विस्रं सदोषलं तीक्ष्णं सर्वकर्मसु गर्हितम् ॥ सामुद्रन्त्वाश्विने मासि गुणवद्गाङ्गवद्दिशेत् । यतोऽगस्त्यस्य दिव्यर्षेरुदयात् सकलं जलम् ॥ निर्मलं निर्विषं स्वादु शुक्लं स्याददोषलम् ॥ तत् सामुद्रजलम् । आह च । फूत्कारविषवातेन नागानां व्योमचारिणाम् । वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना ॥ त्रि० समुद्रोत्पन्नवस्तुनि ॥ समुद्रे भवम् । तत्र भव इत्यण् ॥

सामुद्रकम् । न० समुद्रलवणे ॥ समुद्रोक्तस्त्रीपुंलक्षणग्रन्थे ॥ तीर्थविशेषे ॥ त्रि० । स्त्रीपुंसयोर्लिङ्गवेत्तरि ॥

सामुद्रिक । त्रि० स्त्रीपुंसयोर्लिङ्गज्ञे ॥ वेत्ता स्त्रीपुंसयोर्लिङ्ग सामुद्रिक उदाहृतः इति हारावली ॥ समुद्रसम्बन्धिनि ॥ समुद्रचारिणि ॥

सामूहिक । त्रि० सामवायिके ॥ समूहं समवैति । समवायान् समवैतीति ठक् ॥

साम्पराय । पु० परलोके ॥ परलोकसाधने । सम्पराय । परलोक० तत्प्राप्तिप्रयोजनेशास्त्रीयेसाधनविशेषे ॥

साम्परायिकम् । न० युद्धे । समीके । समरे ॥ त्रि० पारलौकिके ॥ यथा । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ पारलौकि

सायकपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

सायङ्काल । पुं० सायाह्ने ॥

सायम् । अ० निशामुखे । दिनान्ते ॥ सानम् । षो० । अम् । सुगागम ॥

सायम्प्रातिक । त्रि० सायम्प्रातर्भवे ॥ कालाट्ठञ् ॥

सायन्तन । त्रि० सायङ्कालसम्बन्धिनि ॥

सायाह्न । पुं० दिनावसाने । दिनान्ते । पञ्चधाविभक्ताह्नः पञ्चमे भागे । यथा । सायाह्नस्त्रिमुहूर्त्तः स्यात् लोकस्तत्र न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥ अह्नः सायम् । सङ्ख्याविसायेति ज्ञापकात् समासः । सायमोह्नमितिभाष्यात्साधु ॥

सायिका । स्त्री० क्रमस्थितौ ।

सायुज्यम् । न० सयुग्भावे । एकदेहदेहित्वैक्ये ॥ सयुजोभावः । ब्राह्मणादित्वात् ष्यञ् ॥

सायोक्षर । पुं० विडाले ।

सार । पुं० बले ॥ स्थिरांशे ॥ यथा । बह्वान्यनेकशास्त्राणि स्वल्पायुर्विघ्नकोटयः । तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसः ॥ मज्जनि । मज्जायाम् ॥ बलकारि । रीमे । कूलिधरणौ ॥ दाडिमे ॥ वायौ ॥ वायके ॥ नवनीते ॥ द्व्यर्थे । काव्यालङ्कारविशेषे ॥ यथा । उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥ परं पर्यन्तभागोऽवधिर्यस्य धाराधिरोहितया तस्यैवोत्कर्षस्य विश्रान्तेः । उदाहरणम् । राज्ये सारं वसुधा० वसुधायाम् पुरम्० पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् । न० जले । धने ॥ न्याय्ये । नवनीते ॥ विपिने । लौहसारे । यथा । च माष्टच्छिखराकारघटकान्यस्त नलिष्टिते । लोहस्यूर्यवसूक्ष्माणि तत्सारमभिधीयते ॥ लौहसाराच्च तन्याङ्कणोमतिसारकम् । अर्द्धसर्वाङ्गवात शूलस्यपरिणामजम् ॥ छर्द्दिश्चपीनसपित्तश्वासकासाश्च्यपोहति ॥ त्रि० वरे । श्रेष्ठे ॥ यथा । असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यां वासः सतां सङ्गो गङ्गाम्भः शिवपूजनम् ॥ इति ॥ विरम्बितमनुसरति कालान्तरम् । सृ० । स्थिरे० कृतिघञ् ॥ सारः शबलपीतयोरिति विश्वः ॥

सारक । पुं० तरलप्रवर्त्तिकृते । जयपाले । त्रि० विरेचके ॥ सरति । सृ० । ण्वुल् ॥

सारखदिर । पुं० दुर्गखदिरे । धन्तरौ ॥

सारगन्ध । पुं० चन्दने ॥

वणमञ्जिष्ठ । दग्धकाम्बरदूते ॥ पाम्नातके । भद्रवल्लायाम् ॥ न॰ गन्धभेदे ॥ मलनिर्गमने ॥

सारणि । स्त्री॰ क्षुद्रनद्याम् ॥ प्रसारण्याम् ॥

सारिणी । स्त्री॰ प्रसारण्याम् ॥ सूक्ष्मनद्याम् ॥

सारण्ड । पुं॰ सर्पाण्डे ॥

सारत । पु॰ सुनौ ॥ त्रि॰ वर्त्तनसहवर्त्तमाने ॥

सारतरु । पुं॰ कदलीवृक्षे ॥ कू॰ ध॰ स्त्रय ॥

सारत । अ॰ बलतदूर्थ्ये ॥ पञ्चम्यास्तसिल ॥

सारथि । पु॰ सूते । नियन्तरि ॥ तस्य लक्षण यथा । निमित्तशकुनज्ञानोश्वशिक्षाविशारद । हयायुर्वेदतत्त्वज्ञोभूविभागविशेषवित् ॥ स्वामिभक्तोमहोत्साह : सर्वेषाञ्च प्रियवद शूरश्चकृतविद्यश्चसारथि परिकीर्त्तितइति ॥ सरत्यश्वान् । सृ॰ । अत्तर्भावितण्यर्थ : । सर्त्तेर्णित्तिगथिन् ॥

सारथ्यम् । न॰ सारथे : कर्मणि॰ भावेच । पुरोहितादित्वात्यक् ॥

सारद : । त्रि॰ सारदातरि ॥

सारद्रुम । पुं॰ खदिरे ॥

सारपाद । पु॰ धामनिवृक्षे ॥

सारभृत् । त्रि॰ सारग्राहिणि ॥

सारमिति । स्त्री॰ वेदे । स्मृतौ । सारस्ययथार्थस्यमिति ॥

सारमूषिका । स्त्री॰ देवदाल्याम् ॥

सारमेय । पु॰ कुक्कुरे । सरमायाअपत्यम् । स्त्रीभ्योढक् ॥

सारमेयादन । पुं॰ नरकविशेषे ॥

सारमेयी । स्त्री॰ शुन्याम् ॥ ढगन्तात्ङीप ॥

सारलोहम् । न॰ लोहसारे ॥ कूतिभूरिप्रयोग ॥

सारव । त्रि॰ सरयूजातवस्तुनि ॥ सरय्वांभव । तत्रभवइत्यण् । दाण्डिनायनेतियलोप ॥ स्त्रियां टिड्ढेतिङीपि॰ सारवी ॥

सारवान् । त्रि॰ ससारे ॥

सारवती । स्त्री॰ छन्दोभेदे ॥ यथा । चेद्भगणत्रितयक्रमत॰ स्याद्गुरुरन्तगतोयमत । भौयमवन्तनृपप्रथिता॰ सारवतीकविभि॰ कथिता ॥ सारविशिष्टायां ॥

सारस : । पु॰ स्वनामख्यातप्रसिद्धपक्षिविशेषे । पुष्करारूये ॥ अस्य शकुनयथा । दृष्टार्थसिद्धि॰ सकलासुदिक्षुस्यात्सारसद्वन्द्वविलोकनेन । श्रुत्वाअपूर्वेनिनदंनगर्त्तुसिद्ध्यस्यभीष्टंयदिएवयस्मात् । वामेनयोषित्कुललाभकारीशब्दस्तथाग्रेनृपतोषलब्ध्ये । य सा सारसाभ्यांयुगपद्विराव · कृतोपि

सारा । स्त्री॰ स्नुहीप्रभेदे ॥ दूर्वाया म् कृष्णत्रिवृतायाम् ॥
सारार्थः । त्रि॰ निष्कृष्टार्थे ॥
सारालः । पु॰ तिले ॥
सारिः । पु॰ स्त्री॰ पाशके ॥
सारिका । स्त्री॰ शारिकाख्यखगे । पीतपादायाम् । गोराटिकायाम् ॥ सरति । इ॰ । ण्वुल् । प्रत्यय स्थात् इत्वम् ॥ इवात्स[illegible]
[illegible] स्त्री॰ कपिलशिंशपायाम् ॥ [illegible] पौसिकायाम् ॥ [illegible] ब्राह्मणाम् ॥ प्रसारण्याम् ॥ रक्तपुनर्नवायाम् ॥ मरुद्देव्याम् ॥ इतिरा जनिघंटुः ॥
सारी । त्रि॰ बलयुक्ते । सबले ॥
सारिष्ठः । त्रि॰ अतिशयेनसारे ॥
सारी । स्त्री॰ सप्तलायाम् ॥
सारु । न॰ वर्णवृत्तप्रभेदे ॥ शारदाण्डं [illegible] सारु ॥ यथा । नन्दनन्दनम् भजामि ॥
सारुण । त्रि॰ अरुणवर्णयुक्ते ॥
सारुणा । स्त्री॰ जपायाम् ॥
सारूप्यम् । न॰ सरूपतायाम् ॥
सारोष्ट्र । पु॰ देशभेदे ॥ सारवष्ट्रोय स्मिन् ॥
सारोष्ट्रिका । पुं॰ विषविशेषे ॥ सारोष्ट्रे देशेभवः । अध्यात्मादित्वाट्ठञ् ॥
सार्गल । त्रि॰ सप्रतिबन्धे ।

सार्थः । पुं॰ जन्तुसङ्घे ॥ वणिक्समूहे ॥ समूहमात्रे ॥ २ त्रिका [illegible]नासङ्घाते ॥ त्रि॰ सधने ॥ सफले । अभिधेयसहिते ॥ सरति । गच्छतिवा । सृ॰ । सर्त्तेरर्थः इति थन् ॥ अर्थेनसहवर्त्तमानोवा ॥ वापोच्चिक्षवक्षेषुबनेष्वपक्षेचिव । सार्था[illegible] तदीयेषुविक बेंश्मन्निवादिषु ॥
सार्थकः । त्रि॰ सप्रयोजने ॥ अर्थेनसहवर्त्तमानः । स्वार्थेकः ॥
सार्थवाहः । पुं॰ वणिजि ॥ सार्थं वहति । वह॰ । कर्मण्यण् ॥
सार्थिकः । त्रि॰ सार्थेस्थिते । सार्थो तिष्ठति ॥
सार्द्र । त्रि॰ आर्द्रे ॥ पर्यायास्तु । आर्द्रसार्द्रक्लिन्न तिमित स्तिमित समुन्नसुत्तन्नेति ॥ सहआर्द्रेणगुणेनेतितथा ॥
सार्द्ध । त्रि॰ अर्द्धसहिते ॥ अर्द्धेनसहवर्त्तमानः ॥
सार्द्धम् । अ॰ साकमर्थे । सत्रम् । समम् । सहार्थे ॥ ऋध्यति । ऋधु वृद्धौ । बाहुलकात्कम् । सहऋद्धं वर्त्तते ॥
सार्प्प । पुं॰ अश्लेषानक्षत्रे ॥ सर्पोदेवताऽस्य । सास्यदेवतेत्यण् ॥
सार्प्पराज्ञी । स्त्री॰ सर्पराजस्यवासुकेः पत्न्याम् ॥

सालवेष्ट '। पुं॰ धूनके ॥
सालशृङ्गम् । न॰ प्राचीराग्रे ॥
सालसार । पु॰ तरौ ॥ हिङ्गुनि ॥
सालिका स्त्री॰ शारिकायाम् ॥ षल॰ । ण्वुल् । ह्रस्वम् ॥
सालोक्यम् । न॰ एकलोकवासे । सलोकतायाम् ॥
सास्विक । पुं॰ पक्षिविशेषे । गृध्रजातौ । क्षुद्रचूडे ॥
साल्व : । पुं॰ देशविशेषे ॥ तद्देशस्थे॰ पुभूम्नि॰ कारकुक्षीयेषु ॥ साल्वास्तुकारकुक्षीयामरवस्तुदशीरकाः ॥ हेमचन्द्र ' ॥ पुं॰ नृपतिविशेषे ॥ न॰ मूलविशेषे ॥ साल्वमूलम् । पुष्पमूलेषुबहुलमित्यणोलुक् ॥ स्मृतिप्रामाण्यात्साल्वशब्दस्यवृद्धत्वेपिस्वादित्वमाचारादित्वं वा सोध्यम् ॥ त्रि॰ साल्वदेशजे । साल्वेभवः ' । कच्छादिभ्यश्चेत्यण् ॥ यथा॰ साल्व पदातिरञ्जति ॥
साल्वक । त्रि॰ साल्वदेशजेब्राह्मणादौ ॥ गवि ॥ यवाग्वाम् ॥ साल्वेभवात । अपदातौसाल्वादिति॰ गोयवाग्वोरेतिवुञ् ॥
साल्वती । स्त्री॰ नाम्यवती ॥
साल्वहा । पु॰ श्रीकृष्णे ॥
साल्वेय : । पुं॰ नृपान्तरे ॥ तस्यापत्ये ॥ साल्वेयस्यापत्य॰ राजा । साल्वेयगान्धारिभ्याञ्चेत्यञ् ॥
सावधान . । त्रि॰ समाहितान्तःकरणे ॥ अवधानेनसहवर्त्तमान ॥ सचेतने ॥
सावन । पुं॰ यज्ञकर्मान्ते ॥ यजमाने ॥ प्रचेतसि । वरुणे ॥ दिवसविशेषे ॥ यथा । खरमरीच्युदयद्वयअन्तर यदिहसावनसञ्ज्ञदिनस्फुटम् ॥ अपिच । अहोरात्रेणचैकेन सावनोदिवस.स्मृत । इति ॥ त्रिं शद्दिनात्मकोमासि ॥ त्रिंशतासौरदिवसैः सावन ' परिकीर्त्तित . ॥ न॰ सवनसम्बन्धिदिने ॥ सोमयागेसवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिदिन सावनमितिमाधवाचार्य्यः ॥
सावयवम् । न॰ व्यक्तौ ॥ अवयवनमवयवोमिथः संश्लेषः मिश्रण संयोगइतियावत् । अप्राप्तिपूर्विकाप्राप्ति ' संयोग तेनसहवर्त्तत इतिसावयवम् । तथाहि॰ पृथिव्यादय . परस्परं संयुज्यन्ते॰ एवमन्येपि । नतुप्रधानस्यबुद्ध्यादिभि ' संयोगस्तादात्म्यात् । नापिसत्त्वरजस्तमसाम्परस्पर संयोगोऽप्राप्तेरभावात् ॥ त्रि॰ अवयवविशिष्टे ॥
सावर '। पुं॰ मृगविशेषे ॥ न॰ तन्मांसे ॥ यथा । मांससावरसम्भूतं पाचितंबहुधाघृते । वेसवारोपचा

त्वचे ॥ द्वात्रिंशी० द्रू० भा० ॥

सिंहलस्था । स्त्री० सैंहल्याम् ॥ त्रि० सिंहलदेशवासिनि ॥

सिंहलास्थान । पु० तालवृक्षसदृशवृक्षविशेषे । प्रोत्फले ॥

सिंहलील । पु० रतिबन्धविशेषे ॥ यथा । लिङ्गोपरिस्थितानारीभूमौदत्त्वापदद्वयम् हृदयेदत्तहस्ताचसिंहलील प्रकीर्त्तित ॥ लिङ्गोपरिस्थितानारीकान्तोरस्थपदद्वया । हृदयेदत्तहस्ताचसिंहलीलोप्यसावपि ॥

सिंहवाहिनी । स्त्री० दुर्गायाम् ॥ यथा । सिंहमारुह्यकल्पान्तेनिहतोमहिषोयया । महिषघ्नीततोदेवीकन्यावैसिंहवाहिनी ॥

सिंहविक्रान्त । पु० अश्वेहये । त्रि० सिंहतुल्यविक्रमवति ॥

सिंहविन्ना । स्त्री० माषपर्ण्याम् ॥

सिंहविलोकितम् । न० मात्रावृत्तान्तरे ॥ शृणुसिंहविलोकितवृत्तवरवरयमकमनोहरचरणधरम् । चरणोपतिमानसमधिकलितद्विलवेदचतुष्कनगणललितम् ॥ यथा । दिवसात्ययसादिततिमिरवनवनजावलिबोधनिसर्गधनम् । धनदेन्द्रकृतान्तपाशिनमितम्मितश्चनतलनमदिवसकृतम् ॥ सिंहावलोकितं ॥

सिंहसंहनन । त्रि० वराङ्गरूपोपेते ॥ सिंहसंहनन सत्याश्लोकिसर्वाङ्गसुन्दर ॥ सिंहस्येवसंहननदेहोऽस्य ॥ रूढिशब्दोयम् ॥ न० सिंहस्यसम्यग्वधे ॥

सिंहसिन । पु० कुलार्हत्पितरि ।

सिंहा । स्त्री० धमन्याम् ॥ नाड्याम् ॥

सिंहाणम् । न० मण्डूरे । लोहमले ॥ सिंहमानयति । अन० । कर्मण्यण् । पृषोदरादि. ॥

सिंहाधिप । पु० सूर्य्ये ॥

सिंहानम् । न० मण्डूरे ॥ सिंहवदनमिति । अन० अच् ॥

सिंहासनम् । न० हेममयेराजासने ॥ सिंहवदासने ॥ सिंहाकारमासनम । सिंहस्यासनम्वा ॥ परासनस्थायेराजायेराजाचनिरासन . सपरैर्हन्यतेसिंहैरिवमत्तोगजाधिप. ॥ पु० रतिबन्धभेदे । यथा । स्वजङ्घाद्वयबाहुचक्रत्वायेषापदद्वयम् । स्तनौधृत्वारमेत्कामीबन्धसिंहासनोमत ॥

सिंहास्य । पु० वासके ॥ सिंहास्यमस्य । सिंहास्यसदृशपुष्पत्वात् ॥ त्रि० सिंहसमानमुखे ॥

सिंहिका । स्त्री० राहुमातरि ॥ कश्यपस्यपत्नीद्वितुसिंहिकाराहुवासुतनयावजीजनत् । पूर्वजोहरिनिकृत्तकन्धरोदेवतैरवजोनिपातित

सिंहिकात्मज: । ) पुं० राहौ॥ सिंहिकासूनु: । )

भूसुते ॥ वास्तुपुरुषे ॥

सिहनी । स्त्री० मात्रावृत्तान्तरे ॥ यद्गाथातुर्यपदं विंशतिमात्र यथा धिनीभवति । फणिपतिपिङ्गलभ णितमतद्विपरीतस्तु सिंहिनीवृत्तम्। यथा । पर्याप्ताजलधाराविरमति मचहन्तलोचनेजलधारा । जगमु प्रसादमाबास्तद्पिनमेभवतिजीवि तश्रारा ॥

सिंही । स्त्री० कण्टकार्याम् । वा र्ताकौ ॥ वासके ॥ राहुमातरि ॥ हिनस्ति । हिंसो० पचाद्यच् । पृषोदरादि । गौरादि ॥ सुवर्णवर्णवराटके ॥ मुद्गपर्ण्याम् ॥

सिंहीलता । स्त्री० हृहत्याम ॥

सिंहीवृत्ता । स्त्री० अर्कोरुन्दोभे दे १४ । वसन्ततिलके ॥

सिकता । स्त्री० सिकतिले० देशे ॥ सिकतास्त्यऽत्र । देशेलुविलचौचे ति० सिकताशर्कराभ्यास्चे तिविहि तस्याणोलुप् ॥ रुजि ॥

सिकता: । स्त्री० भूम्नि ॥ बालुका याम् ॥ सिच्यते । षिच्चरणे । बाहुलकादतच् । पृषोदरादि ॥

सिकतामयम् । न० बालुकामयदेशे । सैकते ॥ सिकतानांविकार: । मयड्वैतयोर्भाषायामभक्ष्याच्छादन योरितिमयट् ॥

सिकतावान् । त्रि० बालुकाबहुलेदेशे सैकते ॥ अश्मप्रायस्त्दधिकेदेशे ॥ सिकताऽस्त्यत्र । मतुप् ॥

सिकतिल । त्रि० सिकतावति ॥ सिकताऽस्त्यत्र । देशेलुविलचौ चेति० इलच् ॥

सिक्त । त्रि० अभिषिक्ते ॥ क्लतसेच ने । सेकाश्रये ॥ सिचि क्त ॥ एकोमुनि: कुम्भकुशाग्रहस्तआम्र स्यमूलेसलिलंददान । आम्रश्च सि क्त ॥ पितरश्चतृप्ताएकाक्रियाद्व्य र्थकरीप्रसिद्धा ॥

सिक्थ । पु० भक्तपुलाके । यासे ॥ न० मधूच्छिष्टे । मेघ० सिथा० द्र० भा० प्र० गोम० दूलिन ॥ नो ल्याम् ॥ सिच्यते । सिच्यतेवा । षिच० । पातृतुदिवचिरिचिसिचि भ्यस्थक ॥

सिक्थकम् । न० सिक्थे ॥ स्वार्थेक ॥

सिक्थवर्त्तिका । स्त्री० मधूच्छिष्टव र्त्तिकायाम् , सिक्थदीपे । सिक् थस्यवर्त्तिका ॥

सिङ्घाणम् । न० सिङ्घाणे ॥

सिच् । स्त्री० वस्त्रे ॥

सिचय: । पु० वस्त्रे ॥ जीर्णवस्त्रे ॥

सिघ्नन् । त्रि० क्षपयति ॥ षिचे: शतृप्रत्यय ॥

सिञ्चिता । स्त्री॰ पिप्पल्याम् ॥

सित । पु॰ शुक्लवर्णे ॥ श्वेदाते । गौरवर्णे । बाणे । शरे ॥ न॰ चन्दने ॥ रूप्ये ॥ मूलके ॥ त्रि॰ समाप्ते । अवसिते ॥ शुक्लवर्णविशिष्टे । धवले ॥ बद्धे । बधा॰ क्त॰ भा॰ ॥ ज्ञाते । सौवर्तिस्र । षिञ् बन्धने । क्त । श्यतिस्र । षो॰ क्त । द्यतिस्यतीतीत्त्वं वा ॥ सिनोतिवा । षञ्चिघृषिभ्य क्त ॥ समाप्ते ॥

सितकण्टा । ) स्त्री॰ श्वेतकण्ट-
सितकण्टारिका ) कार्याम् ॥

सितकण्ठ । पुं॰ दात्यूहपक्षिणि ॥

सितकर: । पु॰ चन्द्रे । कर्पूरे ॥

सितकर्णी । स्त्री॰ वासके ॥

सितकुञ्जर: । पुं॰ इन्द्रे ॥ इन्द्र-गजे ॥

सितगङ्गा । स्त्री॰ कामरूपप्रसिद्धनदीविशेषे । स्वर्णधाम् ॥ इ॰का-लिकापुराणम् ॥

सितगुञ्जा । स्त्री॰ श्वेतगुञ्जायाम् । काकपीलौ ॥

सितचिह्न । पुं॰ वालुकागडे॰मत्स्ये ॥

सितच्छत्रम् । न॰ नृपच्छत्रे ॥

सितच्छत्रा । स्त्री॰ शतपुष्पायाम् ॥ सित वद्धर्शुभ्र वाच्छमस्या . ॥

सितच्छवित । त्रि॰ श्वेतच्छवयुक्ते ॥

सितच्छद । पु॰ हंसे ॥ श्वेतच्छद विशिष्टे ॥ त्रि॰सिता: शुभ्रा. छदा यस्य ॥

सितच्छदा । स्त्री॰ श्वेतदूर्वायाम् ॥

सिततुरग । पु॰ अर्जुनाख्यपाण्डवे ॥

सितदर्भ । पुं॰ श्वेतकुशे ॥

सितदीप्य । पु॰ श्वेतजीरके ॥

सितधातु । पु॰ कठिन्याम् ॥

सितपक्ष । पु॰ हंसे । शुक्लपक्षे ॥ त्रि॰तद्वति ॥

सितपर्णी । स्त्री॰ अर्कपुष्पिकायाम् ॥

सितपाटलिका । स्त्री॰ काष्ठपाटलायाम् ॥

सितपुङ्खा । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितपुष्प: । पु॰ तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न॰कैवर्त्तीमुस्तके ॥

सितपुष्पा । स्त्री॰ मल्लिकायाम् ॥

सितपुष्पी । स्त्री॰ श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम् । न॰ शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाष । पुं॰ राजमाषे ॥

सितरञ्जन: । पु॰ पीतवर्णे ॥

सितरश्मि: । पु॰ चन्द्रे ॥

सितवर्माभू । पुं॰ पुनर्नवायाम् ॥

सितवाजी । पुं॰ अर्जुने ॥

सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥

सितशिम्बिक: पु॰ गोधूमे ॥

सितशूरण । पु॰ वनजीरके ॥

सितसर्षप । पु॰ श्वेतसर्षपे । सिद्धार्थे ॥

सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितसार । पुं॰ शालिञ्चशाके ॥

सितसारक । पु॰ तिन्दुके ॥ शालिञ्चे ॥

सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥

सितसिन्धु । स्त्री॰ गङ्गायाम् ॥

सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । अञ्चिघृसिभ्य क्त । टाप् । शुभ्रवर्णत्वाद्वा ॥ खण्डन्तु सिकतारूप सुश्वेत शर्करा सिता । सितासुमधुरारुच्यावात पित्तास्रदाहहृत् ॥ मूर्च्छाछर्द्दिज्वरान्हन्तिसुशीताशुक्रकारिणी ॥ मल्लिकायाम ॥ तेजन्याम ॥ जयायाम् ॥ गिरिकर्णापराजितायाम ॥ वाकुच्याम् ॥ आयमाणायाम् ॥ मद्ये ॥ पिङ्गायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम ॥ चन्द्रिकायाम् ॥ कुटुम्बिन्याम् ॥ गङ्गायाम् ॥

सितांशु । पु॰ चन्द्रे ॥ कर्पूरे ॥ सितांशुतैलम् । न॰ कर्पूरतैले ॥

सिताखण्ड । पु॰ मधुशर्करायां ॥

सिताङ्क । पु॰ वालुकागण्डमत्स्ये ॥

सिताङ्ग । पुं॰ श्वेतरोहिते ॥

सिताजाजी । स्त्री॰ श्वेतजीरके ।

सितादि । पु॰ गुडे ॥ सितायाआदि ॥

सितानन । पुं॰ गरुडे ॥

सितापाङ्ग । पु॰ मयूरे ॥

सिताब्जम् । न॰ श्वेतकमले ॥

सिताभ । पु॰ कर्पूरे ॥

सिताभ्र पु॰ हिमवालुकायाम् । कर्पूरे ॥ सित श्वैत्य॰ बन्धन वा॰ चन्द्र वा॰ अभ्रति । अभ्रगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिताभ्रमिववा ॥

सिताभ्रकम् । न॰ कर्पूरे ॥

सिताम्बर । पु॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लवस्त्रवति ॥

सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके । सित शुक्लञ्चतदम्भोजञ्च ॥

सितार्जक । पु॰ श्वेततुलस्याम् कुठेरके ॥

सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥

सितार्क । पु॰ श्वेतमन्दारे ॥

सिताखिकटभी । स्त्री॰ श्वेतकिणही वृक्षे ॥

सिताम्बर । पुं॰ सुधोपवके । श्री बारकी । सितिवाराद्भुतिख्यातिशाखि । मुनिपक्षे ॥

सितावरी । स्त्री॰ बाकुच्याम् ॥

सितासित । पु॰ बलभद्रे । हलायुधे ॥

सिताह्वय । पुं॰ श्वेतशिग्रौ ॥ श्वेतरोहिते ॥

सितेक्षु । पु॰ श्वेतेक्षौ ॥

सितेतर : । पुं॰ कृष्णशालौ ॥ कुलत्थे ॥ कृष्णे । त्रि॰ कृष्णवर्णवति ॥

सितेतरगति । पु॰ वह्नौ ॥

सितोद । पुं॰ सरोविशेषे ॥ विपुलाख्यस्याद्रेर्मूले वैभ्राजाख्यवनतत्सितोदकनामसरः॰ यद्कर्कान्तिभिरब्जैर्मण्डितसुरैरासेव्यते । तदुक्तम् । वैभ्राजं वैपुलमूले सितोदश्चक्रदोत्तम । देवैर्निषेव्यते कञ्ज कमलैरश्मतप्रभैरिति ॥ सितसमुद्रकयस्य । उत्तरपदस्येत्युदकशोदादेश ॥

सितोदक । पु॰ सितोदे ॥ स्वार्थे क ॥

सितोदर : । पु॰ कुबेरे ॥

सितोपल । पु॰ स्फटिके ॥ खिलाधातौ ॥ सिताश्मनि । मि श्री॰ चीनी॰ इ॰ भाषाप्रसिद्धा ॥

सितोपला । स्त्री॰ शर्करायाम् ॥ शर्कराविकारभेदे । मिश्रीतिलोकविश्रुते ॥ सितोपलासरालघ्वी-वातपित्तहरीहिमा । यथायथाहि नैर्मल्यमधुरत्वं तथातथा ॥ स्नेहलाघवशैत्यानिसरत्वञ्चतथातथा ॥

सिद्ध । पु॰ व्यासादौ ॥ देवयोनिविशेषे । अणिमादिगुणोपेतेविश्वावसुप्रभृतौ ॥ विष्कम्भादियोगान्तरगतयोगविशेषे ॥ तच्चात्रफलयथा । जितेन्द्रिय . सर्वकलानिधानोगौरोतिशूरोमधुरोविनीत । सत्योपपन्न ' कृतभूरिभोगोयस्यप्रसूतौकिलसिद्धयोग । इति ॥ गुडे असेधीत् । इति सिद्ध . षिधुहिंसासराद्ध्यो . । गत्यर्थाकर्मकेतिकर्त्तरिक्त . । सिद्धिरस्यास्तीतिवा । अर्शआद्यच् ॥ कृष्णधत्तूरे ॥ व्यवहारे ॥ रे । शब्दश्रुणोमीत्यादिव्यवहारेणप्रसिद्धे । न॰ सैन्धवलवणे ॥ त्रि॰ योगिनि ॥ जन्मनैवविनाप्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयप्राप्ते ॥ पूर्णमनोरथे ॥ अधिगतपरमार्थे । पुत्रभृत्यादिभि ' सहायैः सम्पन्ने ॥ प्रसिद्धे ॥ नित्ये ॥ यथासिद्धधातौ॰ सीद्धापृथिवी॰ सिद्धमाकाशमिति

॥ कार्येष्वपि मता इति । तद्यथा सिद्धौदन सिद्ध . सूप . सिद्धाय वागूरिति ॥ मुक्तौ ॥ नित्ये । यथा ॥ सिद्धान्त ॥ सिद्धे सराद्धौ । त० । सिद्धि साधनाप्रयोग ॥ सर्वभूतादौ विग्राधिष्ठानेपरमेश्वरे ॥ तत्त्वज्ञात्मन्यध्यात्वटादिं सिद्धमित्युच्यते । परमात्मा तु सर्वदा तत्त्वसत्तया स्वतोऽप्रमाणाभावादिति नित्यनिष्पन्नरूपत्वान्नित्यसिद्ध उच्यते ॥ सिद्धिर्निर्योगात् आत्मदुभयमीश्वरस्तत सिद्ध सत्वनन्याधीनसिद्धत्वात्सिद्धो वा ॥ सिद्धिविशिष्टे ॥

सिद्धक । पु० शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री० कामाख्याया पञ्चमूर्त्यन्तर्गतप्रथममूर्त्तौ ॥

सिद्धक्षेत्र । पुं० क्षेत्रदेशान्तर्गत देशविशेषे ॥

सिद्धगङ्गा । स्त्री० मन्दाकिन्याम् ॥

सिद्धक्षेत्रम् । न० काञ्चिके । पञ्चतीर्थे ॥

सिद्धदेव : । पुं० शिवे ॥

सिद्धधातु । पु० पारदे ॥

सिद्धपीठ । पु० सिद्धस्थाने ॥ यथा । आनीलपर्वतशिखरवर्त्तीसेतु काटिसङ्ख्यका । मत्तानिद्रागप कोटि सिद्धपीठ . प्रकीर्त्तितम् ॥

सिद्धपुरम् । न० भूगोलख्यातदेश विशेषे । तच्चोत्तरकुरुवर्षस्थित देशेऽस्ति । यथा । लङ्काकुमध्ये यमकोटिरस्या . प्राक्पश्चिमे रोमक पत्तनञ्च । अधस्तत सिद्धपुर सुमेरु . सौम्येऽथ याम्ये वडवानलश्च ॥ कुवृत्तपादान्तरितानितानि स्थानानि षट् गोलविदो वदन्ति ॥

सिद्धपुरी । स्त्री० सिद्धपुरे ॥

सिद्धपुष्प । पु० करवीरवृक्षे ॥

सिद्धप्रयोजन । पु० गौरसर्षपे ॥ त्रि० सम्पन्नकार्ये ॥ सिद्धं प्रयोजनं येन० यस्य वा ॥

सिद्धमन्त्र । पु० सिद्धिप्राप्तमन्त्रे ॥

सिद्धमोदक । पु० तवराजीक्षुखण्डे ॥

सिद्धयोगिनी । स्त्री० योगिनीविशेषे ।

सिद्धरस । पु० पारदे । रसे ॥ त्रि० व्याडिप्रभृतिषु । सिद्धश्चासौ रसश्च ॥ सिद्धोरसोयेषाम् ॥

सिद्धविद्या । स्त्री० दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसक्थ । पु० कपिलादिसिद्धानां समूहे ॥

सिद्धसलिलम् । न० काञ्जिके ॥

सिद्धसाधन : । पु० गौरसर्षपे । न० सिद्धस्यवस्तुन साधने । सा

ध्यवस्थानिश्चवैसर्व्वेप्यनुमाने ॥
सिद्धसिन्धु । स्त्री॰ भ्रस्वर्द्गङ्गायाम् । ग ङ्गायाम । भाकाशगङ्गायाम् ॥ सिद्धनामसिन्धु ॥
सिद्धसेन । पु॰ कार्त्तिकेये ॥
सिद्धसेवित । पु॰ भैरवे ॥ त्रि॰ कपिलादिसिद्धैरुपासिते ॥
सिद्धा । स्त्री॰ ऋद्ध्याख्यौषधौ ॥ सिद्धिरस्त्यस्याम् । अर्श आद्यच् टाप ॥ योगिनीविशेषे ॥
सिद्धान्त : । पु॰ बहु तात्पर्यविषयार्थधारणे ॥ पूर्वपक्षं निरस्य सिद्धपक्षस्थापने । वादिप्रतिवादिभ्यां निर्णीतेर्थे ॥ सिद्धान्तलक्षणं तु गौतमीयथा । तन्त्राधिकरणाभ्युपगमसंस्थिति सिद्धान्तइति ॥ अस्यार्थः । तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकं तस्यार्थस्य॰ तादृशोयोभ्युपगम॰ तस्यसमीचीनस्तथाऽसमयरूपतयास्थिति॰ तथाचशास्त्रितार्थनिश्चय सिद्धान्त । अत्र चाभ्युपगम्यमानोर्थः सिद्धान्तइति भाष्यम् । अभ्युपगमं सिद्धान्त इतिवार्त्तिकटीका । नचात्रविरोधशङ्कनीय । आचार्यैः परिहृतत्वात् । तथाचविसूत्रीनिबन्ध । अर्थाभ्युपगमयोर्गुणप्रधानभावस्याविवक्षितत्वात्॰ अर्थाभ्युपगमोऽभ्युपगम्यमानोवार्थः, सिद्धान्त॰ इति न सूत्रभाष्यवार्त्तिकटीकासु नविरोध । अत्रचभाष्यानुसारात्सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम सिद्धान्ताश्चतस्र . सिद्धान्तइति सूत्रार्थइतितुमयुक्तम् अविभक्तस्यानुत्थानापत्ते । तंचसिद्धान्तत्वं नद्वयमनुगम्यतवाधिकरणाभ्युपगमान्यतमसिद्धान्तइतिकश्चित् ॥ २६ ॥ सिद्धान्त विभजते । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितीनामर्थान्तरभावात् ॥ २७ ॥ सचतुर्विधइतिशेष । सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावात्॰ भेदादित्यर्थ . ॥ २७ ॥ राद्धान्ते ॥ सिद्धोऽन्तोनिश्चयोयस्मिन् ॥ मत्स्यपुराणोक्तविषयेषु । ब्रह्मसूर्यसोमवरुणपतिगर्गनारदपराशरपुलस्त्यवशिष्ठसिद्धान्तेषु ॥
सिद्धान्ताचार : । पु॰ वामाचारादुत्तमआचारविशेषे ॥ यथा । आत्मानंदेवतामत्वायजेद्दीक्षमाससे : । सदा शुद्धः सदाशांत सिद्धान्ताचारउच्यते॰ इत्याचारभेदतन्त्रम् ॥
सिद्धान्ती । पु॰ मीमांसके ॥ सिद्धान्तोविद्यतेऽस्य ॥ इनि ॥
सिद्धापगा । स्त्री॰ स्वर्गङ्गाम् । गङ्गायाम् ॥
सिद्धायिका । स्त्री॰ जिनशासनदेव

संकर्षतीति निष्पातनम् ॥ काष्ठे
॥ सिनोति । षिञ् + । बन्धने । इति
तिनक ॥ त्रि॰ शुक्लगुणविशिष्टे ।

सिनी । स्त्री॰ शुक्लगुणवत्याम् । श्वे
तासितासिनीश्येनीतिव्याडिः ॥

सिनीवाली । स्त्री॰ दृष्टेन्दुकलामा
याम् ॥ चतुर्दशीयोगाद्दृष्टचन्द्रा
सती॰ अमा॰ सिनी॰ वालीपद
वाच्या भवति । एतद्विष्णुनांसतत्व
संहितालक्ष्मी । तद्योगात् सि
नीचन्द्रकला । श्रीश्चाद्रिश्चादिनि
। सिनीवलति । वल॰ । कर्म
ण्यण् । ङीप् ॥ दुर्गायाम् । इ॰
मे॰ नी॰ ॥

सिन्दुकः । पुं॰ । सिन्दुवारे ॥ स्यन्द
ते । स्यन्दू प्रस्रवणे । स्यन्देः सम्प्र
सारणञ्चेत्युः । बाहुलकाद्धो
म । स्वार्थसंज्ञायां वा कन् ॥ श्वेत
नीलपुष्पभेदात् सिन्दुको द्विविधो म
तः ।

सिन्दुवारः । पुं॰ निर्गुण्ड्याम् ।
सिन्दुके । म्योंडी॰ सम्हालू॰ ब
ङ्गला॰ इ॰ भा॰ प्र॰ ॥ निसिन्दा॰
कुनछर॰ इ॰ गौ॰ दे॰ भा॰ ॥ सि
न्दुकणोति॰ वारयतिवा । वृञ् व
रणे वृञ् आदरणे वा । कर्मण्यण् ।

सिन्दूर । पुं॰ वृक्षविशेषे ॥ न॰ र
क्तवर्णचूर्णविशेषे । नागसम्भवे ।
सीमन्तके । तद्धारणात् स्त्रीणामायु
षोऽभिवर्द्धनमिति यथोक्तं काशीखण्डे
। हरिद्राकुङ्कुमञ्चैव सिन्दूरं कज्ज
लं तथा । कूर्पासकञ्च ताम्बूलं मा
ङ्गल्याभरणं शुभम् ॥ केशसंस्कार
कबरीकरकर्णविभूषणम् । भर्त्तु
रायुष्यमिच्छन्ती दूषयेन्न पतिव्रतेति
॥ अस्य पर्य्यायाद्यो यथा । सिन्दूरं
रक्तरेणुश्च नागगर्भञ्च सीसजम् । सी
सोपधातुः सिन्दूरगुणस्तत्सीस
वन्मतम् ॥ स योगजप्रभावेण तस्मा
प्यन्ये गुणाः स्मृताः । सिन्दूरमु
ष्णं वीसर्पकुष्ठकण्डूविषापहम् ॥
भग्नसन्धानजननं व्रणशोधनरोपण
म् । अस्य शोधनं यथा । दुग्धाम्ल
योगतस्तस्य विशुद्धिर्गदिता बुधैरि
ति ॥ स्यन्दते । स्यन्दू॰ । स्यन्देः स
म्प्रसारणञ्चेत्यूरन् ॥

सिन्दूरकारणम् । न॰ सीसके ॥

सिन्दूरतिलकः । पुं॰ मतङ्गजे । ह
स्तिनि ॥

सिन्दूरतिलका । स्त्री॰ सधवायां ना-
र्य्याम् ॥

सिन्दूरपुष्पी । स्त्री॰ सिन्दूरीतिख्याते
पुष्पवृक्षविशेषे । वृषपुष्प्याम् । ब
रण्डदायाम् ॥ अस्या गुणाः । कटु
त्वम्॰ तिक्तत्वम्॰ कषायत्वम्॰
श्लेष्मवातशिरोर्त्तिभूतनाशित्वम्॰
चाण्डीप्रियत्वञ्चेति ॥ सिन्दूरवृक्ष
पुष्पा इत्यप्यत्र । पाककर्णेति ङीष् ।

सिन्दूररस । पुं० रससिन्दूराभिधौषधे ॥

सिन्दूरित । त्रि० सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीतिण्यन्तात्कर्म्मणि क्त । आविष्टवङ्गाधरा० विभ्रतीसुर्च्छा ॥

सिन्दूरी । स्त्री० रोचन्याम् ॥ रक्तचेलिकायाम् ॥ धातक्याम् ॥ सिन्दूरीविषपित्तास्रतृष्णावान्तिहरीहिमा ॥

सिन्धु । पुं० अब्धौ । समुद्रे ॥ स्यन्दते० आपोऽत्र । स्यन्द० । स्यन्देः सम्प्रसारणं धश्चेत्यु ॥ वमथौ ॥ रामेयाभरतायार्पितदेशविशेषे ॥ काश्मीरदेशप्रसिद्धनदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रागविशेषे ॥ श्वेतटङ्कणे ॥

सिन्धु । स्त्री० नद्याम् । सरिति ॥ नदीविशेषे ॥ तज्जलगुणायथा । शतद्रोर्विपाशायुक्तं सिन्धुनद्याः सुशीतलघुस्वादुसर्वामयघ्नम् । जलनिर्मलदीपनं पाचनञ्चप्रदत्ते बलबुद्धिमेधायुतञ्च ॥

सिन्धुक । पु० सिन्दुवारे । निर्गुण्ड्याम ॥ सिन्धुशब्दात्स्वार्थे संज्ञायाङ्कन् । गुणायथा । सिन्धुकः स्मृतिदस्तिक्तः कषायः कटुकोलघुः । केश्योनेत्रहितोहन्तिशूलशोथाममारुतान् ॥ कृमिकुष्ठारुचिश्लेष्मज्वरानाग्निलापित्तहिधा ॥ सिन्धुवारजल जन्तुवातश्लेष्मदर खञ्जु ॥ त्रि० सिन्धुप्रजाते ॥ सिन्धूपकाराभ्याकम् ॥

सिन्धुकफ । पु० समुद्रफेने ॥

सिन्धुप्रभव । पु० तीर्थविशेषे ॥

सिन्धुरम् । न० श्वेतटङ्कणे ॥

सिन्धुखिल । पु० सिन्धुदेशे ॥

सिन्धुजम । न० सैन्धवलवणे ॥ सिन्धुप्रजातम् ॥ सप्तम्यांजनेर्ड्ः ॥ त्रि० समुद्रजाते ॥

सिन्धुजन्मा । पुं० चन्द्रे ।, न० सैन्धवलवणे ॥

सिन्धुजा । स्त्री० लक्ष्म्याम ॥

सिन्धुडा । स्त्री० मालवरागभार्य्याम् ॥

सिन्धुनन्दन । चन्द्रे ॥

सिन्धुपुत्र । पुं० चन्द्रे ॥ मर्कटेन्दौ ॥

सिन्धुपुष्पः । पु० शङ्खे ॥

सिन्धुमन्थजम् । न० सैन्धवलवणे ॥

सिन्धुर । पु० हस्तिनि ॥

सिन्धुरद्वेषी । पुं० सिंहे ॥

सिन्धुरवदन । पु० श्रीगणेशे ॥

सिन्धुराज । पुं० समुद्रे ॥

सिन्धुलवणम् । न० सैन्धवे ॥

सिन्धुवार । पु० उत्तमाश्वे ॥ सिन्धुवारे । निर्गुण्ड्याम् ॥ सिन्धुवारोविषश्लेष्मवणकुष्ठक्षयापहः ॥ सिन्धुप्योति० वारयतिवा । ह्रस्

चाण्डालनेत्रा । चर्मण्वत् ॥

सिन्धुवारक । पु० सिन्धुवारे ॥

सिन्धुवारित । पुं० सिन्धुवारे ॥ त्रि० समुद्रेणवारिते ॥

सिन्धुवेषण । पु० गम्भार्याम् ॥

सिन्धुसङ्गम । पुं० समुद्रे । सिन्धोः सङ्गमोमेलः ॥

सिन्धूत्तमम् । न० तीर्थभेदे ॥

सिन्धूद्भवम् । न० सैन्धवलवणे ॥ सिन्धुरुद्भवोस्य ॥

सिन्धूपलम् । न० सैन्धवलवणे ॥

सिप्र । पु० चन्द्रे । हिमागमे । निदाघसलिले । स्वेदे ॥ न० सरोविशेषे ॥ यथोक्तङ्कालिकापुराणे । ततोहिमवतःप्रस्थे प्रतीच्यन्तु पुरस्य च । सिप्रनामसरः पूर्णंदद्दशुद्रुहिणादयस्तु इति ॥

सिप्रा । स्त्री० नद्यन्तरे ॥ सिप्राख्यात् सरसोयस्मान्निर्गतासामहानदी । अत सिप्रेतितन्नामपुरैवत्र स्थाकृतमितिकालिकापुराणम् ॥ साचोज्जयिनीदेशेवर्त्तते । तस्याश्चोत्पत्तिः कालिकापुराणे २३ अध्यायेद्रष्टव्या ॥

सिम । त्रि० समस्मिन् । सर्वशब्दार्थे ॥ सिनोति । षिञ्० । षिञ्सिञ्यविभ्य इतिमन् ॥

सिम्बा । स्त्री० शम्याम् । शिम्बायाम् । बीजगुप्तायाम् । शौर० छ० भा० प्र० ॥ फली० छ० प्र० च ॥ सममति । समवैक्लव्ये । उलखादयश्चेतिसाधु ॥

सिम्बि । स्त्री० शिम्बायाम् । शिम्बायाम् । नखनामगन्धद्रव्ये ॥

सिम्बी । स्त्री० शिम्ब्याम् ॥

सिर । पुं० पिप्पलीमूले ॥

सिरा । स्त्री० नाड्याम् । अम्बुवाहिन्यांनाड्याम् । सौर० छ० भा० प्र० सिनोति । षिञ्० । बहुलमन्यत्रापीतिरक् ॥

सिराल । पु० सिरासन्ततौ ॥

सिरिकटका । स्त्री० चुद्रकण्टकिन्याञ्च यञ्चुपे । दुराधर्षायाम् ॥

सिलक । पु० अलावतीपत्य० ऋषिविशेषे ॥

सिल्लकी । स्त्री० शल्लकीवृक्षे ॥

सिषाधयिषा । स्त्री० साधनेच्छायाम ॥ यथा । सिषाधयिषयाशून्यासिद्धियत्रविद्यते । सपक्षसत्त्वहेत्वन्नानादनुमितिर्भवेत् ॥

सिषिचा । स्त्री० सेक्तुमिच्छायाम् ॥

सिसृक्षन् । त्रि० स्रष्टुमिच्छति ॥

सिह्लुण्ड । पु० स्नुहीवृक्षे ॥ सीतिहुण्डते । हुडिवरणे । पचाद्यच ॥ सिहतुण्डस्यायमपभ्रंशस्तिस्तामी० पृषोदरादि ॥ अस्य गुणायथा । सिहुण्डोरेचनस्तीक्ष्णोदीपन . कटुकोगुरु । शूलामाष्ठी

लिङ्गाध्मानकफगुल्मोदरानिलान् उन्मादमोहकुष्ठार्शः शोथमेदोश्म पाण्डुता । व्रणशोथज्वरप्लीहविष दूषीविषं हरेत् ॥ उष्णवीर्यस्तु तीक्ष्णो रस्निग्धश्च कटुकस्तथा । गुल्मिनाङ्कुष्ठिनाञ्चापि तथैवोदररोगिणाम् । हितमेतद्विरेकार्थे ये चान्ये दोषरोगिणः ॥

सिहुण्डदलम् । न० स्नुहीपत्रे ॥ तच्छाकगुणा यथा । सिहुण्डस्य दलन्तीक्ष्णं दीपनं रोचनं हरेत् । आध्मानाष्ठीलिकागुल्मशूलशोथोदराणि च ॥

सिह्लः । पुं० तुरुष्के । पिण्डके । यावने । लोबान० इ० भा० प्र० ॥ स्निह्यति । स्निह्यतीति । अन्तर्भावितण्यर्थः । बाहुलकात् । पृषोदरादि० ॥

सिह्लकः । पुं० सिह्ले । नागौरी गूद० इ० भा० लोबान० इ० यवनभाषाप्रसिद्धे ॥ सिह्लकः कटुकः स्वादुः स्निग्धोष्णः शुक्रकान्तिकृत् । वृष्यः कण्डूस्वेदकुष्ठज्वरदाहग्रहापहः ॥

सिह्लकी । स्त्री० सल्लक्याम् ॥ सिल्हे ॥

सिह्लभूमिका । स्त्री० शल्लक्याम् ॥

सिह्लसारः । पुं० तुरुष्के । धूम्रवर्णे । पीतसारे ॥



सीकरः । पुं० शीकरे ॥ धनपालादिमतेदन्त्यादि ॥

सीता । स्त्री० लाङ्गलपद्धतौ । हलरेखायाम् ॥ जनकनन्दिन्याम् । मैथिल्याम् । वैदेह्याम् ॥ सीता लाङ्गलपद्धतिः । तदुत्पन्नत्वात् सीतेति निर्दिश्यते ॥ यथा । अथमे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुतेति रामायणे ६६ सर्गः ॥ स्वर्गगङ्गायाम् ॥ यथा । पूर्वस्माच्छैलात् सीता तु शैलं यात्यन्तरिक्षगा । ततश्च पूर्ववर्षं वा भद्राश्वेनैति सार्णवम् ॥ सा तु भद्राश्ववर्षगङ्गा । यथोक्तं श्रीभागवते ; सीता तु ब्रह्मसदनात् केशराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्द्धसु पतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशतीति ॥ श्रियि ॥ दुर्गायाम् । सखाधिदेवतायाम् ॥ मदिरायाम् । गङ्गास्रोतसि । काञ्चनमालायाम् ॥ सीयते । षिञ्० । क्त । पृषोदरादि० ॥

सीताद्रव्यम् । न० कापकुद्दालादौ ॥

सीतापतिः । )<br>सीतायाः पतिः । ) पुं० रामचन्द्रे दाशरथौ ॥

सीत्कारः । पुं० मनुष्याणां सुखानुरागजशब्दे ॥ यथा । मन्दोष्णानु

रागीत्य ' प्रपाद : सौत्कत त्वथा मितिहेमचन्द्र . ।। दन्तनिष्पीडना र्थे । सीरितिशब्दे ।।

सीत्कृतम । न० सीत्कारेसुरतध्वनौ ।।

सीत्यम् । न० धान्ये ।। त्रि० हल्ये । हलेनकृष्टेचेत्रे ।। सीतयासमित • सङ्गत • निर्मोङ्गतादिरहितङ्क्षत • समीकृतमितियावत् । गौ श्रयोधर्मेतियत् ।।

सीदमान ' । त्रि० अवसीदति ।।

सीद्यम् । न० आलस्ये ।।

सीधु . । पु० शीधुशब्दार्थे ।।

सीधुगन्ध . । पुं० बकुले ॥

सीधुपुष्प । पुं० कदम्बे ।। बकुले ॥

सीधुपुष्पी स्त्री० धातक्याम् ॥

सीधुरस । पु० आम्रवृक्षे ॥

सीधुसञ्ज्ञ : । पु० बकुलद्रुमे ॥

सीप ' । पु • तपंणाद्यर्थंताम्रादिनिर्मितेजलपात्रे । अर्घा० कोषा० इ० भा० प्र० ॥

सीम् । अ० सर्वतोभवे ।।

सीमा । स्त्री० आघाटे । मर्यादायाम् । सीमायाम् । ग्रामादीनामवधारितांशभागे । सीम० इ० भा० प्र० ।। स्थितौ ।। क्षेत्रे । अण्डकोषे ।। सीयते । षिञ • । नामन्सीमन्नित्यादिनानिपातित .। मनन्तत्वान् ङीप् । सीमानौ० सीमान : •

इत्यादि ॥

सीमन्त । पु० सीमन्तोन्नयनसंस्कारे ।। पु • न० केशवेशे । केशरच नाभेदे ।। केशेषुवर्त्मनि । मूर्द्धन मध्यपद्धतौ ।। सीमन्तमस्त्रियाम्बौ भावेशमध्येतुपद्धतिरितिवैजयन्तौ । सीम्नोऽन्त । शकन्ध्वादि ।

सीमन्तक . । पु० नरकावासे । यथा । सप्तपञ्चमनरकावासा . सीमन्तकादय० हेमचन्द्र : । न० सिन्दूरे ।

सीमन्तित । त्रि० सीमन्तिनोकृते ॥ सीमन्तशब्दात्मत्स्वन्तात् • तत्करोतीतिण्यन्तात्कर्म्मणिक्त . । खण्डितवत्त्रावि० विभक्तोत्युक्त ॥

सीमन्तिनी । स्त्री० नार्य्याम् ॥ सीमन्तोऽस्त्यस्या । अतइनि । नान्तत्वान्ङीप् ।

सीमन्तोन्नयनम् । न० गर्भाधानात् • षष्ठेऽष्टमेवामासिकर्त्तव्ये • संस्कारविशेषे ॥ यथा । मासिषष्ठेऽष्टमेवापिकुर्य्यात्पुंसवनोदिते । दिनाछौनेतिथौकुर्यात्सीमन्तोन्नयनक्रियो ॥

सीमा । स्त्री • आघाटे । मर्यादायाम । सीमनि । ग्रामादीनामवधारितांशभागे । सीम० इ० भा० प्र० ॥ स्थितौ ॥ क्षेत्रे । अण्डकोषे ॥ सिनोति० सीयतेवा । षिञ् • । नामन्सीमन्नित्यादिनानिपातित .

मनडूतिनङीप । डाबुभाभ्यामिति पक्षे डाप् । सीमे॰ सीमा॰ ॰ इ त्याद्विविध्यम् ॥ वेलायाम् ॥

सीमाविवाद । पु॰ ग्रामादीनासीमाविषयकेकलहे ॥ सीमाविषयको विवाद सीमाविवाद । सीमा चतुर्विधा । जनपदसीमा॰ ग्रामसीमा॰ क्षेत्रसीमा॰ गृहसीमेति भेदात् ॥

सीमिक । पुं॰ वृक्षविशेषे ॥ वाल्मीकि ॥ सूक्ष्मकर्मिजातौ । वृक्षपत्रविभागकृतिकीटे ॥ स्यमति । स्यमुशब्दे । स्यमे सम्प्रसारणश्चेतिकिकन् ॥

सीर । पु॰ अर्के । सूर्ये । हले । लाङ्गले ॥ सिनोति॰ सीयतेवा । षिञ्॰ । शुसिचिमीनांदीर्घश्चेति॰ क्रन्॰ दीर्घत्वञ्च ॥

सीरक । पु॰ शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वज । पुं॰ चन्द्रवंशीयनृपविशेषे ॥

सीरपाणि । पुं॰ बलभद्रे । कालिन्दीभेदने ॥ सीरोलाङ्गलपाणावस्य ॥

सीराङ्गम् । न॰ फालाधारे ॥

सीरी । पुं॰ बलदेवे ॥

सीलन्ध । पुं॰ मत्स्यविशेषे । सिलिन्दा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ तद्गुणायथा । सीलन्ध श्लेष्मलोवृष्योविपाकेमधुरोगुरु । वातपित्तहरोहृद्यआमवातकरस्तथा ॥

सीवनम् । न॰ सेवने । स्यूतौ । तुन्नवायकर्मणि । सीवना॰ इ॰ भा॰ ॥ षिवुतन्तुसन्ताने । ल्युट् पृषोदरादित्वाद्दीर्घ ॥ षिवुसिव्योर्ल्युटिवादीर्घइतिस्वामी ॥

सीवनी । स्त्री॰ लिङ्गमध्यस्थ सूत्रे । लिङ्गाधाद्गुह्यपर्यन्तसीवने ॥

सीसम् । न॰ सीसके । योगेष्टे । नागे । सीसा॰ इ॰ भा॰ प्र॰ धातौ ॥ सिनोति । षिञ्॰ । क्विप् । अनित्यत्वात्तुक । इ॰ स्यति । षो॰ । घातोनुपेतिक । सिच॰ तत्॰ ईसञ्च॰ सीसम् ॥ अस्यगुणा यथा सीसरङ्गगुणाश्चैवविशेषाक्मेहनाशनम् ॥ नागस्तुनागशततुल्यबलंददातिव्याधिविनाशयतिजीवनमातनोति । वह्निं प्रदीपयतिकाममवलकरोतिमृत्युञ्चनाशयतिसन्ततसेवित स ॥ पाकेनहीनौकिलवगनागौकुष्ठानिगुल्मांश्चतथातिकष्टान् । पाण्डुप्रमेहानिलमन्दशोथभगन्दरादीन्कुरुत : प्रभुक्तौ ॥ अस्यशोधनमारणविधिर्यथा । तस्यसाङ्कजिकादीनाम गस्यैवनिदर्शिता । शोधनञ्चापितस्यैव॰ भिषग्भिर्वर्णितपुरा । ताम्बूलरस

म्पिष्टशिलालेपात्पुन पुन । हार्पि शङ्क . पुटैर्नागोभिरुत्थ भस्म जायते ॥ शिलामन ' शिला । अन्यच्च । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेनर्नि ' क्षिपेत् । मृत्पात्रे विद्रुतोनागोलोहदर्व्याप्रचालित ॥ यामैकेनभवेद्भस्मतत्तुल्याश्चाम्म न ' शिला । काञ्जिकेनद्वयपिष्ट्वा पचेद्दृढपुटेनच ॥ स्वाङ्गशीतपुन पिष्ट्वाशिलयाकाञ्जिकेनच । पुन पचेच्छरावाभ्यामेवंषष्टिपु- टैस्तुति ' ॥ अपिच । तैलतक्रे गवाम्मूत्रे काञ्जिकेचकुलत्थके । चि धाविधाविशुद्धि ' स्यात्स्वर्णादीनां समासत ॥ मारणम्पुन । कुडवनागपत्राणाकृत्वा श्चात्प लार्द्धकम । ताण्डुलीयरसैर्यामयाम वासारसैस्तथा । सम्मर्द्य चक्रिका ' कृत्वा घर्मेसशोष्यतम्पुन ' । सरा वसम्पुटेकृत्वापचेद्वन्योपलैर्भिषक ॥ एवंसप्तपुटैर्नागोभस्मीभवतिनि श्चितम् । द्विगुणीयभ्रवन्यातप्रमे हानचिलानपीतिवैद्यदर्पण ' ॥

सीसकम् । न० सीसे ॥ स्वार्थे क ॥

सौसपत्रकम् । न० सीसके ॥

सौण्डुड ः । पुं० क्षुद्राम् । सिण्डुण्डे ॥ सौतिण्डुण्डते । कुण्डिमत्ये । पचाद्यच् ॥ सिण्डुण्डशाप्रभंशो सक्रितिस्वामी । पृषोदरादि ॥

सु । अ० पूजायाम् ॥ भृशार्थे ॥ नि र्भरे । अतिमात्रे ॥ अनुमतौ ॥ कृच्छ्रे ॥ समृद्धौ । अनायासे ॥ सूयते० सवतिवा । सुगतौ । क्वि पि० तुगभाव० क्रुर्वा ॥

सुकण्टका । स्त्री घृतकुमार्याम् ॥

सुकण्डु । पुं० कण्डुरोगे ॥

सुकथा । स्त्री० नैमिषारण्याधिष्ठात्री देवतायाम् ॥

सुकन्द । कशेरुणि ॥ धरणीकन्दे ॥

सुकन्दक । पु० पलाण्डौ ॥ शोभ नमतीवशा० कन्दयति० भद्रकस्य जातिभ्र शकारत्वात् । कदिरोदने । अच । स्वार्थेकन । राजलशा ॥ धरणीकन्दे । वाराहीकन्दे ॥

सुकन्दी । पु० सूरणे ॥

सुकम् । अ० अतिशये ॥

सुकर ' । वि० सुखकरे । सुखेनक र्त्तुंशक्ये । सुसाध्ये ॥ ईषद्दु . सु ष्विति० भावे० कर्मणिवा० अक र्त्त्रार्थेखल ॥ अल्पसाधनैरधिका रम्भोनसुकर ' ॥

सुकरा । स्त्री० सुशीलायाङ्गवि । अच ण्डायाम् ॥ सुसुखङ्करोति । अ च ॥ सुक्रियतेवा । ईषद्दुस्सुष्वि तिखल ॥

सुकर्ण । पुं० हस्तिकर्णे ॥ त्रि० शोभनकर्णवति ॥

सुकर्णक ः । पुं० हस्तिकन्दे ॥ वि०

सुन्दरकार्यवति ॥

सुकर्णिका । स्त्री॰ मूषीकर्ण्याम् ॥

सुकर्णी । स्त्री॰ इन्द्रवारुण्याम् ॥

सुकर्मा । पु॰ विष्कम्भाद्यन्तर्गतयोगविशेषे ॥ तज्जातफलं यथा । परोपकारीकुशलः कलासुवर्णयुक्तो नितरां यशस्वी । प्रसूतिकालेयदिचेत् सुकर्मानर सुकर्माभवतिप्रसिद्धः । देवानांशिल्पिनि । विश्वकर्मणि ॥ त्रि॰ सत्क्रिये । शोभनकर्मकारिणि ॥

सुकल । त्रि॰ दाताभोक्तरिमानवे । यएकपःददाति॰ भुङ्क्तेचतथ । दाताभोक्ता॰ इ॰ भा॰ प्र॰ ॥ सुकल्पते । कलशब्दसङ्ख्यानयो । ईषद्धसुच्छतिष्ठल् ॥ शोभनाकलायस्येतिवा ॥

सुकल्प । त्रि॰ अतिनिपुणे ॥

सुकाण्ड । पुं॰ कारवेल्ले ॥ त्रि॰ शोभनकाण्डवति॰ वृक्षादौ ॥

सुकाण्डी । स्त्री॰ काण्डीरे । काण्डवेलद्वेति॰ गौ॰ भा॰ प्र॰ लतायाम् ।

सुकाण्डी । पु॰ भ्रमरे ॥

सुकामा । स्त्री॰ त्रायमाणायाम । बलिति॰ बहुलेतिच॰गौ॰भा॰प्र॰ ।

सुकाली । प॰ वशिष्ठात्मजेषु॰ शूद्राणांपितृषु ॥

सुकालुका । स्त्री॰ डोडीक्षुपे ॥ इ॰ रा॰ ट ॥

सुकाष्ठकम् । न॰ देवकाष्ठे ॥

सुकाष्ठा । ) स्त्री॰ कटव्याम् ॥ काष्ठकदल्याम् ॥ इ॰ रा॰ ट ।
सुकाष्ठिका । )

सुकुन्दन । पु॰ बर्बरे ॥

सुकुमार । पु॰ पुण्ड्रेक्षौ । वनचम्पके ॥ चवे ॥ श्यामाके । त्रि॰ कोमले । मृदौ ॥ सुष्ठुकुमारयति । कुमारक्रीडायाम् । चुराद्यदन्त । पुंभौतिच : । एरच्वी ॥ यद्वा । सुकाम्यते । कामि . विदुर्योपधाया इत्यारन् ॥

सुकुमारक । पुं॰ शाली ॥ सुन्दरबालके ॥ न॰ तमालपत्रे ॥

सुकुमारतर । त्रि॰ अतिपेलवे ॥

सुकुमारतरा । स्त्री॰ अतिपेलवायाम् । प्रकृतौ ॥ यथोक्त । प्रकृतेः सुकुमारतरं नकिञ्चिदस्तीतिमेमतिर्भवति । याद्दष्टास्मीतिपुनर्नदर्शनमुपैतिपुरुषस्येति ॥

सुकुमारा । स्त्री॰ कदल्याम् ॥ मालत्याम् ॥ नवमालिकायाम् ॥ लाक्ष्याम् ॥ पृक्कायाम् ॥ चित्तभिपुष्पे ॥

सुकुमारी । स्त्री॰ नवमालिकायाम् ॥

सुकृत् । त्रि॰ पुण्याढ्ये ॥ धार्मिके ॥ सुष्ठुकृतवान् । डुकृञ् • । सुकर्मपापेतिकृञ क्विप् । तुक् ।

सुकृतम् । न० शुभे । स्वर्गादिप्रापके । पुण्ये ॥ त्रि० सुविहिते । सुविधाने ॥ सुष्ठु कृतम् । प्रादिसमास ॥ सुष्ठु क्रियतस्मतिवा । क्त ॥

सुकृति । स्त्री० सत्कर्म्मणि ॥ शोभनाकृति ॥

सुकृती । त्रि० पुण्यवति । धन्ये ॥ सुकृतमस्यास्ति । यतद्भूनि ॥

सुकेतुसुता । स्त्री० ताडकायाम् ॥

सुकेशर । पु० बीजपूरे ॥

सुकेशी । स्त्री० अप्सरोविशेषे ॥ त्रि० शोभनकेशयुक्ते ॥

सुकोमल । त्रि० अतिमृदुले ॥ अतिमनोज्ञे ॥

सुकोमला । स्त्री० सिन्दूरीतिप्रसिद्धे पुष्पे ॥

सुकोली । स्त्री० क्षीरकाकोल्याम् ॥

सुकोश
सुकोशक ) पुं० कोषाम्रे । क्षुद्राम्रे ॥

सुखसुप्त । पुं० खट्वाङ्गे ॥ इति० हि० चन्द्र ॥

सुखम् । न० आत्मवृत्तिगुणविशेषे ॥ मुदि । प्रीतौ ॥ हर्षे । प्रमोदे । आनन्दे । शर्म्मणि । सर्व्वेषामनुकूलवेदनीये ॥ स्वर्गे । नाके । त्रिदिवे ॥ वृद्धिनामौषधे ॥ जले ॥ न्यायमते० धर्म्मजन्ये जगत उपकार्य्ये ॥ यथ सुखन्तु जगतामेवकाम्य धर्म्मजन्यते । अधर्म्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ तच्छ्रमनीगोचरस्य यथा । मनोग्राह्यं सुखं दुःखमिच्छाद्वेषोमति कृतिरितिभा० प० द० । सुखं चतुर्विंशतिगुणान्तर्गतगुणविशेषः । तत्तु नित्यं जन्यञ्च । नित्यं परमात्मनो विशेषगुणान्तर्गतं । जन्यसुखं जीवात्मनो विशेषगुणान्तर्गतं । तच्च शुभादृष्टजन्यम् ० धनमित्रलाभारोग्यमिष्टान्नपानपुरीषोत्सर्गपुत्रादिजन्मतत्पाण्डित्यकान्तासम्भोगादिजन्यञ्च । तत्र हितकारणाश्रयित्वं स्वीयेतरोत्पन्नानुभवनाश्रयत्वात् । सुखाद्युपरागेणैवात्मनो मानसबोध । सुखं तदुपायश्चेष्ट । बालस्य स्तन्यपानप्रवृत्तौ सुखसाधनत्वज्ञान हेतु तत्र सुखस्यैवेष्टत्वम् । दुःखजनकागमनादिप्रवृत्तौ सुखोपायोधन तदेवेष्ट ० तत्साधनत्वज्ञानमेव हेतु । यागादिप्रवृत्तावपि पारलौकिकसुखसाधनत्वज्ञानञ्च कारणम् ० सुखोपायस्वर्गादिरूपेष्टसाधनत्वज्ञानमधिकारणम् । सुखस्य कालावच्छेदत्वं शरीरावच्छेदत्वं च अतोऽव्याप्यवृत्तित्वम् ० शरीरैकदेशावच्छेदेन तु खसम्भवेप्यन्यदेशावच्छेदेन सुखसम्भवात् ० एकदा यावच्छेदेन जीवस्य दुःखसम्भवेपि०

त्वर्यांतरावच्छेदेनसुखसत्त्वाच्च॰ तत्तुविस्फोटकवतोमिष्टान्नभोजना द्दौद्रष्टव्यमितितात्विकाः ॥ *॥ सुख रूपेब्रह्मणि ॥ आत्मानन्दलक्षणआन दे ॥ सर्वतोनिवृत्तिकेनचित्तेनलय विक्षेपविलक्षणे । चित्तेवृत्तिसत्त्वा त्॰लयेचमनसोऽपिस्वरूपेणाऽसत्त्वा त्॰सर्ववृत्तिशून्येनसूक्ष्मेणमनसो सुख नुभवेसमाधौ ॥ धर्मसाधार णकारणकेऽनुकूलवेदनीये । नित्य पायौक्ताविषयीभूतधर्मसाधारण का रणिकायांश्चित्तवृत्तौ । परमा त्मसुखव्यञ्जिकायाम् । मोक्षानन्दे ॥ भोजनानन्तराह्लादे ॥ तृप्तौ ॥ त च्चसात्त्विकादिभेदात्त्रिविधम् । यथा । अभ्यासाद्रमतेयत्रदु खा न्तञ्चनिगच्छति एतद्विज्ञेयोस्ति । यत्तदग्र विषमिवपरिणामेऽमृतोप मम् । तत्सुख सात्त्विकंप्रोक्ता मात्मबुद्धिप्रसादजम् ॥ विषयेन्द्रि यस योगाद्यत्तदग्रेऽमृतोपमम् ॥ परिणामेविषमिवतत्सुख राजस स्मृतम् ॥ यदग्रेचानुबन्धेचसुख मोहनमात्मन । निद्रालस्यप्रमा दोत्य तत्त मससुद हृतम् ॥ आ त्मगुणे ॥ आत्मतत्त्वरूपे ॥ शो भनानिपरिपुष्टानि॰ खानीन्द्रिया ण्यनेनतत् ॥ यद्वा । सुखयति । सुखदु खतत्क्रियायाम् । चुरा

दि । पचादाच् ॥ त्रि॰ धर्मभेदेन॰ सुखविशिष्टे ॥ यथा । त्रिषुद्रव्ये पापपुण्यसुखादिचेत्यमर । पापपु ण्यशब्दौसुखादयश्चसान्ताःगुणेष शीतलिङ्गा उपचारात्तद्वतिद्रव्ये वि शेष्यं वर्तमानावाच्यलिङ्गा । यथा । पापोऽस्तुमतौकन्यापापि राजाप्यर त्ना । पापव्याघ्रकुलहिंस्रपापीविप्रघ्न सेवक ॥ पुण्यतीर्थनदीपुण्याआश्र म पुण्यएवच सुखाभूति सुखी वास ः सुख कामीकुल मतम् ॥ सुखसंध्ये ॥ चक्रोंशे ॥ सुखहे तौ ॥ सुखदु खसाधनानामस्थि रत्वसुखस्यमनोविलासमात्ररूपत्व चोक्त विष्णुपुराणे । यथा । वस्त्वे कमेवदु खायसुखायेर्ष्योद्भवायच । कोपायचयतस्तस्माद्वस्तु स्त्व त्मकं कुत ॥ तदेवप्रीतयेभूत्वापुनर्दु खायजायते । तदेवकोपायतत प्र सादायचजायते ॥ तस्माद्दुखात्म क नास्तिनचकिञ्चित सुख त्मकम् । मनस परिणामोय सुखदु खोपलक्षणइति २ अंशे ६ ऽध्याय ॥ सर्वकामविहीनेऽत सुखसर्वत्र वस्थितमित्युक्तञ्च ॥ दु॰ खविद सुखप्राप्तानवद्न्तिसुखंबोतिदेवी भागवतम् ॥ सर्वपरवश दु खंस र्वम त्मवश सुखम् । एतद्विद्यात् समासेनलक्षण सुखदु खयो ॥

सुखकर । त्रि॰ सुकरे ॥

सुखङ्करी स्त्री॰ लताविशेषे । जीव न्याम् ॥ सुखकर्थम् ।

सुखङ्घुण । पु॰ खिवखट्टाङ्गे ॥ कु॰ त्रि॰ शेष. ॥

सुखचर. । त्रि॰ सुखगामिनि ॥

सुखचार । पुं॰ उत्कृष्टाश्वे ॥

सुखजात । त्रि॰ जातसुखे ॥

सुखद । पुं॰ परमात्मनि । विष्णौ ॥ सद्वृत्तानां सुखमीखलत्वाद्ददाति । ऊ द ऋ॰ । असद्वृत्तानां सुख द्यति॰ खण्डयतीत्य । दा॰ । आत ऋ॑तक । त्रि॰ सुखप्रदे । न॰ विष्णो स्थाने ॥

सुखदा । स्त्री॰ गङ्गायाम् ॥ सद्यःपातकसंहन्त्री सद्योदुःखविनाशिनी । सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः ॥ ब्रह्मवैवर्त्ते ॥ सु खदल्याम ० स्वर्वेश्यायाम् ॥

सुखदोह्या । स्त्री॰ सुखमन्दोह्याया गवि ॥ सुखेनदुह्यते । दुह॰ । खल्लीयत् ॥

सुखमेदा । स्त्री॰ शल्लकीवृक्षे ॥

सुखरात्रि । सुखरात्रिका । स्त्री॰ दीपान्विताम वास्यारात्रौ ॥ यथा । तुलाराशिगते भानावमावास्यानराधिप । स्नात्वा देवान् पितॄन् भक्त्या सम्पूज्याथ प्रणम्य च ॥ कृत्वातु पार्वणश्राद्धं दधिक्षीरगुडादिभि । ततोऽपराह्णसमये घोषयेन्नगरेन्नृप ॥ लक्ष्मी सम्पूज्यताल्लोका उल्काभिश्चाभिवेष्टताम् ॥ * ॥ दर्शे हि प्रदोषव्यापिन्यामाय । तुलास्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्का हस्तामराः कुर्युः पितॄणां मार्गदर्शनम् । उभयत प्रदोषप्राप्तौ पर दिनएव । दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि । तदा विहाय पूर्वेद्युः परेऽह्णि सुखरात्रिका । उभयत्रप्रदोषव्याप्तौ परेऽपि॰ उल्कादान परदिने॰ पूर्वोक्तपार्वणानुरोधात् । भूतहैमप्रकुर्वन्ति उल्काग्रहमचेतस । निराशाः पितरोयान्ति शापन्दत्वासुदारुणम् ॥ अत्रैव लक्ष्मीपूजाहेरात्रौ पूज्या । अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी । पूजनीया तदा लक्ष्मीर्विज्ञेयासुखरात्रिका ॥ उल्काग्रहणादिपत्रकृत्यत्वात् प्राचीनावीतिनादक्षिणामुखेन कर्त्तव्यम् ॥ तथाचमनु । प्राचीनावीतिनासम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिनेति ॥ उल्काग्रहणमन्त्रोयथा । शस्त्राश्रस्त्रहतानाञ्चभूतानां भूतदर्शयो । उज्ज्वलज्ज्योतिषा देहन्दहेयं व्योमवह्निनेति । दानमन्त्रयथा । अग्निदग्धाश्चयेजीवा

शैप्यदग्धा कुमिमम । उज्ज्वल ज्योतिषादग्धाक्तोयान्तुरमाकृति मिति । विसर्ज्जनमन्नोयथा । यम लोकपरित्यज्यचागतायैमहालये । उज्ज्वलज्योतिषाबत्सेप्रपश्यन्तोम्न जन्तुते ॥ इति ॥

सुखलुब्ध । पु॰ देहिनि ॥ यथा । मासलुब्धोयथ मत्स्योलोहशङ्कुनप श्यति । सुखलुब्धस्तथादेहीयमबा धानपश्यतीतिकुलार्णवतन्त्रम ॥

सुखवर्चक । पु॰ सज्जिकाचारे । सुख वर्चयति । वर्च्चदीप्तौ । ऋुन् ॥

सुखवर्चा । पु॰ सज्जिकाचारे ॥ सुखेनवर्चोयेन ॥

सुखवास । पु॰ तरमु॰ इ॰ प्र॰ फ लविशेषे ॥

सुखवासन । पु॰ मुखवासनगन्ध द्रव्ये । यथा । मुखवासकरोगन्ध श्च मेदोमुखवासन । सुखवास नद्रव्येशुभवासनद्रव्यपीतमब्द रत्नावली ॥

सुखसंवित्ति । स्त्री॰ सुखानुभवे ।

सुखसन्दोह्या स्त्री॰ सहन्याम् । सु व्रतायाम सुखेनसन्दुह्यते । दु ह॰ । कर्मणियत् ।

सुखा । स्त्री॰ प्रचेतस पुर्याम् ॥ अभेदेनसुखरूप्याम् । शोभनेन्द्रि यायाम ॥

सुखाधार । पु॰ स्वर्गे । त्रि॰ सुख स्याधारे ॥

सुखायत । पु॰ उत्कृष्टाश्वे । सु शिक्षितेश्वे ॥ यथा । सुखयत शुभमुख सुखचार: सुखायनइ तिशब्दमाला ॥

सुखायन । पु॰ उत्कृष्टघोटके ॥ सुखेनअयनगमनयेन ॥

सुखालुका । स्त्री॰ बहुफलल्याम् । जीवन्त्याम् ॥

सुखावती । स्त्री॰ बुद्धभक्तौ ॥

सुखावतीश्वर । पुं॰ बुद्धभेदे ॥

सुखावह । पु॰ भर्त्तरि ॥ त्रि॰ सुखदातरि ॥

सुखाश । पु॰ वरुणे । प्रचेतसि ॥ सुखभोजने ।। तरम्बुजि । अस्यप र्यायायथा । स्याच्चेलालफ्टिचफल सुखाशीराजतेमिष । ललापन सनाटाघौसिदुरितिचिक्काहडशेष ।

सुखासनम् । न॰ नरवाह्ययानविशे षे । खासा॰ इ॰ भा॰ प्र॰ ॥ सुखेनचासनयस्मिन् ॥

सुखित । त्रि॰ सुखरूपताङ्गते ।। सु खसञ्जातमस्य । इतच् ।।

सुखी । त्रि॰ सर्वथानीरोगे ।। निरा यासस्थिते ।। तृष्णये जिते ।। सु खमस्त्यस्य । सुखादिभ्यश्चेति॰ इ नि ।। दु । खमूलमिमसार समकोसतु खित । तस्यत्या ग कृतोयेनससुखीनापरः प्रिये ।

हरिश्रीकुलार्णवतन्त्रम् ॥ ब्रह्मादिस्तम्बपर्य्यन्तं मायया कल्पितं जगत् । सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेदिति महानिर्वाणतन्त्रम् । विदित्वा गुरोर्मुखादध्यात्मविद्यादिभिः ॥

सुखोत्सव । पुं॰ भर्त्तरि । पत्यौ ॥ सुखस्य उत्सवोऽस्मिन् ॥

सुखोदकम् । न॰ सुखोष्णे । सुखजनके जले ॥

सुखोत्कर्ष । पुं॰ सज्जिकाक्षारे ॥

सुखोष्णम् । न॰ सुखोदके ॥

सुग । पुं॰ गन्धर्वे ॥ सुष्ठु गायति । गै॰ क ॥ न॰ विष्ठायाम् ॥ त्रि॰ सुगमे ॥ सुखेन गच्छत्यत्र । उपकरणे॰ सुदुरोरधिकरणइति गमेर्डः ॥

सुगत । पुं॰ सर्वज्ञे । चार्वाकश्रुनात्मवादिनि । बुद्धे । शोभनं गतं ज्ञानमस्येति सुगतः ॥ सुष्ठु अपुनरावृत्त्ये गतइति वा ॥ सुखेन सत्साद्गतो वा ॥

सुगति । पुं॰ अतीतकल्पीयार्हद्भेदे ॥ स्त्री॰ शोभनगतौ ॥ पुण्यात्मनां शरीरान्ते प्राप्यस्थाने ॥ यथा । सुदृढं शीलसम्पन्नं प्रसन्नात्मात्मविद् बुधः । प्राप्येह लोके सम्मानं सुगतिं प्रेत्य गच्छतीति ॥

सुगन्ध । पुं॰ कर्पूरादिगन्धे ॥ यथा । कर्पूरोमृगनाभिश्च कस्तूरीजातिकातथा । गन्धसारश्च शैत्यं श्रीखण्डं पीतचन्दनम् ॥ कालीयकं रक्तकाष्ठं पतङ्गमगुरुद्वयम् । देवदारुश्च सरलं स्वगारं पद्मकं पुरं । सर्ज्जनिर्यासकौशाल कुन्दुरुश्च शिरस । सिह्लकञ्चलवङ्गञ्च जातीपत्रं फलन्तथा ॥ एलाद्वयं दारुचीनी स्वक्पत्रं नागकेशरम् । बालुकं शीरवा मांसीकुङ्कुमं रोचनानखम् ॥ सुगन्धवीरवाल जटामांसी सुराचन । शटीकर्चूरएकाङ्गी सुगन्धौषधमतं ॥ रक्तशिग्रौ ॥ चणके ॥ गन्धके ॥ भूतृणे ॥ न॰ मुद्गजीरके । गन्धतृणे ॥ श्वेतचन्दने ॥ नीलोत्पले ॥ ग्रन्थिपर्णे ॥ कृष्णजीरके । कतृणे ॥ पुं॰ तीक्ष्णगन्धे । रक्ततुलसाम् ॥ त्रि॰ समवायातिरिक्तसम्बन्धेन सद्गन्धविशिष्टे ॥

सुगन्धक । पुं॰ गन्धके ॥ रक्ततुलस्याम् ॥ ककोंडा॰ इ॰ भा॰ प्र॰ शाखायां ॥ तत्पर्यायायथा । कर्कोटक किलासघ्नस्तिक्तपत्र सुगन्धक स्तद्रमचन्द्र । काकरोलङ्॰ गौ॰ दे॰ भा॰ ॥ शालीविशेषे । सुगन्धतैलनिर्यासम् । न॰ गन्धद्रव्यविशेषे । जवादिनि । स्नगमदे । कृमिसे ॥

सुगन्धपत्रा । ) सुगन्धपत्रिका । ) स्त्री॰ रुद्रजटा

याम् ॥

सुगन्धभूतृणम् । न० गन्धतृणे ॥

सुगन्धमूला । स्त्री० रास्नायाम् ॥ स्थलपद्मिन्याम् सुगन्धीमूलेव स्या. ॥

सुगन्धा । स्त्री० रास्नायाम् ॥ शोभनो गन्ध । कुगतोतिसमासः । सुगन्धोऽस्त्यस्या । अर्श आद्यच ॥ अग्न्याम् ॥ गङ्गापत्र्याम् । वन्ध्याककर्कोट्याम् । नाकुलीकन्दाम तुलस्याम् ॥ मधुकर्कटिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ वनमल्ले ॥ सलाक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्ध मलकम् । न० सर्वौषधिभिः शुष्क मलकत्वग्योगे । यथा । सर्वौषधसमायुक्ता शुष्कास्त्वामलकत्वच । महातद्योगेः स्यात् सुगन्धामलकाभिध ॥ इतिराजनिर्घण्ट ॥

सुगन्धि । पुं० शोभनगन्धे । सुरभौ । प्राणतर्पणे । इष्टगन्धे ॥ तुम्बुरुवृक्षे । तीक्ष्णगन्धे ॥ परमात्मनि ॥ इतिमोक्षधर्मटीकायांनीलकण्ठ ॥ सहकारे । न० एलवालुनि । ऐलेये ॥ कुस्तुम्बुरी ॥ धान्याके ॥ मुस्तके ॥ कशेरुणि ॥ गन्धतृणे ॥ पिप्पलीमूले ॥ त्रि० सुगन्धयुक्ते । शोभनोगन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यइतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियते क्वचित्तदाश्रयः । यथा । शाड्गूर्थतकटभुण्डकरिणोमदेनसन्नन्न । सुगन्धिमनुलोमवतानगन्धेति माघे० सुगन्धिशोभनगन्धमित्यर्थात् ॥

सुगन्धिका । पुं० सिह्लके । तुरुष्के महाशाल्लौ ॥ गन्धके ॥ न० कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वास्तुके । पत्रशाकविशेषे ॥ सुवर्णे ॥ उशीरे ॥

सुगन्धिकुसुम । न० सुगन्धिपुष्पे । पुं० पीतकरवीरे ॥ शोभनगन्धवन्तिपुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री० पृक्कायाम ॥

सुगन्धिता । स्त्री० सौरभ्ये ॥ शोभनोगन्धोयस्य० तस्यभावः । तल् । टाप् ॥

सुगन्धितैलम् । न० । सुगन्धिजले । तैलकादिपानीये ॥

सुगन्धिफला । स्त्री० जातीफले न० पूगफलेनचसयुक्तेलवङ्गकलिकाफले ॥

सुगन्धिनी । स्त्री० आरामशीतलायाम् ॥

सुगन्धिमूलम् । न० उशीरे ॥

सुगन्धिमूषिका । स्त्री० छुछुन्दर्याम् ॥

सुगम: । त्रि० सुखेनगमनीयेस्थानादौ ॥ सुखेनगम्यतेप्राप्यते । गम्लृ० । ईषद्दुःखेतिखल् । यथासुगम:पन्था: ॥

सुगरम् । न० रसके । हिङ्गुले ॥

सुगहन: । त्रि० निविडे ॥

सुगहनावृत्ति । स्त्री० कुम्बायाम् । यज्ञस्थाने० यस्याद्विज्ञानशारणायनिबिडवेष्टने ॥ सुगहनावृत्ति: ।

सुगृह । पु० चञ्चुसूचीखगे । प्रीतसुगृहे । यथा० कु० भो० प्र० ॥ न० शोभनालये ॥ त्रि० शोभनगृहवति ॥

सुगृहीत । त्रि० सुन्दररूपेणज्ञातद्रव्ये ॥

सुगृहीतनामा । पुं० शुभकाम्ययाग्रात स्मर्त्तव्ये युधिष्ठिरादौ ॥

सुग्रन्थि । पु० ग्रन्थपर्णभेदे । चोरके ॥ शोभना ग्रन्थयोयस्मिन ॥

सुग्रीव । पुं० कपिपुङ्गवे । सूर्यपुत्रे । किष्किन्धाधिपे । श्रीरामभित्रे ॥ विष्णोरश्वभेदे ॥ देवीभ्रातिशुम्भनिशुम्भाभ्यांप्रेषितेदूतविशेषे ॥ इन्द्रे ॥ पितरि । शोभनाग्रीवायस्य ॥ शिवे ॥ कुन्दे ॥ राजहंसे ॥ असुरविशेषे ॥ पर्वतविशेषे ॥ अस्त्रविशेषे ॥ नागभेदे ॥ त्रि० शोभनग्रीवायुक्ते ॥

सुग्रीवी । स्त्री० काश्यपपत्नीविशेषे ॥

सुग्रीवेश: । पुं० श्रीरामचन्द्रे ॥

सुघोष । पुं० विष्णौ । नारायणे ॥ शोभनोघोष: शब्दोवेदात्मकोयस्य ॥ नकुलस्याख्यशङ्ख: ॥ शङ्खविशेषे ॥

सुचक्षु । पुं० उदुम्बरे ॥ न० शोभनेनेत्रे ॥ वेदान्तजन्यज्ञाने ॥ यथा । एवंविधत्वासकलशास्त्रार्थविद्यात्मानमात्मनात्मतयापश्यति । सुवर्णंकण्ठोपनिषत् सुचक्षुर्धीरेतरशोभनज्ञानतामुधिम् ॥ त्रि० उत्कृष्टाक्षे ॥ आत्मविदि ॥ शोभनेचक्षुषीयस्य ॥ सुष्ठुशोभनचक्षुषिस्ति ॥

सुचक्षु । पु० महाचक्षुषाद्वि ॥

सुचतुर । त्रि० शोभनानिचत्वारियस्य० तस्मिन् ॥ अचतुरविचतुरेत्यादिनासाधु: ॥

सुचरित्र । त्रि० सुशीले ॥ शोभनचरित्रमस्य ॥

सुचरित्रा । स्त्री० साध्व्याम् ॥ शोभनचरित्रमस्या ॥

सुचर्मा । पुं० भूर्जवृक्षे त्रि० सुचर्मवति ॥ शोभनचर्मास्य ॥

सुचारु । त्रि० मनोहरे ॥

सुचित्रम् । न० शोभनचित्रे ॥

सुचित्रक । पु० मत्स्यरङ्गविहङ्गमे ॥ चित्रसर्पे । मातुलाहौ ॥ त्रि० सुन्दरचित्रयुक्ते ॥

सुचित्रबीजा । स्त्री० विडङ्गे ॥

सुचिका । स्त्री० चिभिंटायाम् ॥

सुचिरायु । पु० सुरे । देवे ॥ मार्कण्डेयादौ ॥ शोभन चिरायुर्यस्य ॥

सुचुक्रिका । स्त्री० तिन्तिडायाम् ॥

सुचुटी । स्त्री० सन्दंशिकायाम् ॥ इतिसन्दंशिकाशब्दार्थेमेदिनिकार ॥

सुचेलम । न० शोभनवस्त्रे ॥ शोभनं चेलम् ॥ त्रि० शोभनवस्त्रवति ॥

सुचेलक । पु० तद्वस्त्रे । पटे ॥ सुचेलमेव । स्वार्थे कन् ॥ त्रि० तद्वति ॥

सुच्छत्री । स्त्री० शतद्रुसरिति ॥ इ० श०र०स्त्री० ॥

सुजन । पुं० कृपालौ ॥ सदाचारे । साधौ । सज्जने ॥ यथा । दुर्जनस्यचिसङ्गेनसुजनोपिविनश्यति । प्रसन्नजलमित्याहुः कर्द्दमे कलुषीकृतम् ॥

सुजनता । स्त्री० सौजन्ये ॥

सुजलम् । न० कमले ॥ शोभनेसलिले । त्रि० शोभनजलयुक्ते ॥

सुजल्प । पु० वाक्यविशेषे ॥ यथा । यत्रार्जवात् सगाम्भीर्यं सदैन्यसहचापलम् । सो त्कण्ठञ्चहरिस्पृष्ट स सुजल्पो निगद्यते ॥ इत्युज्ज्वलनीलमणि ॥

सुजात । त्रि० सुन्दरे

सुजाता । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ तुवर्याम् ॥

सुजिह्व । पु० हव्यवाहने ॥

सुजीवन्ती । स्त्री० स्वर्णजीवन्त्याम् ॥

सुज्ञ । त्रि० विज्ञे ॥ सुष्ठुशोभनं जानाति । ज्ञावबोधने । आतश्चोपसर्गे इतिक ॥

सुज्ञेय । त्रि० सुखविज्ञेये ॥ सुखेनज्ञातुं योग्य । ज्ञा० । यचोयत् । ईद्यति ॥

सुज्योतम् । न० परिमल सुकुमारपारे ॥

सुत । पुं० आत्मजे । तनये । पुत्रे ॥ मातृपितृस्वभावस्तुस्वभावैस्सुतस्यैभवत । यथोक्तंवह्निपुराणे । शील सम्भजतेपुत्रोमातुस्तातस्यगोसुता । यथाशीलाभवेन्माताततथाशीलोभवेत्सुत । । यद्वर्णाभवेद्भूमिस्तद्वर्णंसलिलंभवेत् । मातृणांशीलदोषेणपितृणांशगुणेनच । विभिन्नास्सुप्रजा सर्वा० भवन्तिभवशीलिनामिति । सूयतेस्म० सौति वा । षुञ्‌ अभिषवे० षुप्रसवैश्वर्ययोर्वा । क्त । क्तो । पार्थिवे ।

सुतजीवक । पु० पुत्रजीवे ।

सुतनु । स्त्री० नार्य्याम् । त्रि० सुकृशे ॥ स्वङ्गे ॥

सुतपादिका । स्त्री० हंसपद्याम् । गोधापद्याम् ॥

सुतपा । पुं० सूर्ये ॥ मुनिविशेषे

॥ सुनी ॥ नरनारायणरूपिभगवति बदरिकाश्रमेसुशोभनंमननस्येन्द्रियाणांयेनतादृशंतपोऽस्येतिसुतपानरनारायण ॥

सुतराम् । अ॰ अत्यन्ते । अतिशये ॥ अवधारितार्थप्रतिपादके ॥ यथा । मृगाद्दिजमदाघुर्वेदुमानापि सृतोहरि । ददातिमोचंसुतरा किम्पुनर्दैवमवर्ज्जनार्द्दनं ॥ द्विवचनविभज्येत्यादिना॰सुशब्दात्तरप् । किमेत्तिङव्ययेत्यादिनाम्प्रत्यय । तद्धितश्चासर्वविभक्तिरित्यव्ययसज्ञा ॥

सुतर्कारी । स्त्री॰ देवदालीलतायाम् ॥

सुतर्द्दन । पु॰ तामाघे । कोकिले ॥

सुतल । पु॰ अट्टालिकाबन्धे ॥ नागलोकप्रभेदे ॥

सुतःस्करा । स्त्री॰ सप्तपुत्रप्रसवाम ॥

सुतश्रेणी । स्त्री॰ मूषिकपर्ण्याम् ॥ सुतानाम्श्रेणिरत्रा ॥ पुत्रवृन्दे ॥

सुता । स्त्री॰ स्वपत्ये । कन्यायाम् ॥ दुरालभायां ॥

सुतात्मज । पुं॰ पौत्रे ॥ दौहित्रे ॥ सुतस्यसुतायावात्मज ॥

सुतात्मजा । स्त्री॰ पौत्र्याम् ॥ दौहित्र्याम् ॥ सुतस्यसुतायावात्मजा ॥

सुतारम् । न॰ द्वितीयायामृग्व्दाख्यायाम्सिद्धौ ॥

सुतारका । स्त्री॰ बुद्धधर्मासक्तदेवीविशेषे ॥

सुतिक्त । पु॰ भूनिम्बे । किराततिक्ते ॥ पर्पटे । पित्तपापडा॰ हू॰ भा॰ प्र॰ ॥

सुतिक्तक । पु॰ पारिभद्रे । भूनिम्बे ॥

सुतिक्ता । स्त्री॰ कोशातक्याम् । भूदुम्बफलिकायाम् ॥

सुतिक्तिका । स्त्री॰ कोशातक्याम् ॥

सुती । त्रि॰ पुत्रवति ॥

सुतीक्ष्ण । पु॰ शिग्रौ ॥ श्वेतशोभाञ्जने ॥ रामायणप्रसिद्धमुनिविशेषे । नाम्नासुतीक्ष्णश्चरितेनदान्त ॥ त्रि॰ अतिशयेनखरे ॥

सुतीर्थकम् । न॰ । तीर्थविशेषे ॥

सुतुङ्ग । पु॰ नारिकेलागमे ॥ ग्रहाणामुच्चांशविशेषे । अत्यन्ततुङ्गे ॥ त्रि॰ अतिशयोच्चे ॥

सुतुण्ड । पुं॰ कुन्दरे । उखर्वले । मृगवत्सभेदणविशेषे ॥

सुतेजन । पुं॰ धन्वङ्गे । धन्वनवृक्षे ॥

सुतेजा । पु॰ सुतेजस्त्वगुणविशिष्टेद्युशीले ॥ स्वर्गे ॥ प्राकल्पार्कविशेषे स्त्री॰ आदित्यभक्तायाम् ॥ त्रि॰ तेजसान्विते ॥

सुतेला । स्त्री॰ महाज्योतिष्मत्याम् ।

सुत्या । स्त्री० अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्० सूयते सोमोऽस्मिन्० अस्यां वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पु० गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते० पालयति । त्रैङ् पालने । आतो मनिन्० सर्वधातुभ्यो मनिन् वा ॥

सुत्वा । पु० अभिषवस्नाने । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्० । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री० मातरि ॥ ङ्वनिबन्तात्० वनोरचेति ङीप् ॥

सुदग्धा । स्त्री० दग्धाख्यतृणे । सुदग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदग्धिका । स्त्री० कुरुह० इ० गौ० दे० भा० प्र० दृष्टे । दग्धरुहायाम् । भस्मरोहायाम् ॥

सुदण्ड । पु० वेत्रे ॥

सुदण्डिका । स्त्री० गोरक्ष्याम् ॥

सुदन् । त्रि० शोभनदन्तविशिष्टे ॥ शोभना दन्ता यस्य । वयसि दन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री० तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शन । पुं० । हरिचक्रे ॥ चक्रलक्षणं यथा । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रं स्यात्तद्विधावर्त्तं च खड्गशीर्षे स्मृतमिति । जिनानां बलदेवे ॥ इक्ष्वाकुपितरि ॥ शोभनं दर्शनमस्य । भक्तैः सुखेन दृश्यते वा । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनाकारत्वात् ॥ मेरौ ॥ वशी ॥ राजभेदे ॥ न० शक्रनगरे ॥ अनुगमने ॥ त्रि० सुदृश्ये ॥

सुदर्शनचूर्णम् । न० भावप्रकाशोक्ते ज्वररोगस्यौषधविशेषे ॥

सुदर्शनद्वीप । पुं० न० जम्बुद्वीपे ॥

सुदर्शना । स्त्री० आज्ञायाम् ॥ औषधिप्रभेदे । सोमवल्ल्याम् । इक्षुपर्ण्याम् । सुदर्शनगुलञ्च० पञ्चगुलञ्च० इ० गौ० दे० भा० प्र० ॥ सुदर्शना स्वादुरुष्णा कफशोफास्रवातजित् ॥ मेरुजम्ब्वाम् ॥ सुरोविशेषे ॥

सुदर्शनी । स्त्री० अमरावत्याम् ॥

सुदल । पुं० क्षीरमोरटे ॥

सुदला । स्त्री० तरुण्याम् । गम्भार्याम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदान्त । पुं० शाक्यमुनिशिष्यविशेषे । त्रि० तपःसहे ॥

सुदामा । पुं० वारिधरे । मेघे ॥ पर्वतविशेषे ॥ गोपविशेषे समुद्रे ॥ श्वेतद्वीपे । ऐरावते ॥ श्रीकृष्ण

मिर्वत्राह्मणविशेषे। त्रि॰ सुदात रि ॥ सुष्ठुददाति । डुदाञ्॰ । आतोमनिन् ॥

सुदामा । स्त्री॰ नदीविशेषे। टाप् ॥

सुदाय । पु॰ हरणे । अत्यादान काले॰ व्रतभिक्षादौवदीयमानद्र व्ये। सुष्ठुदीयते । डुदाञ॰ । घ ञ् । युगागम ॥

सुदारु । पु॰ पारिपात्रकेपर्वते ॥ सुदारुःपारिपात्रकइतिहेमचन्द्रः ॥ न॰ शोभनदारुणि ॥

सुदि । अ॰ शुक्लपक्षे ॥

सुदिनम । न॰ शुभदिवसे ॥ त्रि॰ प्रशस्ते ॥ यथा । सुदिनासुसभा सुकार्यमेतत्प्रविचिन्त्येतविशेषत । स्त्वयमितिप्रयोग ॥

सुदीर्घ । त्रि॰ अतिविस्तारे ॥

सुदीर्घघर्मा । स्त्री॰ चसनपर्य्याम् ॥

सुदीर्घफलिका । स्त्री॰ वार्त्ताकुविशे षे । सिह्नावेंगन॰ इतिगौ॰ दे॰ भा॰ प्र॰ ॥

सुदीर्घा । स्त्री॰ चीनाकर्कट्याम् ।

सुदुर्दर्श । त्रि॰ अत्यन्तद्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥

सुदुर्लभ । त्रि॰ अतिदुष्प्राप्ये । दु खेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्तेज्ञानवान्माम्प्र पद्यते । वासुदेव . सर्वमितिसम हात्मासुदुर्लभइति ॥ सुखतिमा य दुर्लभः ॥

सुदुश्चर । त्रि॰ अतिशयदु खेना चरणीये ॥

सुदुष्कर । त्रि॰ सर्वथाकर्त्तुमशक्ये ॥ अत्यन्तक्लेशकरे ॥

सुदुस्तर । त्रि॰ अतिदु खेनतर णीये ॥

सुदूर । त्रि॰ दवीयसि । दविष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्त व्य यत्रमाहेश्वरोजन ॥

सुदूरपराहत । त्रि॰ अतिदूरनिरा कृते ॥

सुदृढम् । न॰ अतिदृढे । गाढे ॥ त्रि॰ तद्वति ॥

सुदृढत्वक् । स्त्री॰ काश्मर्याम् ॥

सुदृक् । त्रि॰ शोभननेत्रयुक्ते ॥

सुदृश्य । त्रि॰ सुन्दराकृतौ ॥

सुदेवी । स्त्री॰ नाभेर्भार्यायाम् । मेरु जव्याम् ॥

सुदेश । पु॰ मत्स्यदेशे । उत्तमदेशे ।

सुद्युम्न । पु॰ वैवस्वतमनो पुत्रे ॥ त्रि॰ बहुधने ॥ अतिबलशालिनि ॥

सुधन्वा । पु॰ विश्वकर्मणि । त्वष्ट रि । नृपविशेषे ॥ त्रि॰ धन्व नि । प्रौढधानुष्के ॥ शोभन ध नुर्यस्य । धनुषश्चेत्यनङ् ॥

सुधन्वाचार्य्य । पु॰ व्रात्याद्वैश्या त्सवर्णायांजाते॰ जातिविशेषे ।

कारुषे । यथा । इसनु । वेश्मानु
जायतेश्वास्थानसुधन्वाचार्यं एव च ।
कारुषश्चिवश्वनाचार्मेत सात्वत
एवचेति ॥

सुधर्म । पुं० जिनगणाधिपविशेषे ॥

सुधर्मा । त्रि० धर्मशालिनि ॥ कु
टुम्बिनि ॥

सुधर्मा । स्त्री० देवसभायाम् । शो
भनोधर्मोयस्याम् । धर्मादनिच् के
वलात् । डाबुभाभ्यामिति पक्षे
टाप् । अनोबहुव्रीहेरितिङीप्न ।
सुधर्म० सुधर्माद्यत्यादि । डाब
भावे । सुधर्माणौ० सुधर्माण इ
त्यादि ॥

सुधा । स्त्री० पीयूषे । अमृते ।
मद्ये । सुरायाम् ॥ सुखेनधी
यते । धेट पाने । आतश्चोपस
र्गे इतिकर्मण्यङ् । लेपने । स्नुह्या
म् । मूर्व्वाम् ॥ स्नुह्याम् ॥
गङ्गेष्टकायाम् ॥ गङ्गायाम् ॥
शालपर्ण्याम् ॥ विद्युति ॥ गु
डूच्याम ॥ जले ॥ तोये ॥
रसे ॥ धात्र्याम् ॥ आमलक्या
म् ॥ पुष्परसे । मधुनि ॥ ह
रीतक्याम् ॥ सुष्ठुदधातिपुष्णा
ति । डुधाञ् । क्विप् ॥

सुधांशु । पुं० इन्दौ । चन्द्रे ॥
सुधायुक्ताअशवोयस्य ॥

सुधांशुतैलम् । न० कर्पूरतैले ।

सुधांशुरत्नम् । न० मौक्तिके ॥ मु
क्तायाम् ॥

सुधाकर । पुं० चन्द्रे ।

सुधाकार । पुं० सौधमूर्द्धे । चू
ना० इ० भा० प्र० ॥ सुधाकारो
ऽल्पसद्रक्ष शालीक्तदीविहार
थ ॥

सुधाङ्ग । पुं० चन्द्रमसि ॥

सुधाजीवी । पुं० पलगण्डे । लेप
के । राज० इ० भा० ॥ सुधयाले
पनेनजीवति० तच्छील णिनि ॥

सुधाधार । पुं० चन्द्र । इन्दौ ।
अमृतपात्रे ॥ सुधाया आधार ॥

सुधानिधि । पुं० चन्द्रे ।

सुधाभुक् । पुं० गीर्वाणे । देवे ॥
सुधांभुङ्क्ते । भुज० । क्विप् ॥

सुधामय । पुं० सौधे । राजसदने
त्रि० अमृतात्मके ॥

सुधामोदक । पुं० यवासशर्करा
याम् ॥

सुधामोदकज । पुं० तवराजोऽस
खण्डे ॥

सुधावर्षी । पुं० विधातरि । विश्वस्र
जि । बुद्धभेदे ।

सुधावास । पुं० चन्द्रे ॥ न० त्रपु
षि ॥

सुधास्रवा । स्त्री० अपुपुष्प्याम् ॥

सुधासङ्गयोग । पुं० अमृतसिद्धियो
गे । यथा । हरावधवर्ज्जे०

जर्वं निजर्वं निजर्वंज्‌क्रमाद्‌० दा समारे। सुमेयम्‌। भवेद्‌न्ध धिप्राप्युधिर्षा० कथिष्य मनीषित देव सुधास सुयोग ॥

सुधासिन्धु । पु० अमृतार्णवे ॥

सुधासूति । पुं० चन्द्रे ॥ यथा । प्रदीप्तज्वालाभिर्दिवसकरनीराजनविधि.० सुधासूतेश्चन्द्रोपलजलकवैरर्घ्यघटना। स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं० त्वदीयाभिर्वाग्भिस्तवजननि वाचां स्तुतिरियमिति॥ मखे । यज्ञे ॥ पद्मे ॥

सुधास्रवा । स्त्री० अधोजिह्विकायाम्‌। गलशुण्डिकायाम्‌। घण्टिकायाम्‌ ॥ रुदन्तीवृक्षे ॥

सुधाहर ।) पु० गरुडे ॥ देवे ।
सुधाहृत्‌ ।)

सुधिति । पुं० स्त्री० स्वधितौ । पशौ ॥

सुधी । पु० विदुषि। सति। कोविदे। पण्डिते। न्यायगृहीतशास्त्रार्थावबोधे ॥ सुष्ठु ध्यायति। ध्यै०। ध्यायतेः, क्विप्‌ सम्प्रसारणम्‌ ॥ स्त्री० सुन्दरबुद्धौ ॥ सुष्ठु धी वि० शोभनबुद्धियुक्ते ॥

सुधूप । पु० सरलद्रवे ॥

सुधूम्य । पु० स्वादुनामगन्धद्रव्ये ॥

सुधोद्भव । पु० धन्वन्तरौ । द्विदासि ॥

सुधोद्भवा । स्त्री० हरीतक्याम्‌ ॥

सुनन्द । पु० श्रीकृष्णस्य पार्षदविशेषे॥ द्वादशविधराजगृहान्तर्गतगृहविशेषे ॥ सचदैर्घ्ये राज्ञ स्वहस्तमानेनैकपञ्चाशद्धस्त परिणाहे चत्वारिंशद्धस्तश्च ॥ यथा । यथावैवोच्यते मान तथातेनैव कल्पना । राज्ञः स्वहस्तमेवान्तु दीर्घे सर्वत्र निश्चित ॥ पञ्चाशीन सुनन्द . आद्यान्तहस्तैरपञ्चभि .। परिणाहे चतुर्भिश्च राजहस्तैः प्रतिष्ठित .॥ पद्माधिदेवताभौमी रक्ततोमा वसुन्धराम्‌ द्वाराणि वि यतिशा प्ररक्तापिलाहितानिच ॥ रक्तपट्टाश्वतोगेष्ट सकलार्थप्रसाधक । अवस्थित्वा मनीपास सुचिर पातिमेदिनीमितियुक्तिकल्पतरु ॥ दैर्घ्ये ५१ प्रस्थे ४० ॥ न० इलभृन्मुसले ॥

सुनन्दा । स्त्री० रोचनायाम्‌ ॥ उमायाम्‌ ॥ पद्मनायाम्‌ ॥ जनन्याम्‌ ॥ उमासखीभेदे ॥ अर्कपत्रीक्षुवे। स्थिरमूल० द्र० गो० दे० भा० प्र० ॥

सुनन्दिनी । स्त्री० मधुभाषिणीच्छन्दसि ॥

सुनयन पु० मृगे॥ वि० शोभननेत्रयुक्ते ॥ शोभनेनयनेयस्य ॥

सुनयना । स्त्री० नार्याम्‌ ॥

सुपथ्या । स्त्री० श्वेतचिल्लयाम् ॥

सुपद्म । पुं० व्याकरणविशेषे ॥ पु० न० शोभनारविन्दे ॥

सुपद्मा । स्त्री० वचायाम् ॥

सुपर्ण । पु० पन्नगाशने । गरुडे ॥ कनकसमत्वात् शोभनेपर्णे यस्य सः । स्वर्णचूडे । चाषे ॥ कृतमालके । राजवृक्षे ॥ सुष्ठुपर्णान्यस्य ॥ भगवतिवासुदेवे ॥ शोभनानिपर्णानिच्छन्दांसि संसारतरुरूपिणोस्य ॥ प्लक्षद्वीपस्थेऽद्रिविशेषे ॥ अश्वप्रभेदे । वेगवानल्पविग्रह सुपर्णइतिव्याख्यातारः ॥ सप्तपर्णे ॥

सुपर्णक । पु० आरग्वधे सप्तच्छदवृक्षे ॥ गरुडे ॥

सुपर्णकेतु । पु० विष्णौ ॥

सुपर्णा । स्त्री० कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णाख्य । पु० नागकेशरे । तीर्थविशेषे । यथा । उत्पलावतीसुपर्णाख्ये इति ॥

सुपर्णिका । स्त्री० स्वर्णजीवन्त्याम् ॥ पलाश्याम् ॥ वाकुच्याम् ॥ रेणुकायाम् ॥ शालपर्ण्याम् ॥

सुपर्णी । स्त्री० कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णीतनय । पु० गरुडे । तार्क्ष्ये

सुपर्व्वा । पुं० सुमनसि । देवे । सुरे ॥ सुष्ठुपर्व अमावास्यादिचरितम् अङ्गुल्यादिग्रन्थि उत्सवो वा यस्य ॥ शरे ॥ वंशे ॥ पर्व्वणि ॥ धूमे ॥

सुपर्व्वा । स्त्री० श्वेतदूर्व्वायाम् ॥

सुपर्व्वाङ्गना । स्त्री० देवललनायाम् । यथा । सुपर्व्वाङ्गनागानगम्भीरतानलवनत्स्वरश्रेणीविपञ्चीरवेण । क्वणत्किङ्किणीनादपूर्णं नतूर्णं सुविनाम्नसम्पूर्णघूर्णाकुलोऽहि ॥

सुपाकिनी । स्त्री० गन्धपत्रायाम् ॥

सुपाक्यम् । न० विडलवणे ॥

सुपात्रम् । न० दानयोग्यव्यक्तौ शोभनभाजने ॥ त्रि० उत्तमपात्रयुक्ते ।

सुपान । त्रि० पानयोग्ये ॥ सुखेनपीयते । पा० । कर्म्मणिल्युट ॥

सुपार्श्व । पु० प्लक्षवृक्षे ॥ हस्तिकन्दे ॥ सम्पाति पुत्रे । पक्षिविशेषे । पञ्चाशत्सहस्रयोजनोच्छ्राये । अरुणवर्णे मेरोः सौम्यदिशि । तस्यदक्ष्यार्थस्थिते । विष्कम्भशैले ॥ तत्रसहस्रयोजनोन्नतिमान्न्यग्रोधपादपोऽस्ति ॥

सुपार्श्वक । पु० गर्दभाण्डे । कन्दराले । कपीतने । प्लक्षे । पीलव० पीतवृक्ष० निर्गण्डो० गौण्डो० दू० प्र० इवे ॥ शोभनम् पार्श्वमस्य ॥ भाव्यर्हद्विशेषे ।

सुपिङ्गला । स्त्री॰ जीवन्त्याम ॥ ज्योतिष्मत्यां ॥

सुपीतम । न॰ गर्जरे ॥

सुपुट । पु॰ कोलकन्दे ॥ विष्णुकन्दे ॥

सुपुत्रिका । स्त्री॰ लताविशेषे । जतुकायाम् । जतुकार्याम् । तिर्यक्फलायाम् ॥

सुपुष्करा । स्त्री॰ स्थलपद्मिन्याम् ।

सुपुष्प । पु॰ राजतरुण्याम् ॥ हरिद्रौ । शिरीषे ॥ रक्तपुष्पके । पारिजातमन्दार॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ न॰ लवङ्गे ॥ प्रपौण्डरीके ॥ तूले । तूदे । पोश्खंपिप्पलाभिधे ॥ स्त्रीणांरजसि ॥ आहुल्यं ॥

सुपुष्पिका । स्त्री॰ पाटलायाम् ॥ जीर्णदारुणि ॥

सुपुष्पी । स्त्री॰ श्वेतापराजितायाम ॥ कदल्याम्॰ ॥ जीर्णफञ्जयाम् । जीर्णदारुणि ॥ द्रोणपुष्प्याम् ॥ मिश्रेयायाम् ॥ शतपुष्प्याम ॥

सुपूर । पु॰ बीजपूरे ॥

सुपूरक । पु॰ बकपुष्पवृक्षे ॥

सुपूर्व्वप्रवेश: । पु॰ यात्रानिवृत्त्यनन्तरक गृहप्रवेशे ॥ यात्रावसानेतुसपूर्वसञ्च ॥

सुपेशल । त्रि॰ अतिरम्ये । सुन्दरे ॥

सुपेशा । त्रि॰ सुकुमारे । कोमले ॥ सुरूपे ॥

सुप्तम् । न॰ साधिकायाम् । सुषुप्तौ ॥ त्रि॰ निद्रिते । निद्राण । शयितेसुप्त॰ इ॰ भा॰ ॥ अक्षवेशननेविधिनिषेधौयथा । क्षुधितस्त्वित कामौविद्यार्थीक्षत्रिकारकः । भाण्डारोत्तप्रवासीचसतसुप्तान्प्रबोधयेत् ॥ मक्षिकाभ्रमरौसर्पौराजाबेबालकस्तथा । परश्वापिचमूर्खश्चसप्तसुप्तान्नबोधयेत्इति ॥ स्वापितिम । जिष्वप्शयी । क्त । सम्प्रसारणम ॥

सुप्तघातक । त्रि॰ दुर्गेरे । हिस्र ॥ इ॰ चि॰ ष॰ ॥

सुप्तजन । पु॰ अर्द्धरात्रे ॥ निद्रितेजने ॥

सुप्तज्ञानम् । न॰ सुप्तविज्ञाने । स्वप्ने ॥

सुप्ति । स्त्री॰ स्पर्शाज्ञतारुजि ॥ विश्रम्भे ॥ शयने । निद्रायाम । स्वापे विज्ञानविरतौ ॥ अध्यात्मे विष्णुसुप्तयथा । आहारादिविभेदेन॰ सात्त्विकीराजसीतथा । तामसीतिविधासुप्ति . सापराज्ञ्यते त्रिधा ॥ सुखमस्वापसमयाचतु ' खमस्वापसमयतु । याठमूढोष्म

खापसमित्युक्ति सार्वलौकिकीति क्षिप्रपुराणे । किञ्च सुप्तसुप्ति जजानामितासु मे स्वप्रजागरो ॥

सुप्तोत्थित । त्रि० सुप्तादुत्थिते । आदौ सुप्त पश्चादुत्थित ॥

सुप्रज्ञा । पु० सत्सन्तानवति ॥ त्रि स्वसमिव प्रजा यस्य ॥

सुप्रतिभा । स्त्री० मदिरायाम् ॥ प्रगल्भतायाम् । ज्ञानोत्कर्षे ॥

सुप्रतिष्ठा । स्त्री० शोभनप्रतिष्ठायाम् । पञ्चाक्षरायाम् वृत्तौ । सा त्रिधा । पङ्क्तिप्रिया च ॥

सुप्रतिष्ठित । पु० उदुम्बरे ॥ त्रि० शोभनप्रतिष्ठायुक्ते । सुस्थिरे । यथास्थिते ॥

सुप्रतीक । पु० ईशानदिग्गजे ॥ शिवे ॥ कामदेवे ॥ शोभनाङ्गे ॥ त्रि० साधौ ॥ शोभनाङ्गविशिष्टे शोभना प्रतीका अवयवा यस्य ॥ यथा । सुप्रपत्रादिषोऽन्नीका दित्य तम्बीकन् । खपस्तुट च ॥

सुप्रभ । पु० जिनविशेषे । शुक्रस्वे ॥ त्रि० सुन्दरप्रभायुक्ते ॥

सुप्रभा । स्त्री० बाकुच्याम् । अग्निजिह्वाविशेषे । सुप्रभा पद्मरागाभा वायव्यादिशि स्थितेति तन्त्रसार ॥ शोभनदीप्तौ ॥

सुप्रभातम् । न० शुभसूचकप्रातःकाले ॥

सुप्रभाता । स्त्री० शोभनप्रभातयुतायां रात्रौ ॥ प्रवक्ष्यसरिति ॥

सुप्रयुक्त । त्रि० शोभनप्रयोगविशिष्टे ॥

सुप्रयुक्तशर । पु० कृतहस्ते ॥

सुप्रयोगविशिख । पु० कृतहस्ते । सुशिक्षितबाणमोक्षके । कृतहस्तशराभ्यासे ॥ शोभनप्रयोगोऽस्य सुप्रयोग । सुप्रयोगो विशिखोऽस्य ।

सुप्रलब्ध । त्रि० सुखलब्धे ॥

सुप्रलाप । पु० सुवचने । सुष्ठूक्तौ ॥ सुष्ठु प्रकृष्टं लपनम् । घञ् ॥

सुप्रसन्न । पु० कुबेरे ॥ कृष्णार्जके ॥ त्रि० सुप्रसादयुक्ते ॥

सुप्रसन्नक । पु० कृष्णार्जके ॥

सुप्रसरा । स्त्री० प्रसारण्याम् । गन्धालिकायाम् लतायाम् ।

सुप्रसाद । पु० शिवे ॥ विष्णौ ॥ शोभनप्रसादोऽस्य ॥ अनुचारवतां शिशुपालादीनामपि मोक्षप्रदातृत्वात् ॥ सुप्रसन्नतायाम् ॥ त्रि० प्रसन्नमुखे ।

सुप्रात । पु० सुप्रभाते । शोभनप्रातरस्य । सुप्रातसुश्वेत्यादिना बहुव्रीहावच् प्रत्ययान्तो निपातित ॥

सुप्रिया । स्त्री० सुभगायाम् । भर्तुः प्रियायाम् । सुन्दर्याम् ॥ यथाक्रमम् परित्यज्य यदा सिद्धिक

भवेत्। तथार्द्धवान्यकाचोढासुभगासुप्रियाभवेत इतिमाकण्डेय ॥

सुफल । पु० दाडिमे । बदरे । मुद्गे। कर्णिकारे। राजतरौ। आरग्वधविशेषे। छोटासोनालु० इ० गौ० दे० भा० प्र०॥ कपित्थे ॥ मत्फले॥ त्रि० शोभनफलवति। सुष्ठु, शोभनानिफलान्यस्य ॥

सुफला। स्त्री० कूष्माण्डामोषधौ॥ इन्द्रवारुण्याम्॥ कश्मर्याम। कदल्याम ॥ कपिलद्राक्षायाम्॥

सुफेनम। न० समुद्रफणे॥

सुबन्ध। पुं० तिले॥

सुबलपुष्पी। स्त्री० गाम्भार्याम्॥

सुबल्ली। स्त्री० पुत्रदात्र्याम्॥

सुबल्ली। स्त्री० वाकुच्याम। सोमराज्याम्॥ शोभनाबल्लिरस्या ॥ कट्व्याम्॥

सुब्रह्मण्य। पु० ऋत्विग्विशेषे॥ गुहे॥ किरलादिदेशप्रसिद्धेसर्पाधिष्ठातृविशेषे० तन्नत्ये सर्पराजेच॥

सुब्रह्मण्या। स्त्री० निगदविशेषे॥

सुब्रह्मवासुदेव। पु० ब्रह्मरूपवसुदेवसुते।

सुभग। पुं० चम्पके॥ अशोके॥ रक्ताम्लाने। टङ्कणे। त्रि० दृष्टे ॥ सुन्दरेऽथच॥ शोभनम्० भगंश्रीर्यस्य ॥

सुभगा। स्त्री० दुर्गायाम्॥ पतिप्रियायाम्। मुप्रियायाम॥ शालिपर्ण्याम॥ कस्तूर्याम्॥ हरिद्रायाम॥ सुवर्णकदल्याम। कम्पकादल्याम्। चम्पाकेला० इ० भा० प्र०॥ नीलदूर्वायाम॥ प्रियङ्गौ। कन्याम्॥ तुलस्याम। कैवर्त्तिकायाम॥ शोभनम० भगंश्रीर्यस्या॥

सुभगासुत। पु० सौभागिनेये॥ सुभगायाः सुत॥

सुभङ्ग। पु० नारिकेलवृक्षे॥

सुभद्र। पु० विष्णौ। वासुदेवे। त्रि० सुमङ्गलयुक्ते॥

सुभद्रक। पु० देवरथे। बिल्ववृक्षे॥

सुभद्रा। स्त्री० श्रीकृष्णभगिन्याम्। घृतमण्डायाम्॥ श्यामालतायाम्॥ काश्मर्याम्। गम्भार्याम्॥

सुभद्राणी। स्त्री० त्रायमाणायाम। बड़ुला इ० गौ० दे० भा० प्र०॥

सुभद्रिका। स्त्री० दुर्गायाम्॥

सुभद्रेश। पु० अर्जुने॥

सुभानु। पु० वत्सरविशेषे॥ तत्फलं यथा। सुभिक्षंक्षेममारोग्यंविग्रहश्चनिरुपद्रवम्। व्यवहारोभवेत्तुष्ट सुभानौदेवपूजिते॥१७॥

सुभाषित। पु० बुद्धे॥ न० सुवचने॥ हितोपदेशवचने॥ यथा स्वर्गापवर्गसिद्ध्यर्थं भाषितंयत्सु

शोभनम्। वाक्यमुनिवरै प्रति सं'हितेय सुभाषितमिति
सुभिक्ष । त्रि० सुलभभक्ष्यद्रव्ये ॥ सुलभभक्ष्ययुक्तकालादौ ॥
सुभिक्षा । स्त्री० धातकुष्याम् ॥ शोभनायाम् ॥ भिक्षायाम् ॥ त्रि० लब्धान्ने ॥ सुष्ठु भिक्ष्यते । भिक्षायाचादौ । घञ् ॥
सुभीरव । पु० पलाशवृक्षे ॥
सुभू । त्रि० सुजन्मनि ॥
सुभूता स्त्री० कैलाशात्मन. कौशलोद्गमभागे ॥ भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात् ॥
सुभूतिक । पु० बिल्ववृक्षे ॥
सुभूम । पु० कार्त्तवीर्य्ये ॥
सुभृशम् । अ० बाढमित्यर्थे ॥
सुभ्राता । त्रि० स्निग्धभ्रातरि । शोभन स्निग्धोभ्रातायस्य । नद्यृतश्चेतिकप तुनभवति । वन्दिते भ्रातुरितिनिषेधात् ॥
सुभ्रू । स्त्री० योषिति ॥ त्रि० शोभनभ्रूविशिष्टे ॥
सुमम् । न० पुष्पे ॥
सुमङ्गलम् । न० पुष्पादिद्रव्ये ॥ त्रि० सदाचारे ॥ अतिशयशोभवति ॥
सुमङ्गला । स्त्री० वायसोल्याम् । स्कन्दमातरि ॥
सुमत: । त्रि० अनुमते । सुन्दरज्ञानविषये ॥
सुमति । पु० भरताग्रजे ॥ दृताई दिशिषे । भूताई दिशिषे ॥ स्त्री० शोभनमतौ विष्णुयशस पत्न्याम् । कल्किमातरि ॥ त्रि० सुबुद्धौ । निपुणे ।
सुमदन । पुं० आम्रवृक्षे ॥
सुमदात्मजा । स्त्री० स्वर्गानन्दायाम् । अप्सरसि ॥
सुमधुर: । पु० जीवशाके ॥ न० अत्यर्थमधुरवाक्ये । सान्त्वे ॥ त्रि० अतिशयमधुररसयुक्ते ॥
सुमन. । पुं० गोधूमे ॥ सुष्ठु मन्यते । मनज्ञाने , अच् । धत्तूरे । त्रि० मनोहरे
सुमन पत्रिका । स्त्री० जातीपत्र्याम् जातिवो० इ० भा० प्र०।
सुमन. फलम् । न० जातीफले । पु० कपित्थवृक्षे
सुमना । पु० देवे । सुरे । धीरे । पण्डिते ॥ शोभनमनोयस्य । पूतीकरञ्जे । महाकरञ्जे ॥ निम्बे ॥ गोधूमे ॥ देवप्रावेशावभूम्नि ॥ त्रि० प्रसन्नमनसि ॥
सुमना । स्त्री० सुमनस स्त्री० भूम्नि० पुष्पे । सुमना पुष्पमालत्यो । स्त्रियांसितिमेदिन्यादेरेकत्वम् । वैद्य.स्तमानसुमनाइववर्ण्नीयेतिप्रयोगश्च ॥ स्त्रिय सुमनस:

पुष्पम्प्रसूनङ्कुसुमंसुमनित्यमरो क्तेः । भूम्निस्त्रियंसुमनसइति रत्नकोशःस्वत्वहुत्वमपि ॥ सुष्ठुम न्यतेऽभि . । मन० । असुन् । यद्वा । शो०भनम्मनोऽस्याम् ॥ मालत्याम ॥

सुमन । न० पुष्पे ॥ पुष्पंसुमन कुसुममितिनाममाला । अप्रख्याख्ये येद्वंधिसुमनसोतिप्रयोगदर्शनाच्चो वश्वेऽनुकूल । छौवश्छान्दस मित्यके ॥

सुमना । स्त्री० मालत्याम् । जातीपु ष्पहचे । चर्म्मखीतिभाप्रसिद्धे सुमनायावपचाथीतिसुश्रुतेदर्श नाद्धावस्तापि ॥

सुमनोरज । न० परागे ॥ सुमनसा रज ॥

सुमन्तु । पु० मुनिविशेषे । अथर्वा ङ्गिरसान्धारकोव्यासशिष्ये ॥

सुमन्त्र । पु० कल्किदेवस्यज्येष्ठ भ्रातरि । यथा कल्केर्ज्येष्ठास्त्रय. शूरा कविप्राज्ञसुमन्त्रका । ता तमातृप्रियकरागुरुविप्रप्रतिष्ठिता इतिकल्किपु० २८०अ ॥ दशरथ भूपते सारथौ ॥

सुमन्त्रा । स्त्री० दुर्गायाम् ॥

सुमर्षण . । त्रि० सुसहे ॥ सुखे नमृष्यते । सृष० । भाषायाशा सियुधीत्यादिनाखलर्थेयुच ॥

सुमालतिका । स्त्री० वर्णवृत्तविशेषे ॥ यद्राजगणद्विभवेद्भलदा । मा थोविततोतिसुमालतिकेति ॥ य था । मनोजशरैर्विषमाततरैर्या । अ वादिनतेनभवद्दयितेन ॥

सुमित्र । पु० ईश्वरे ॥ सुष्ठुमि त्र जीवपक्षिण सखा ॥ इक्ष्वाकु नृपतिरि । इक्ष्वाकुवंशीयदृहला न्वयेसुरथराजपुत्रे ॥ न०हिते ।

सुमित्रभू । पु० जिनचक्रवर्त्तिवि शेषे । सगरे ॥

सुमित्रा । स्त्री० लक्ष्मणशत्रुघ्नयोर्ज नन्याम । दशरथराजपत्न्याम् । लक्ष्मणप्रसूम् ॥

सुमित्रानन्दवर्द्धन. । पु० लक्ष्मणे ॥ सुमित्रायाआनन्दं वर्द्धयति । नन्द्या दित्वाल्ल्यु ॥

सुमुख । पु० गरुडात्मजे ॥ नाग विशेषे ॥ शाकभेदे । पण्डिते ॥ हेरम्बे ॥ वनबर्बरिकायाम् ॥ बर्बरे सितार्जके ॥ प्रागुदक्पश्चिमद्वा रगृहे ॥ भगवतिवासुदेवे ॥ शोभ नम्मुखमस्य ॥ न० नखक्षतविशेषे ॥ उत्तमास्ये ॥ त्रि० पण्डिते । म नोज्ञे । सुन्दरे ॥ सुन्दराननविशि ष्टे । सुन्दरवदने ॥

सुमुखा । स्त्री० तार्क्ष्यवध्वाम् ॥

सुमुखी । स्त्री० देव्यन्तरे ॥ तार्क्ष्यव ध्वाम् । त्रिष्टुपछन्दो ११ भेदे ॥

नजजलगैगैर्दितासुमुखी । यथा । तरणिसुतातटकुञ्जगृहे श्वदनविधुस्मितदीधितिभि । तिमिरसुदस्यमुखंसुमुखीहरिमश्लोक्यचुचुम्बचिरम् ॥ सुन्दरवदनायाम् ॥ स्वाङ्गाच्चोपसर्जनाद्सयोगोपधादितिङी ष ।

सुमुष्टि । पु॰ विषमुष्टिक्षुपे । डोडिकायाम् ॥

सुमूल । पु॰ श्वेतशोभाञ्जने ॥

सुमूलकम् । न॰ गर्जरे ॥

सुमूला । स्त्री॰ शालपर्ण्याम् ॥ पृश्निपर्ण्यां ॥

सुमेखल । पु॰ मुञ्जे ॥ त्रि॰ शोभनमेखलायुक्ते ॥

सुमेधा । स्त्री॰ ज्योतिष्मत्याम् । त्रि॰ सुबुद्धौ । विदुषि । शोभना मेधाप्रज्ञायस्य । नित्यमसिच् प्रजामेधयोरित्यसिचसमासान्त ॥

सुमेरु । पु॰ पर्वतविशेषे । मेरौ । हेमाद्रौ । रत्नसानौ । सुरालये । मिमेतिज्योतींषि । डुमिञ्प्रक्षेपणे । मिपीभ्यांरु । सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थम् ॥

सुम्नम् । न॰ सुखे ॥

सुम्भलुण्ठ । पु॰ कर्पूरके ॥

सुम्भ । पु॰ देशविशेषे ॥ असुरभेदे ।

सुम्यम । न॰ रत्नौ ॥ सुपूजितमौ यते । मीङ गत्याम । एरच् । बाहुलकादात्व ॥ सुमेपुष्पे साधुर्वा । तत्रसाधुरितियत् ॥

सुयन्त्रित । त्रि॰ आत्मीयनियमिते विप्रादौ ॥

सुयामुन । पु॰ वत्सराजे ॥ प्रासादे ॥ अद्रिविशेषे ॥ अच्युते । श्रीकृष्णे ॥ शोभनायमुनासम्बन्धिन परिवेष्टारोऽस्य । यामुना परिवेष्टार पद्मासनादय शोभनायस्येतिवा ॥

सुयोजित । त्रि॰ नियुक्ते ॥

सुयोधन । पु॰ दुर्योधने ॥ सुखेन युध्यतेससुयोधन । भाषायांशासियुधिदृशिधृषिमृषिभ्योयुच् ॥

सुर । पु॰ अमरे । निर्जरे । देवे । सुरति । षुरप्रसवैश्वर्ययो । तुदादि । इगुपधेतिक ॥ यद्वा । क्षीरसमुद्रोत्थासुरा॰ साचक्षि॰ अर्श आद्यच् ॥ सुरा परिग्रहात्सुर । तथाचार्षेरामायणे । वरुणस्यनतः कन्यावारुणी रघुनन्दन । उत्पपातरसात्तस्मान्मार्गमाणापरिग्रहम् ॥ १६ ॥ दितेः पुत्रास्ततारामजगृहुर्वरुणात्मजाम् । अदितेस्तुसुताप्रीतोस्तामगृह्णन्तवैसुरा ॥ २७ ॥ सुरा परिग्रहाद्देवा । सुराइत्यभिविश्रुता । अपरिग्रहणात्तस्यादैतेया

स्वासुरास्तथैव्याघ्रैरामायणेचादि काण्डे अमृते। त्वसिनामनिषट्च त्वारिंशद्ध्यायेप्रोक्ता ॥ शोभन राजते । राजृदीप्तौ । अन्येभ्योपी तिड । यद्वा । सुनोति । षुञ् । सुम्नधात्वाध्धभ्य कन ॥

सुरक । पु० वह्निविशेषे ॥ सुरावर्णो ऽस्ति । सुरायाच्छावतिकन ।

सुरकौन्द्रदर्पापहा । स्त्री० गङ्गाया म् ॥ यथा । भगीरथप्रथागुगासुरक बौन्द्रदर्पापहामहेशमुकुटप्रभागिरि शिर पताकासिता । सुरासुरनरो रगैरजभवाच्युते स स्तुताविमु क्तिफलदायिनीभगवतिस्वय राजते ॥ इतिकल्किपुराणे ३४ ऽध्या य ॥

सुरकाक । पु० विश्वकर्मणि ॥

सुरकृता । स्त्री० गुडूच्याम् ॥

सुरक्त । पु० रक्तचन्दने । त्रि० मधु रकण्ठे ॥ अत्यन्तानुरक्ते । शोभ नरागयुक्ते ।

सुरक्तक । पु० कोशाम्रे ॥ स्वर्णगे रिके ।

सुरगण । पु० इन्द्रादिदेवगणे ॥

सुरगण्ड । पु० रोगविशेषे । वर गण्डे ॥

सुरगुरु । पु० वृहस्पतौ ॥

सुरग्रामणी । पु० इन्द्रे ॥

सुरङ्ग । पु० नागरङ्गे ॥ भूमौगुप्त मार्गात्मकेगर्तविशेषे ॥ न० पत ङ्गे । बकम् । इ० भाषा० प्र० । हिङ्गुले ॥

सुरङ्गकृत । पु० खनकइतिख्याते सप्रथितेभूमौगुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न० पतङ्गे ॥

सुरङ्गधातु । पु० गैरिके ॥

सुरङ्गयुक् । पु० सुरङ्गयापहर्त्तरि । कुलक्तिके ॥

सुरङ्गा । स्त्री० लताविशेषे । कैवर्ति कायाम् । दृगारुहायाम् ॥ तिर्य गभूखाते । सन्धौ । सौध० इ० सुरङ्ग० इतिचभाषाप्रसिद्धे ॥ सुबहुर ज्यतेऽत्रामृरजसा । रङ्गराग । इत्य स्मैतिघञ् । घञिरितकुत्त्व ॥

सुरङ्गिका । स्त्री० मूर्वाया ॥

सुरङ्गी । स्त्री० काकनासायाम् ॥ र क्तशोभाञ्जने० इतिरत्नमाला ॥

सुरजफल । पु० पनसवृक्षे ॥

सुरजनी । स्त्री० रात्रौ ॥

सुरज्येष्ठ । पु० ब्रह्मणि ॥ सुरा णासुरेषुवाज्येष्ठ ॥

सुरञ्जन । पु० गोपदले । गुवाक वृक्षे ॥

सुरतम । न० निधुवने । मैथुने ॥ सुरत द्विविधम० बाह्यमाभ्यन्तर ञ्च । तत्रबाह्यप्रेक्षणभाषणाङ्गस्प र्शचुम्बनाद्यनेकविधम् । आभ्यन्त रञ्चासनादिभेदेनापि ॥ त्रि० दया

युक्ते । धर्मिरते ॥

सुरतकण्टक पु० रतकीलि ॥ *

सुरतताली । स्त्री० दूत्याम् ॥ शिरःस्रजि ॥

सुरतरङ्गिणी । स्त्री० गङ्गायाम् ॥ यथा । भागतावतजरैर्वहिमानीसे व्यतासुरतरङ्गिणीसदा । कृष्णवर्त्मनिगुणाः कलयन्तोऽजीवनेषु घयज्यनुरागम ॥

सुरतरु । पु० देवतरौ । अश्वत्थ द्रुमे ॥

सुरता । स्त्री० देवत्वे ॥ देवतायाम ॥ पूर्वत्र भावे तल् । अपरत्र देवाः सन्ति रा० देवमद्दीर्थ पर ॥ यथा । सुराणासमूह । गजसहाया व्यास्वेतिवाक्ये चकारादन्यथापितल् ॥

सुरतोषक । पु० कौस्तुभमणौ ॥ त्रि० देवप्रीतिकारके ॥

सुरथ । स्वारोचिषेऽन्तरे चैत्र वंशसमुद्भवेन्द्रपतिश्वरे । सचचन्द्रवंशीय । यथोक्तं ब्रह्मवैवर्ते । श्रीनारायण उवाच । धर्मिवक्त्रान्यो पुत्रस्तत्पुत्रो निशाकर । सचक्रत्वाराजसूय विज्ञारानीवभूवह । गुरुपत्न्या स्वतारायातबभूवबुधसुत । बुध पुत्रश्चैत्रश्च तत्पुत्रःसुरथसद्गति ॥

सुरदारु । न० देवदारुणि ।

सुरदीर्घिका । स्त्री० मन्दाकिन्याम् नियद्गङ्गायाम । सुराणांदीर्घिका ० वापीव ॥

सुरदुन्दुभि । स्त्री० तुलस्याम् ॥ पु० रा० घट ॥

सुरद्रुम । पु० मन्दारादिदेवतरौ ॥ सुराणांद्रुम ॥ देवनले ॥

सुरद्विट । पु० असुरे । पूर्वदेवे ॥ सुरान्द्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषद्रुहदुहेत्यादिनाक्विप् ॥

सुरधनु । न० इन्द्रायुधे । शक्रधनुषि ।

सुरधूप । पु० धूनके ॥

सुरनदी । स्त्री० गङ्गायाम् ॥

सुरनन्दा । )<br>सुरनन्दिका । ) स्त्री० नदीविशेषे ॥

सुरनायक । पु० इन्द्रे ॥

सुरनाल । पु० देवनाले । नलोत्तमे ।

सुरनिम्नगा । स्त्री० गङ्गायाम् ॥ सुराणांनिम्नगा । बभूवादि ॥

सुरनिर्गन्धम् । न० पत्रके ॥

सुरपति । पु० इन्द्रे । बलारातौ सुराणांपति ॥ आदिगुरुर्विकलि ० ऽ । ० ॥ प्रथम तथा चतुर्थ प्रभेदे० ऽ । ऽ ० ॥

सुरपत्तनम् । न० स्वर्गे ॥

सुरपथम् । न० व्योम्नि ॥

सुरपर्णम् । न० देवपर्णे ॥

सुरपर्णिक । पु० सुरपुन्नागे ॥

सुरपर्णिका । स्त्री॰ पुन्नागे ॥

सुरपर्णी । स्त्री॰ पलाश्याम्

सुरपादप । पु॰ कल्पवृक्षे ॥

सुरपुन्नाग । पु॰ पुन्नागभेदे । न॰ मेरौ ।

सुरपुरी । स्त्री॰ अमरावत्याम् ॥

सुरप्रिय । पु॰ अगस्त्यवृक्षे ॥

सुरप्रिया । स्त्री॰ जात्याम् ॥ स्वर्णरम्भायाम् ॥

सुरभि । पु॰ चम्पके ॥ वसन्ते ॥ जातीफले ॥ सुगन्धौ ॥ चैत्रमासे ॥ कणगुग्गुलौ ॥ धूनके ॥ कदम्बवृक्षे ॥ वकुलद्रुमे ॥ गन्धतृणे ॥ शमीवृक्षे ॥ न॰ स्वर्णे ॥ गन्धोपले । गन्धपाषाणे ॥ साधुगन्धे ॥ सुन्दरे ॥ स्त्री॰ शल्लक्यामोषधौ । गजभक्षायाम् ॥ मातृभिद् ॥ सुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नद्याम् ॥ जात्याम् । अपितरावत्याम् । तुलस्याम् ॥ वर्वरीतुलस्याम् ॥ छायायाम् । मेदिन्याम् ॥ सुरायाम् । गवांमातरि ॥ यथा । गवामधिष्ठातृदेवीगवामाद्यागवांप्रसू । गवांप्रधान सुरभि गौलोकेसासमुद्भवा ॥ त्रि॰ सुगन्धौ ॥ कान्ते । शोभने ॥ विख्याते ॥ सचिवे ॥ धीरे ॥ सुष्ठुरभते॰ रभ्यतेवा॰ सुष्ठुरभस्त रभसयुक्ताभवन्त्यनेवा । रभ राभस्ये । सर्वधातुभ्यइन् । आगमानित्यत्वान्नुम् ॥

सुरभिका । स्त्री॰ स्वर्णकदल्याम् ॥

सुरभिगन्धा । स्त्री॰ मालत्याम् । छवि लो॰ इ॰ भा॰ प्र॰

सुरभिगन्धि । त्रि॰ शोभनगन्धविशिष्टे । सुरभिर्गन्धोयस्य । गन्धस्येदुत पूतिसुसुरभिभ्य ॥

सुरभित । त्रि॰ वासिते ॥

सुरभित्रिफला । स्त्री॰ सुगन्धित्रिफलायाम् ॥

सुरभित्वक् । स्त्री॰ बृहदेलायाम् ॥

सुरभिदारु । पु॰ सरलवृक्षे ॥

सुरभिपत्रा । स्त्री॰ जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥

सुरभिवल्कलम् । न॰ गुडत्वचि ॥

सुरभिस्रवा । स्त्री॰ शल्लक्याम् ॥

सुरभी । स्त्री॰ आमोदमाने ॥ सुरभौ । गवाप्रभृता ॥

सुरभीरसा । स्त्री॰ शल्लकीवृक्षे ॥

सुरभूरुह । पु॰ देवदारुणि ॥ कल्पवृक्षादौ ॥

सुरमृत्तिका । स्त्री॰ तुवर्याम् । काक्ष्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी॰ इ॰ भा॰ ॥

सुरमेदा । स्त्री॰ महामेदायाम् ॥

सुरराज । पु॰ इन्द्रे । सुराणाराजा । टच् ॥

सुरर्षि । पु॰ नारदादौ ॥ नारदा

था मुरर्षयस्तुल्यमर । सुराश्चतेव्र आदिपुनत्वाद्दिलयस्य ॥ षष्ठीसमासोवा ॥ ब्रह्मर्षिदेवर्षिराजर्षिमहर्षिपरमर्षिकाण्डर्षिश्रुतर्षिभेदात् सप्तप्रकाराऋषय । तत्रनारदादा । सुरर्षय ॥

सुरलता । स्त्री॰ महाज्योतिष्मत्याम्

सुरला । स्त्री॰ पुरन्दरायाम् । गङ्गायाम् ॥

सुरलोक । पु॰ द्यवि । दिवि । स्वर्गे ॥ सुराणांलोक ॥

सुरवर्त्म । न॰ खे । आकाशे ॥ सुराणांवर्त्म । सुरानभूमिस्पृशोऽन्तरीक्षगास्तेन ॥

सुरवल्लभा । स्त्री॰ श्वेतदूर्वायाम् ।

सुरवल्ली । स्त्री॰ तुलस्याम् ॥

सुरवैरी । ) पुं॰ असुरे । दानवे ॥
सुरशत्रु । )

सुरशाखी । पुं॰ कल्पवृक्षे ॥

सुरश्रेष्ठ । पु॰ ब्रह्मर्षि ॥

सुरश्रेष्ठा । स्त्री॰ ब्राह्म्याम् ।

सुरस । पु॰ मोचरसे ॥ सिन्धुवारे ॥ न॰ पर्णासे ॥ बोले ॥ त्वचे ॥ दालचीनीतिभा॰ प्र॰ वल्कले ॥ गन्धतृणे ॥ त्रि॰ स्वादौ ॥ शोभनोरसोऽस्य ॥

सुरसख । पु॰ इन्द्रसचिवे ॥ गन्धर्वे ॥

सुरसद्म । न॰ स्वर्गे ॥

सुरसम्भवा । स्त्री॰ आदित्यभक्तायाम् ॥

सुरसरित् । स्त्री॰ गङ्गाया ॥

सुरसर्षप । पु॰ देवसर्षपे ॥

सुरसा । स्त्री॰ रास्नायाम् ॥ नागमातरि ॥ तुलसीदेवायाम् । वर्वरीतुलस्याम् ॥ तुलस्याम् । पर्णासे ॥ सुरसास्त्रीतुपर्णासे । इति शब्दरत्नावली ॥ पर्णासितुनपुंसकमितिमुद्राङ्कितामेदिनी । पर्णासिपुंनपुंसकमितिहस्तलिखितामेदिनी । सुरसस्तुत्रिषुस्वादौपर्णासेननपुंसकमितिचक्वचित्मेदिन्यांपाठः पर्णासिसुरसास्त्रियामितितुवहव ॥ ब्राह्म्याम ॥ महाशतावर्याम् ॥ कपित्थपर्ण्याम् ॥ मिश्रेयायाम् ॥ काश्मीरप्रसिद्धायांगन्धपत्राख्यामितिभावप्रकाश ॥ भारतवर्षस्थनदीप्रभेदे ॥ अतिधृतिछन्द १९ प्रभेदे ॥ स्त्रौभ्रौयेनोगुरुश्चेत् स्वरमुनिकरणैराहसुरसाम् । यथा । कामक्रीडासतृष्णोमधुसमयसमारम्भरभसात्कालिन्दीकूलकुञ्जेविहरणकुतुकाकृष्टहृदय । गोविन्दोवल्लवीनामधररससुधाम प्राप्य सुरसांशङ्के पीयूषपानप्रचयकृतसुखव्यसनरदसौ ॥ शोभनोरसोऽस्या ॥

सुरसाष्ट : । पुं॰ इवगणविशेषे ॥

पयसम् ॥ ततो धेनुशतं दद्याद्ब्राह्म
णानाञ्च भोजनम् । इति गारुडे
२२६ अध्यायः ॥ तत्पाने शुक्रशा
पो यथा । सुरापानाद्वञ्चनामप्राप
यित्वा सञ्ज्ञानाशञ्चैव तथातिघोर-
म् । दृष्ट्वा कचञ्चापि तथाभिरूपं पीतं
तथा सुरया मोहितेन ॥ समन्युरुत्थाय
महानुभावस्तदोशना विप्रहितं चिकी
र्षुः । काव्यः स्वयं वाक्यमिदं जगाद सु
रापानं प्रति वै जातशङ्कः ॥ यो ब्रा
ह्मणोऽद्यप्रभृतीह कश्चिन्मोहात् सुरां
पास्यति मन्दबुद्धिः । अपेतधर्मा ब्रह्म
हा चैव स स्यादस्मिन् लोके गर्हितः
स्यात् परे च ॥ मया चेमां विप्रधर्मोक्ति
सीमां मर्यादां वै स्थापितां सर्वलोके
सन्तो विप्राः शुश्रुवांसो गुरूणां देवा
दैत्याश्चोपशृण्वन्तु सर्वे ॥ इति मा
त्स्ये २५ऽध्यायः ॥ ब्राह्मणक्षत्रिय
विशां त्रिविधसुरापानप्रायश्चित्तादि
यथा । सुरां पीत्वा द्विजो मोहादग्नि
वर्णां सुरां पिबेत् । तया सकाये नि
र्दग्धे मुच्यते किल्बिषात्ततः ॥ गो
मूत्रमग्निवर्णं वा पिबेदुदकमेव वा ।
पयो घृतं वामरणाद्गोशकृद्रसमेव वा
॥ कणान् वा भक्षयेदब्दं पिण्याकं वा
सकृन्निशि । सुरापानापनुत्त्यर्थं वा
लवासा जटी ध्वजी ॥ सुरा वै मलम
न्नानां पाप्मा च मलमुच्यते । त
स्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पि
बेत् ॥ गौडी पैष्टी च माध्वी च विज्ञे
या त्रिविधा सुरा । यथैवैका तथा स
र्वा न पातव्या द्विजोत्तमैः ॥ यक्ष
रक्षःपिशाचान्नं मद्यं मांसं सुरास
वम् । तद्ब्राह्मणेन नात्तव्यं देवानाम
श्नता हविः ॥ अमेध्ये वा पतेन्मत्तो
वैदिकं वाप्युदाहरेत् । अकार्यम
न्यत् कुर्य्याद्वा ब्राह्मणो मदमोहितः
॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्य
ते सकृत् । तस्य व्यपैति ब्राह्मण्यं
शूद्रत्वञ्च स गच्छति ॥ एषा विचित्रा
भिहिता सुरापानस्य निष्कृतिः इति
मानवे ११ऽध्यायः ॥ अथ ईश्वर
कुलार्णवे । पेयमद्यं पलं खाद्यं
समालोक्य प्रियामुखम् । इत्थं वा
चरणं जप्यं परं प्राप्यं परं पदम् ॥
गुरुकारुण्यसुलभं मोहदं कुलदर्शन
म् । त्वद्भक्ता एव जानन्ति नेतरे भुक्ति
मुक्तिदम् ॥ गुरूपदेशरहिता मत्वा
[illegible] । मोहयन्ति जनान्
कांश्चित् स्वयं पूर्वं विमोहिताः ॥
दुराचारपराः केचिद्धयतिष्ठि
पामराः । यथाभूतो भवेत् स्वामी से
वकाः स्युस्तथाविधाः ॥ बहवः
कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः
। स्वबुद्ध्या कल्पयन्तीत्थं पारम्पर्य
विवर्जिताः ॥ मद्यपानेन मनुजा
यदि सिद्धिं लभन्ति चेत् । मद्यपान
रताः सर्वे सिद्धिं यान्तु समीहिताम् ॥

द्विष्ठयामदिष्ठया॰ क्षीरं सर्पिर्मधू
दकम् ॥ हिरण्यपात्रंस्वादीति॰वम
क्त पुरुषपग्रुम् । सद्योदीत्तयती
ख्याता प्रमाणस्रुतय प्रिये ॥
इतिश्रीकुलार्णवे द्वितीयोल्लास ॥
श्रीमहानिर्वाणतन्त्रे पिश्रीसदाशिव
वाक्यथा । सुराद्रवमयीताराजीव
निस्तारकारिणी । जननीभोगमो
क्षाणानाशिनीविपदारुजाम् ॥ दा
हिनीपापसङ्घानांपाविनीजगतां
प्रिये । सर्वसिद्धिप्रदाज्ञानबुद्धिवि
द्याविवर्द्धिनी ॥ मुक्तैर्मुमुक्षुभि ॰
सिद्धै ॰ साधकै क्षितिपालकै ॰
। सेव्यतेसर्वदादेवैराद्यस्वाभीष्टसि
द्धये ॥ सम्यग्विधिविधानेनसुस
माहितचेतसा । पिबन्तिमदिरांम
र्त्त्याअमर्त्त्याएवतेक्षिती ॥ प्रत्येक
तत्त्वस्वीकारादिधिनाद्याच्छिवोन
र : । नजानेपञ्चतत्त्वनांसेवनात्
किफलम्भवेत् ॥ इयस्वेहारुणीदेवी
निपीताविधिवर्ज्जिता । नृणांविना
शयेत्सर्वंबुद्धिमायुर्यशोधनम् । अ
त्यन्तपानान्मद्यस्यचतुर्वर्गप्रसाधिनी
। बुद्धिर्विनश्यतिप्रायो॰ लोकानांम
त्तचेतसाम् ॥ विभ्रान्तबुद्धेर्मनुजा
त्कार्याकार्यमजानत । स्वाऽनि
ष्टस्परानिष्ट जायतेऽस्मात्पदेपदे
॥ मतोन्यपीवाचक्रेशोमद्यैमादक
वस्तु । अत्यासक्तजनान्कायधन

दण्डेनशोधयेत् ॥ सुराभेदाद्धासि
भेदान्न्यूनेनाप्यधिकेनवा । देश
कालविभेदेनबुद्धिभ्र शोभविष्णुणाम्
॥ अतएवसुरापाणादतिपानंनल
क्ष्यते । सुवज्ञहाक पाणिपद्दृग्भि
रतिपानंविचारयेत् ॥ नेन्द्रियाणि
वशेयस्यमदविह्वलचेतस । देवता
गुरुमर्यादालङ्घिनोभयरूपिण ॥
निखिलानर्थयोग्यस्यपापिन शि
वघातिन । दहिजिह्वाहरेदर्था
स्ताडयेत्सपार्थिव : ॥ विचलत्
पादशाक्पाणि भ्रान्तमुन्मत्तमुत्त
म् । तमुप यातयेद्राजाद्रविणञ्चा
हरेत्तत ॥ अपवाग वादिनक्रम
त्त लज्जाभयविवर्ज्जितम् । धना
दानेनत शास्यान्नप्रीतिकरोन्नृ
प ॥ शताभिषिक्त ॰ कौलश्चेद
तिपानात्कुलेश्वरि । पशुरेवसम
न्तव्य कुलधर्मवहिष्कृत ॰ ।
पिबन्नतिशयंमद्य शोधितवाप्यशो
धितम् । त्याज्योभवतिकौलानां
दण्डनीयोपिभूभृत ॥ ब्राह्मीभा
र्यांसुरांमत्ता पाययन्तोद्विजात
य । शुद्धां युर्भार्यया साङ्गेम पञ्चा
ह्वानभोजनात् ॥ असंस्कृतसुरा
पानाद्द्रव्यदुपवसत्त्र्यहम् । भु
क्त्वाप्यशोधितमांसमुपवासद्वयचरे
त् ॥ असंस्कृतमीनमुद्रे खादयन्नुपव
सेदह । अवैधपञ्चमकुर्वन्नराधो

दण्डेनशुद्ध्यति ॥ अपिच । वीरघातीब्रह्मघाती च पायीवीरांगनागमश्च ॥ स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चम ॥ कुलवर्त्मकुलद्रव्यंकुलसाधकमेवच । येनिन्दन्तिदुरात्मानस्तेगच्छन्त्यधमांगतिम् ॥ नृत्यन्तिरुद्रडाकिन्योनृत्यन्तिरुद्रभैरवा । मांसास्थिचर्वणानन्दाः सुराकौलद्विषान्नृणाम् ॥ दयालवः सत्यशीला सदापरहितेप्रिया. तान्गर्हयन्तोनरकान्निष्कृतियान्तिनकाचिदिति ॥ सुरामांसादिभिर्देवीगङ्गापिसुप्रसीदति । अत्र प्रमाणंसीतायावाक्यसुस्पष्टसुच्यते । तथाहि । मध्यन्तुसमनुप्राप्यभागीरथ्यास्त्वऽनिन्दिता । वैदेहीप्राञ्जलिर्भूत्वातांनदीमिदमब्रवीत् । पुत्रोदशरथस्यायमहाराजस्यधीमत । निदेशंपालयत्वेनगङ्गेत्वदभिरक्षित । चतुर्दशहिवर्षाणिसमग्रान्युष्यकानने । भ्रात्रासहमयाचैवपुनःप्रत्यागमिष्यति ॥ ततस्त्वांदेविसुभगेक्षेमेणपुनरागताय क्ष्येप्रमुदितागङ्गेसर्वकामप्रदायिनि ॥ त्वंहित्रिपथगेदेविब्रह्मलोकसमीक्ष्यसे । भार्याचोदधिराजस्यलोकेस्मिन्सम्प्रदृश्यते ॥ सात्वांदेविनमस्यामिप्रशंसामिचशोभने । प्राप्तराज्येनरव्याघ्रेशिवेनपुनरागते ॥ गवांशतसहस्राणिवस्त्राण्यन्नञ्चशोभने । ब्राह्मणेभ्यःप्रदास्यामितवप्रियचिकीर्षया ॥ सुराघटसहस्रेणमांसभूतौदनेनच । यक्ष्येत्वांप्रयतादेविपुरींपुनरुपागता ॥ यानित्वत्तीरवासीनिदैवतानिवसन्तिहि । तानिसर्वाणियक्ष्यामितीर्थान्यायतनानिच ॥ पुनरेवमहाबाहुर्मयाभ्रात्राचसङ्गत । अयोध्यांवनवासात्प्रविशत्वनघोऽनघे ॥ तथासम्भाष्यमाणासासीतागङ्गामनिन्दिता । दक्षिणादक्षिणन्तीरंक्षिप्रमेवाभ्युपागमत् ॥ इत्यार्षेरामायणेअयोध्याकाण्डेद्विपञ्चाशत्सर्ग ॥ पुनश्च । कालिन्दीमध्यमायातासीतात्वेनामवन्दत । स्वस्तिदेवितरामित्वांपारयेन्मेपतिर्व्रतम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघटशतेनच । स्वस्तिप्रत्यागतेरामेपुरीमिक्ष्वाकुपालिताम् ॥ कालिन्दीमथसीतातुयाचमानाकृताञ्जलि । तीरमेवाभिसम्प्राप्तादक्षिणावरवर्णिनी ॥ इत्यार्षेरामायणेअयोध्याकाण्डेपञ्चपञ्चाशत्सर्ग ॥

सुराकर । पु॰ नारिकेलद्रुमे ॥ मद्योत्पत्तिस्थाने ॥ यथा । आकराः श्रवयः सर्वं वर्जयित्वासुराकरम् ॥

सुराग्र्यम् । न॰ अमृतेसुराणामग्र्य

श्रेष्ठम् ॥
सुराङ्गना । स्त्री॰ देवपत्न्याम् ॥ अप्सरसु ॥
सुराचार्य्य । पुं॰ बृहस्पतौ ॥ सुराणामाचार्यः ॥
सुराजक । पुं॰ भृङ्गराजे ॥
सुराजा । पुं॰ शोभनैनृपे ॥
सुराजीवी । पुं॰ शौण्डिके ॥
सुरानन्द । पुं॰ हरौ ॥ सुरान् आनन्दयत्यमृतप्रदानेनेतितथा । कौले सुरया॰सुरायांवानन्दोऽस्य ॥
सुराप । त्रि॰ मद्यपे । सुरापानकर्तरि ॥ सुरांपिबति । पा॰ । गापोष्टगित्यत्र॰पिबते॰ सुराशी॰ध्वोरितिवाच्ये॰काहक । टित्वात्स्त्रियांङीप् । सुरापी ॥ अब्राह्मणाश्चेयच्मे सुराप श्राद्धदन्नकः । सुवर्णहारीभुन्नखोदुश्चर्मा गुरुतल्पग ॥
सुरापगा । स्त्री॰ गङ्गायाम् ॥
सुरापाणम् । न॰ मद्यपाने ॥ सुराया पानम् अमङ्गे ॥ वाभावकरणयोरितिपक्षे णत्वम् ॥
सुरापाणा । पुं॰ भूमि॰प्राच्यासु । पूर्वदेशस्थेषु ॥ पीयतइतिपानम् । कर्मणिल्युट् । सुरापानं येषाम् । पानन्देशे॰इ॰णत्वम् ॥
सुरापानम् । न॰ सुरापाने । मद्यपाने ॥ सुरायाः पानम् । भाभावकरणयोरितिपक्षे णत्वाभावब्राह्मीज्झितावेदनिन्दाकौटसाक्ष्यसुहृद्वध । गर्हितानाद्ययोर्जग्धि. सुरापानसमानिषट् ॥
सुराभाग । पुं॰ सुरायां । सुरायाअग्रभागे ॥
सुरामण्ड । पुं॰ सुरायाअग्रभागे । कारोत्तरे ॥ सुराया मण्डः ॥
सुरारि । पुं॰ दैत्ये ॥ सुराणाम् अरिः ॥
सुरारिहा । ) पुं॰ विष्णौ । श्रीहरौ ॥ सुरारीन्हन्ति ॥ सुरारीघातकः ॥
सुरारिहन्ता । )

सुरार्हम् । न॰ हरिचन्दने ॥
सुरालय । पुं॰ सुमेरुपर्वते ॥ स्वर्गे । सुराणामालय ॥ सुराणांनिलये ॥
सुराश्रय । पुं॰ इन्द्रे ॥
सुराष्ट्र । पुं॰ देशविशेषे । सूरत॰ इ॰ भा॰ प्र॰ ॥ शोभनोपवर्ते ॥
सुराष्ट्रज । पुं॰ कृष्णमुद्गे ॥ विषविशेषे ॥ न॰ तुवरिकायाम् । सौराष्ट्रमृदि ॥ सुराष्ट्रेजातम् जनौ॰ । सप्तम्यांजनेर्डः ॥ त्रि॰ तद्देशजाते ॥
सुराष्ट्रजा । स्त्री॰ तुवरिकायाम् । सौराष्ट्रयाम् ॥ टाप् ॥
सुराह्व । पुं॰ देवदारुणि ॥ मरुवके ॥ हरिद्रुवर्षे ॥

सुरी । स्त्री॰ देवाङ्गनायाम पुर सुरीणामभवत्खेवमानवी ॥

सुरुङ्ग । पु॰ शोभाञ्जने ॥

सुरुङ्गा । स्त्री॰ सुरुङ्गायाम् । सन्धिलायाम् । सन्धौ । सौध॰ कृ॰ प्र॰ खातविशेषे ॥

सुरुङ्गाहि । पु॰ सन्धिचौरे । कुजम्भिले ॥

सुरुच् । त्रि॰ अतिकमनीये ॥

सुरूप । त्रि॰ शोभनरूपयुक्ते । सुन्दरे । रुचिरे । मनोज्ञे । मनोरमे । शोभनं रूपं यस्य ॥ विदुषि । विपश्चिति । न॰ तूले ॥

सुरूपा । स्त्री॰ भार्ग्याम् । शालपर्ण्याम ॥ सुन्दर्याम । रुचिरायाम् । मनोरमायाम । शोभनरूपयस्या ॥

सुरूहक । पु॰ गर्दभाश्वे । कृ॰ हि॰ चन्द्र ॥

सुरेज्य । पु॰ वृहस्पतौ ॥

सुरेज्या । स्त्री॰ तुलस्याम् ॥

सुरेन्द्र । पु॰ इन्द्रे ॥

सुरेन्द्रजित् । पु॰ गरुडे ॥ सुरेन्द्रं जयति । जि॰ । क्विप् । तुक् ॥ इन्द्रजिति ॥

सुरेभ । पु॰ देववर्त्तनि ॥ शोभनशब्दे । न॰ रङ्गे । मृदङ्गे ॥

सुरेवट । पु॰ रामपूगे मुनिपूगे ॥

सुरेश । पु॰ भगवति । विष्णौ ॥ शिवे ॥ सुराणामीशः स्वामी ।

सुरेशलोक । पु॰ ब्रह्मलोके ॥ यथा । नयचर्वकुरुठकथासुधापगानसा धवोभागवतास्तदाश्रया । नयच यत्रशमदामदोत्सवा सुरेशलोको पिनवैसखीव्यतामितिदेवोभागवत ॥

सुरेश्वर । पु॰ इन्द्रे ॥ शिवे । श इराचार्यशिष्यविशेषे । वार्त्तिककारे ॥

सुरेश्वरी । स्त्री॰ दुर्गायाम् । मन्दाकिन्याम् ॥ सुराणामीश्वरी ॥

सुरेष्ट । पुं॰ वकवृक्षे । शिवमल्लाम् ॥ शाले ॥ सुरपुन्नागे ॥

सुरेष्टा । स्त्री॰ ब्राह्म्याम् ॥

सुरोत्तम । पु॰ सूर्य्ये ॥ त्रि॰ देवश्रेष्ठे ॥

सुरोत्तर । पुं॰ चन्दने ।

सुरोद । पु॰ सुरासिन्धौ । सुरासमुद्रे ॥ सुरा॰ उदकं यस्य । उत्तरपदस्य उदकस्योदादेश ॥

सुलक्षण । त्रि॰ शोभनलक्षणविशिष्टे ॥

सुलक्षणा । स्त्री॰ उमाया सखीविशेषे ॥

सुलभ । पुं॰ विष्णौ ॥ यथा । पत्रेषुपुष्पेषुफलेषुतोयेष्वक्रीतलभ्येषुसदैवसत्सु । भक्त्यैकलभ्ये पुरुषेपुराणे मुक्त्यैकथ नक्रियतेप्रयत्न इति महाभारतम् ॥ त्रि॰ अनायासप्राप्ये । सुखेनलभ्यते॰ इति । ईष

टु सुप्रिविलसिते : खल् ॥

सुलभा । स्त्री॰ तुलस्याम् ॥ धूम्रपत्रायाम् ॥ माषपर्ण्याम् ॥

सुललाट । त्रि॰ शोभनभालविशिष्टे । ललाटेयस्यदृश्यन्तेचतुस्त्रिद्व्येकरेखिकाश्चतु:शताबतुर्वर्षासौभाग्यविशिष्टे ॥

सुललितम् । न॰ मात्रावृत्तविशेषे ॥ द्विजवरयुगमिहरचयविलघुकगणमथकलय । सुललितकलितरसपदिसरसिजसुखिभवतियदि । अगलितविदितसुललितमितिवरफणिपतिरितिवदति ॥ यथा । प्रविचल कुवलयनयनजलनिधिकृतवरशयन । दितितनयनिवहदमनशमनविविधभयशमन । मयिवरमुपनयसुचिरमभिनवजलधररुचिर ॥ त्रि॰ अतिसुभगे ॥ सुकोमले ॥

सुलेखा । स्त्री॰ दुर्गायाम् ॥

सुलोचन । पुं॰ श्रीकृष्णे ॥ शोभनलोचन नयन • स्थान वाक्य ॥ मृगे । हरिणे ॥ त्रि॰ शोभननेत्रविशिष्टे ॥ शोभनेलोचनेयस्यस ॥

सुलोचना । स्त्री॰ सुनेत्रायाम् ॥ माधवराजपत्न्याम् ॥

सुलोमशा । स्त्री॰ काकजङ्घायाम् ॥ त्रि॰ शोभनलोमयुते ॥

सुलोमा । स्त्री॰ मांसच्छदायाम् ॥ ताम्रवल्याम् ॥

सुलोहकम् । न॰ पित्तले ॥

सुलोहित । पुं॰ सुन्दररक्तवर्णे ॥ त्रि॰ तद्वति ॥

सुलोहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥

सुवक्त्र । पुं॰ वनबर्बर्याम् । न॰ सुन्दरानने । त्रि॰ तद्वति ॥

सुवचनम् । न॰ सुप्रलापे । शोभनोक्तौ ॥ शोभन वचनम ॥

सुवचा । त्रि॰ वाग्मिनि ॥ सुष्ठुवक्ति । वच॰ । सर्वधातुभ्योऽसुन् ॥ यद्वा । मिथुनेऽसि । उपसर्गविशिष्टोधातुर्मिथुनम् । तस्मात्सोपपदादेऽसि । स्वरेभेद ॥

सुवदन । पुं॰ श्रीगणेशे । शोभनवदनमस्य ॥ त्रि॰ सुन्दराननवति ॥ न॰ शोभनानने ॥

सुवदना । स्त्री॰ सुन्दराननविशिष्टायानार्याम् ॥ अतिच्छन्द २० प्रभेदे ॥ ज्ञेयासप्ताश्वषड्भिर्म्रभनययुताभ्लौग सुवदना ॥ यथा । प्रत्याहृत्येन्द्रियाणित्वदितरविषयाप्नासाग्रनयना • त्वाध्यायन्तीनिकुञ्जे परतरपुरुष हर्षोत्थपुलका । आनन्दाश्रुप्लुताक्षीवसतिसुवदनायोगैकरसिका • कामारिर्न्त्यक्तकामानतुनरकरिपोराधाममसखी ॥ सुष्ठुशोभन वदनयस्या । सा ॥

सुवन । पु॰ दिवानाथे । सूर्ये ॥ व ह्नौ ॥ सूते॰ सूयतेवा । षूङ्प्राणि गर्भविमोचने । भूसूधूभ्रस्जिभ्य श्छन्दसीतिक्युन् ॥

सुवया . । स्त्री॰ प्रौढायाम् ॥

सुवर्च्चक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चला । स्त्री॰ सूर्यपत्नीविशेषे । मरुभायाम् । अतस्याम् ॥ ब्राह्म्याम् । आदित्यभक्तायाम् । हुलहुल॰ इ॰ प्र॰ शाके ॥ अस्यागुणा यथा । सुवर्च्चलाहिमारूक्षास्वादुपाकरसागुरुः । अपित्तलाकटुः क्षाराविष्टम्भकफवातजित् ॥ अन्यातिक्ताकषायोष्णासरारूक्षालघुः कटुः । निहन्तिकफपित्तास्रश्वासकासारुचिज्वरान् ॥ विस्फोटकुष्ठमेहास्रयोनिरुक्कृमिपाण्डुता ॥

सुवर्च्चस् । त्रि॰ दीप्तमति ॥ अतितेजस्विनि । शोभनवर्च्चोयस्यस. ॥

सुवर्च्चिक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चिका । स्त्री॰ जतुकायाम् । तरुवल्क्याम् । जतुकायाम् । निशान्यायाम ॥ सर्ज्जिकाप्रभेदे । सोरा॰ इ॰ भा॰ प्र॰ ॥ सुवर्च्चिकासर्ज्जिकावदोद्धव्यागुणतोजनैः ॥

सुवर्च्ची । स्त्री॰ सर्ज्जिकाक्षारे ॥

सुवर्ण . । पु॰ स्वर्णकर्षे । विस्तो । हेमाक्षे । शिव. षोडशमुमाषेषु ॥ षोडशभिर्माषैः. परिमितेपरिमाणविशेषे ॥ सुवर्णाली ॥ सुवर्णनामनिर्यासे ॥ धत्तूरे ॥ लङ्कादिद्वीपवत्॰ समुद्रान्तर्वर्त्तिनिद्वीपविशेषे ॥ कर्णगुग्गुलौ ॥ न॰ सोना॰ इ॰ भा॰ प्र॰ धातुश्रेष्ठे । तत्पर्य्याययथा । स्वर्णसुवर्णकनकहिरण्यहेमहाटकम् । तपनीयशातकुम्भगाङ्गेयभर्मकर्व्वुरम् ॥ चामीकरजातरूपमहारजतकाञ्चने । रुक्मकार्त्तस्वरजाम्बूनदमष्टापदोस्त्रियामिति ॥ तस्यधार्यत्वसर्वदेवतात्मकत्वञ्चोक्तं रामायणे॰ महाभारतेचपरशुरामप्रतिवशिष्ठवाक्यम् । सर्वरत्नानिनिर्मथ्यतेजोराशिसमुत्थितम् । सुवर्णमेभ्योविप्रेन्द्ररत्नंपरमनुत्तमम् ॥ एतस्मात्कारणाद्देवगन्धर्वोरगराक्षसाः । मनुष्याश्चपिशाचाश्चप्रयताधारयन्तितत् ॥ तथा । तस्मात्सर्वपवित्रेभ्य पवित्रंपरमस्मृतम् ॥ तथा । अग्निर्वैसकलादेवा . सुवर्णश्चतदात्मकम । तस्मात्सुवर्णंददतादत्ताः स्युः सर्वदेवताः । तस्मात्पादेनधार्यम् । अस्योत्पत्तिर्वह्नि॰ गुणाश्चस्वर्णेद्रष्टव्याः ॥ कृष्णागुरुणि ॥ हरिचन्दने ॥ स्वर्णगैरिके ॥ वित्ते । धने ॥ नागकेशरे ॥ पु॰ न॰ हेमाक्षे । षोडशमाषपरिमितेस्वर्णे ॥ त्रि॰

उत्कृष्टवर्णे ॥ शोभनोवर्णः स्तुतिर्वासुष्ठुवर्ण्यतेवा । वर्णवर्णने । घञ् । एरच् ॥

सुवर्णक । पु० आरग्वधवृक्षे ॥ पुष्पैः शोभनोवर्णोऽस्य ॥ न० पित्तले ॥

सुवर्णकदली । स्त्री० कनकमोचायाम् । चम्पकरम्भायाम् । चम्पाकेला० हू० भा० प्र० ॥

सुवर्णकार । पु० स्वर्णकारे ॥

सुवर्णकेतकी । स्त्री० हेमकेतक्याम् ॥

सुवर्णगैरिकम् न० गैरिकप्रभेदे । स्वर्णधातौ । सुरक्तके । सन्ध्याभ्रे । सानोमाटी० पीलागेरू० हू० भा० प्र० ॥ सुवर्णगैरिकन्त्वन्यत्ततोरक्ततरंहितत् । ततोगैरिकात् ॥ अस्यगुणाः । गैरिकमधुरशीतकषायव्रणरोपणम् । विस्फोटार्शोऽग्निदाहघ्नवरस्वर्णादिकशुभम् ॥

सुवर्णनकुली । स्त्री० महाज्योतिष्मत्याम् ॥

सुवर्णपुष्प । पु० राजतरुण्याम् ॥

सुवर्णप्रसरम् । न० एलवालुके ॥

सुवर्णमाक्षिकम् । न० स्वर्णमाक्षिके ॥

सुवर्णयूथी । स्त्री० सुगन्धायाम् । हेमपुष्पिकायाम् । सोनजुही० हू० भा० प्र० ॥

सुवर्णवणिक् । पुं० अम्बष्ठाद्वैश्यकन्यायाञ्जाते वर्णसङ्करजातिविशेषे । कश्चद्वणिग्विशेषस्तु संसर्गात्स्वर्णकारिणः । स्वर्णचौर्यादिदोषेणपतितोब्रह्मशापतः ॥

सुवर्णवर्ण । पु० विष्णौ । त्रि० रुक्मवर्णे ॥ सुवर्णस्येववर्णोऽस्य ॥

सुवर्णवर्णा । स्त्री० काञ्चन्याम् । हरिद्रायाम् ॥

सुवर्णबिन्दु । पु० विष्णौ हरौ ॥ बिन्दवोऽवयवाः सुवर्णसदृशाअस्य ॥ शोभनवर्णमक्षरम् बिन्दुश्च यस्मिन्मन्त्रे तदात्मकोवा ॥

सुवर्णा । स्त्री० स्वर्णक्षीर्याम् ॥ हरिद्रायाम् ॥ वाह्यालके ॥

सुवर्णाह्व । पु० नागकेशरे । धत्तूरे ॥

सुवर्णी । स्त्री० आखुपर्ण्याम् ॥

सुवर्त्तुलम् । न० कालिङ्गे ॥

सुवल्लि । स्त्री० सोमराज्याम् ॥ शोभनावल्लिरस्याः ॥

सुवल्ली । स्त्री० सोमराज्याम् ॥ कट्व्याम् ॥

सुवसन्त । पु० मधूत्सवे चैत्र्याम् ॥

सुवसन्तक । पु० वासन्त्याम् । मदनोत्सवे ॥

सुवह । त्रि० सुखवाह्ये ॥ सुखेन वहति । वह० । पचाद्यच् ॥ पु०

वाचो प्रभेदे ॥

सुवहा । स्त्री० गोधापद्याम् ॥ सुष्ठु वहत्यामोदम् । वह० । अच् । टाप् ॥ शल्लकीद्रुमे ॥ एलापर्ण्याम् । तुलस्याम् ॥ वीणायाम् ॥ रास्नायाम ॥ शेफालिकायाम् ॥ त्रिवृतायाम् ॥ नीलसिन्धुवारके ॥ रुद्रजटायाम् । हंसपद्याम् ॥ मुसल्याम् ॥

सुवास । पुं० शोभनगन्धे ॥ उत्तमनिवासे ॥

सुवासा । त्रि० । निर्मलवाससि ॥

सुवासिनी । स्त्री० ऊढाल्पवय स्त्रियाम् । चिरण्ट्याम् ॥ सुष्ठुतीव वसतिपितृगेहे० तच्छीला । सुव्यक्तावर्तिनि । सवीक्षा नार्थंवे । विवाहिताऽदेवेशिवाला एवकुमारिका । सुवासिन्योम ह्यप्रौढा । संशयोनास्तिसुव्रते । इति ॥

सुविक्रम । पु० सुष्ठुपादविन्यासे ॥ विक्रमस्यसौष्ठवनामगजसिंहादिगतिसदृशत्वम् । त्रि० तद्वति ।

सुविज्ञ । त्रि० अतिनिपुणे ॥

सुविज्ञेय । त्रि० सम्यग्ज्ञातुश क्ये ॥

सुविदत्रम् । न० कुटुम्बे ॥ सुष्ठुवेत्ति । विदज्ञाने । सुविदे कत्र ॥

सुविदित । त्रि० प्रख्याते ॥

सुविधि । पु० उत्तमविधाने ॥ अर्हद्विशेषे ॥

सुविनीत । त्रि० अतिविनयविशिष्टे

सुविनीता । स्त्री० सुकरायाम् ॥

सुवीजम् । न० खसखसे । त्रि० साधुवीजे ॥

सुवीर । पु० देशविशेषे । त्रि० सुष्ठुवीरे । शोभनाविविधाद्दूरागत येऽस्य ॥ शोभनवीर्यमिति ॥

सुवीरकम् । न० सौवीराञ्जने । पु० एकवीरवृक्षे ॥

सुवीरजम् । न० सौवीराञ्जने । सुवीरेजातम । जनी० । ड ॥

सुवीराम्लम् । न० काञ्जिके । सुवीरेषु० अभिषुतमम्लम । शाकपार्थिवादि ॥

सुवीर्यम् । न० बदरे ॥ उत्तमवीर्ये । त्रि० तद्वति ॥

सुवीर्या स्त्री० नाडीहिङ्गुनि ॥ वनकार्पास्याम ॥ महाशतावर्य्याम ॥

सुवृत्त । पु० शूरणे ॥ त्रि० सदाचारनिष्ठे । सुष्ठुवर्त्तुले । परिवर्त्तुले ॥

सुवृत्ता । स्त्री० काकलीद्राक्षायाम् । शतपत्र्याम ॥

सुवृष्टि । स्त्री० सम्यग्वृष्टिशोभनवर्षे ॥

सुवेगा । स्त्री० महाज्योतिष्मत्याम् ॥

सुवेल । पुं० त्रिकूटाचले ॥ त्रि०

प्रणते ॥ शान्ते ॥

सुवेश । पु॰ श्वेतेक्षौ ॥ त्रि॰ उचि तसृङ्गारसम्पन्ने ॥

सुव्रत : । पु॰ श्वौहरौ । शोभनव्रत मस्य । यथा । सकृदेवप्रपन्नायतवा स्मीतिचयाचते । अभयसर्वथात स्मै ददाम्येतद्व्रतममेति ॥ यद्वा । शोभनव्रतयतिभुङ्क्ते सुदामादत्त पृथुकादीनीति॰ सुष्टुव्रतयतिभो जनान्निवर्त्तेनरमारायणरूपेणतप श्चरन्निति वा । व्रताच्छोजनेनिवृत्तौ इति णिजन्तात्पचाद्यच् ॥ शिव मल्ल्याम् ॥ भाविकल्पीयार्हद्वि शेषे ॥ वर्त्तमानकल्पीयार्हद्विशेषे त्रि॰ शोभनव्रतयुक्ते । सद्व्रते ॥

सुव्रता । स्त्री॰ सुखसदोह्यायाङ्गवि ॥ शोभनव्रतमस्या ॥ सद्व्रतायाम् ॥ शच्याम् ॥ वर्त्तमानकल्पीयार्हं न्मातरि ॥

सुशर्म्मा । पु॰ भारतादिप्रसिद्धेक्षत्रि यविशेषे ॥ शोभनम्शर्मास्ति । ग्रु॰ । अन्येभ्योपिदृश्यतइतिमनिन् ॥ मिथुनेमनिरितिमनिर्वा ॥

सुशल्य । पु॰ खदिरे ॥

सुशाक : । पु॰ तण्डुलीये ॥ पिण्डा याम् ॥ चञ्चौ । पत्रशाकविशेषे । विजलायाम । चञ्चुपर्णे ॥ न॰ आर्द्रके ॥

सुशान्ता । स्त्री॰ कालिकापुराणप्रसि द्धायाम् शशिध्वजराजपत्न्यां ॥

सुशिख । पु॰ वह्नौ ॥ त्रि॰ उत्तम शिखादति ॥

सुशिखा । स्त्री॰ मयूरशिखायाम ॥

सुशीत : । पु॰ प्लक्षवृक्षे ॥ न॰ पी तचन्दने ॥

सुशीतलम् । न॰ गन्धतृणे ॥ वपु षि । खीरा॰ काकडी॰ इ॰ प्र॰ ॥ कर्त्तूर्णे ॥ त्रि॰ । अतिशीतगु णविशिष्टे ॥

सुशीता । स्त्री॰ शतपत्र्याम् ॥

सुशील : पु॰ विष्णोर्दूतविशेषे ॥ त्रि॰ सद्वृत्ते । शोभनशीलयुक्ते ॥ शोभनशीलयस्य स ॥

सुशीला । स्त्री॰ श्रीकृष्णस्याष्टमहि ष्यन्तर्गतमहिषीविशेषे ॥ इतिपद्म पुराणम् ॥

सुश्राव्यम् । न॰ नयरामयुधिष्ठिरा दौनांयशसि ॥ शोभनवाक्ये ॥

सुश्री : । त्रि॰ सुन्दरे ॥ शोभनाश्री र्यस्य ॥

सुश्रीक : । त्रि॰ शोभनश्रीविशिष्टे ॥

सुश्रीका । स्त्री॰ शल्लक्यां ॥

सुश्रुत : । पु॰ विश्वामित्रमुनिपुत्रे॰ चिकित्साशास्त्रकर्त्तरि ॥ चिकि त्साग्रन्थविशेषे । सुश्रुतेनकृतं तन्त्र सुश्रुत बहुभिर्युत . । तस्मात्तत् सुश्रुत नामविख्यातच्चितिमण्डले ॥

सुशुश्रुवान् । त्रि॰ सुश्रुतवति ॥ सृणी

दिनासन क्लिष्टादर्विरूपौष्ठ्यादि नासम्प्रसारणम् ॥

सुषुम्णा । स्त्री॰ नाडीविशेषे ॥ साच । इडापिङ्गलयोर्मध्यवर्त्तमाना॰ पृष्ठवंशान्तर्गतानाडी॰ सुषुम्णेत्युच्यते ॥ शोभन सुम्न सुखं यस्याम् ॥ पृ॰ ॥

सुषेण । पु॰ करमर्दे ॥ विष्णौ ॥ सुग्रीवश्वशुरे ॥ ताराया बालिभार्यायाः पितरि ॥ वेतसे ॥ शोभना सेना यस्य । एतिसञ्ज्ञायामगादिति षत्वम् । रषाभ्यामिति णत्वम् ॥

सुषेणिका । स्त्री॰ कृष्णत्रिवृतायाम् ॥ सुष्ठु सेनयति । सेनाशब्दात्॰ सत्यापपाशेतिणिच । पचाद्यच् । एतिसञ्ज्ञायामगादिति षत्वम् । णत्वम् । स्वार्थे कन् ॥

सुषवी । स्त्री॰ त्रिवृति ॥

सुषोमा । स्त्री॰ नदीभेदे ॥

सुष्ठु । अ॰ प्रशंसने ॥ अत्यर्थे ॥ सुतिष्ठति॰ सुस्थाने वा॥ ष्ठा॰ । अपदुस्सुषुस्थइतिकु । सुषामादित्वात्षत्वम् ॥

सुसंयत । त्रि॰ कृतसंयमे । यथाविधिसंयमविशिष्टे ॥

सुसंवृत । त्रि॰ सिद्धे ॥ अतिनिगूढे । आकारनिहारविहारयोगा सुसंवृताधर्म विदा तु कार्या ॥

सुसंस्कृत । त्रि॰ घृतादिनानाद्रव्ये णप्रयत्नेन सुपक्वव्यञ्जनादौ । प्रयत्ने ॥ सुष्ठु संस्क्रियते स्म । कर्मणि क्त । सम्परिभ्यामितिसुट् ॥

सुसस्थान । त्रि॰ शोभनाकृतौ ॥

सुसत्या । स्त्री॰ जनकभार्यायाम् ॥

सुसम्पत्॰द् । स्त्री॰ परभागे ॥

सुसम्भृष्ट । त्रि॰ अलङ्कृते ।

सुसह । त्रि॰ दु सहभिन्ने ॥

सुसाध्य । त्रि॰ सुकरे ॥

सुसार । पु॰ रक्तखदिरे ॥ मणिविशेषे ॥ त्रि॰ अतिशयसारवति ॥ शोभन सारोऽस्य ॥

सुसारवत् । न॰ स्फाटिके ॥

सुसिकता । स्त्री॰ शर्करायाम् ॥ शोभनवालुकायाम् ॥

सुसीमा । स्त्री॰ साधुसीम्नि ॥ हर्यश्वमातरि ॥

सुसेव । त्रि॰ सुष्ठु सेवितु योग्य ॥

सुस्थ । त्रि॰ नीरोगे । स्वस्थे ॥

सुस्थता । स्त्री॰ आरोग्ये ॥

सुस्थिर । त्रि॰ चाञ्चल्यरहिते । स्थिरतरे ।

सुस्ना । स्त्री॰ खञ्जकारी । खसारी॰ इ॰ प्र॰ शमीधान्ये ॥ सुस्नोदुर्गा लताहृद्याकषायाविषदागुरुरिति राजनिघण्ट ॥

सुस्नात । पु॰ यज्ञान्तस्नानकृति । त्रि॰ सुन्दररूपेणकृतस्नाने ॥

सुस्नातक: । पुं॰ शोभनस्नातके ।

र्थे ॥ शोभनोक्तिविशिष्टे ॥ वेदोक्तस्तोत्रमन्त्रादौ ॥

सूक्तवाक । पुं॰ इदं द्यावापृथिवी भद्रमभूदित्यादिके मन्त्रे ॥ सम्यगुक्ते । सुभाषिते ॥ सूक्तवक्ति । वच॰ । घञ् ॥

सूक्ता । स्त्री॰ चित्राख्याम् । शारिकायाम् ॥

सूक्ति । स्त्री॰ शोभनोक्तौ ॥

सूक्ष्म । पुं॰ अणौ ॥ कतके ॥ सूक्ष्मात्मनि ॥ जातिक्रियादिप्रवृत्तिनिमित्तशून्यत्वात् मनोवागगोचरे इन्द्रियाणामगोचरे परमात्मनि ॥ आत्मा सूक्ष्मोऽणुपरिमाणश्रुतिकथित् । तत्र । युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेः ॥ न॰ कैतवे । शाठ्ये । अध्यात्मे । सूक्ष्मशरीरे ॥ अलङ्कारविशेषे । यथा । कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते । धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥ कुतोऽप्याकारादिङ्गिताद्वा सूक्ष्मः स्थूलमतिसंवेद्यः । उदाहरणम् । वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥ अत्राकारमालोच्य कयापि वितर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं पुंसामेवकृपाणपाणितायोग्यत्वात् । यथावा । सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया । हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयश्च सिताकमलनिमीलनेन लीलया प्रतिपादितः ॥ त्रि॰ अल्पे । स्तोके ॥ इन्द्रियागोचरे ॥ सूच्यते । सूच पैशुन्ये । सूचि स्मक् ॥

सूक्ष्मकृष्णफला । स्त्री॰ मध्यमजम्बूवृक्षे ॥

सूक्ष्मतण्डुल । पुं॰ खसखसे ॥

सूक्ष्मतण्डुला । स्त्री॰ पिप्पल्याम् ॥

सूक्ष्मदर्शी । त्रि॰ पण्डिते ॥ कुशाग्रीयमतौ । प्रत्युत्पन्नमतौ ॥ विशेषज्ञे । इन्द्रियेभ्यः पराह्यर्था इत्यादिप्रकारेण सर्वविशेषसूक्ष्मतापारम्पर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलमस्य तस्मिन् ॥

सूक्ष्मदल । पुं॰ देवसर्षपे ॥

सूक्ष्मदला । स्त्री॰ दुरालभायाम् ॥

सूक्ष्मदारु । न॰ किलिञ्जे ॥ तनुकाष्ठे ॥

सूक्ष्मपत्र । पुं॰ धान्यके ॥ वनजीरके ॥ देवसर्षपे ॥ लघुबदरे ॥ सुरपर्णे ॥ वनबर्बर्याम् ॥ शोणितचूर्णे । ताम्रचूडे । कुक्कुरद्रौ । कुकुन्दरे । भा॰ कु॰ भा॰ द॰ ॥ बाबलहर्

। स्वर्णपुष्पे । न० पितुन्नके । सूक्ष्मैपर्णे ।

सूक्ष्मपत्रक । पुं० सूक्ष्मपर्णे ॥ स्वार्थे कः ।

सूक्ष्मपत्रा । स्त्री० क्षुद्रजम्बूम् ॥ जीवन्त्याम् । दीर्घपत्रायाम् । डोडाम् ॥

सूक्ष्मपत्रिका । स्त्री० शतपुष्पायाम् ॥ शतावर्याम् । क्षुद्रोपोदिकायाम् दुरालभायाम् । आकाशमांस्याम् ॥ लघुब्राह्म्याम् ॥

सूक्ष्मपत्री० स्त्री० आकाशमांस्याम् ॥

सूक्ष्मपर्णी । स्त्री० जीर्णदारुणि । जीर्णफलाम्याम् ॥ डोडाम् ॥

सूक्ष्मपर्णी । स्त्री० रामदूत्याम् । नागदन्तिकायां ॥

सूक्ष्मपिप्पली । स्त्री० वनपिप्पल्याम ॥

सूक्ष्मपुष्पी । स्त्री० यवतिक्तायाम् ॥ गर्भे॥

सूक्ष्मप्रपञ्च । पुं० हिरण्यगर्भे ॥

सूक्ष्मफल । पु० भूकर्बुदारे ॥

सूक्ष्मफला । स्त्री० तामलक्यां ॥

सूक्ष्मबदरी । स्त्री० भूबदर्यां ॥

सूक्ष्मभुवनाष्टकम् । न० अमरपुरविशेषु । यथा । सूक्ष्मासरपुराण्यष्टौ तुष्टोपैशाचमादितः । राक्षसं याक्षगान्धर्वं चैन्द्रसौम्यञ्च वर्हिमत् । सौम्य प्राजापत्यं ब्राह्म दीर्घमध्यमाश्रिवेति । शुचिकल्पे० सूक्ष्मभुवनाष्टकम् । तेषु पैशाचमादितञ्चाष्टौ पैशाचम् । ततो राक्षसादि । ब्राह्म० दीर्घपरमयाश्रयेति । मध्ये वर्हिमतो मा हेन्द्रादप्यतिशयाय । अधिकश्चाप्नि ॥ कृ० स्मृ० स० ता ॥

सूक्ष्मभूतम् । न० अपञ्चीकृताकाशादिभूते ॥

सूक्ष्ममर्कटक । पु० मशके ॥

सूक्ष्ममूला । स्त्री० जयायाम । वैजयन्तिकायाम् । जाह्न० कृ० प्र० पुष्पके । सूक्ष्ममूलमध्या ॥

सूक्ष्मबदरी । स्त्री० भूबदर्याम् ॥

सूक्ष्मवल्ली । स्त्री० जतुकायाम् ॥ ताम्रवल्ल्याम् ॥

सूक्ष्मवल्कम् । न० सूक्ष्मवल्कले ॥

सूक्ष्मबीज । पु० खसखसे ॥

सूक्ष्मव्रण । पु० क्षिणे ॥

सूक्ष्मशरीरम् । न० सप्तदशावयवे लिङ्गशरीरे ॥ विज्ञानमयमनोमयप्राणमयकोशा० ज्ञानेच्छाक्रियाशक्तिप्रधाना एतत्कोशत्रय मिलितसत्० सूक्ष्मशरीरमित्युच्यते । यथाह भगवती हिमाद्रि प्रतिदेवीगीतायाम् । ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च । प्राणादिपञ्चकञ्चैव धिया च सहितं मनः ॥ एतत्सूक्ष्मशरीरं स्यान्मम लिङ्गं यदुच्यते । इति । सूक्ष्मतत० शरीरञ्च ॥

सूची । स्त्री • सीवनसाधने ॥ नाट्ये काऽभिनयान्तरे । चक्षुदृष्टिविशेषायाम् ॥ स्त्रियां करणं ॥ सौव्य तेऽनया । षिव् तन्तुसन्ताने सिवेष्टे रूपेलिचट् । टित्वान्ङीप् ॥ वि• पिशुनइति• श्रीधरस्वामिन ॥

सूचीदल । पुं• सितावरे ॥

सूचीपत्रा । स्त्री• गण्डदूर्वायाम् ॥ जलस्थ याम् ॥

सूचीपाश । पु • सूचीबन्धनहेतुभूते छिद्रे ।

सूचीपुष्प । पु • केतक्यां ॥

सूचीमुख । पु • शुक्लदर्भे ॥ व्यूहविशेषे । न• हीरके ॥ नरकान्तरे ॥ त्रि• सूच्यास्ये ॥

सूचीरोमा । पु • शूकरे । त्रि• सूचीतुल्यरोमविशिष्टे ॥ सूचीसदृशानि रोमाणि यस्य स ॥

सूचीव्यूह । पु • सूच्याकारैर्व्यूहविशेषे ॥ पिपीलिकापङ्क्तिरिवाग्रवस्थानेन• सन्ततरूपतया• यत्र यत्र• सैनिकावस्थान• सूचीप्रवेशपुरुषमुख: सूचीव्यूह । तेनायतोभयेस्थितयायात् ॥

सूच्यग्र: । पु • खरच्छदे । उलूख० कु• गौ• दे• भा• प्र• तृणविशेषे ॥ न• दर्भे ॥ सूच्यग्रभागे ॥

सूच्यग्रस्थूलक । पुं• तृणविशेषे ॥ यथा । सूच्यग्रस्थूलकोदर्भोजूर्णाख्यश्च खरच्छद इति रत्नमाला ॥

सूच्यास्य । पु • मूषिके ॥ मशाकरकीटप्रभेदे ॥ त्रि• सूचीतुल्यमुखे ॥

सूच्याह्व । पु • सितावरे ॥

सूत । पु • सारथौ ॥ सुवर्णगमयतिस्त्रियाम् । क्षत्रियाद्गर्भाद्विप्रकन्यायां सूतो भवति जातितइति । अथ विप्रकन्यायां क्षत्रियात् जात्या धर्मदर्शनार्थम् । आद्यपर्यायवित्प्रस्याश्च सूतनामा समाजायते ॥ पितामहहैवस्य पृथोर्वैण्यस्य यज्ञे सूत्यासोमाभिषवभूमौ सौत्ये हनि समुत्पन्ना नारायणांश• पुराणानां वक्तारि । पौराणिके ॥ यथोक्तं विष्णुपुराणे । तस्यैव दिव्ये यज्ञे हुते तत्र पितामह । विष्णोरंशपृथुमस्यापरितोषं परं ययौ । तस्यैवोत्सवमानस्य यज्ञे पैतामहे शुभे । सूत सूत्यां समुत्पन्न: सौत्येऽहनि महामती ॥ तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागध । प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ । स्तूयतामेष नृपति: पृथुर्वैण्य: प्रतापवान् । इति १ अंशे १३ ऽध्याय: ॥ बन्दिनि ॥ सूर्ये ॥

षूङ्प्राणिगर्भविमोचने । प्राणिप्रसवे वा । सूङ् क्रि॰ । यादवे । सूर्ये ।

सूरी । पु॰ पण्डिते । विदुषि । सूरः सूर्योऽस्त्युपास्यत्वाऽस्य । अतइनिठनावितीनि ॥ न॰ धूमी ॥

सूरी । स्त्री॰ कुन्त्याम् । पृथायाम् ॥ सूर्यपत्नी । पुंयोगादितिङीष् । सूर्यतिष्यागस्त्येतियलोप ॥ राजसर्षपे । राजिकायाम् ॥

सूर्क्षणम् । न॰ आदरे ॥ सूर्क्ष आदरे । ल्युट् ॥

सूर्म्य । पु॰ माषे ॥

सूर्प । पुं॰ प्रस्फोटने ॥ शोधितभाजने ॥ कुम्भपरिमाणे । द्रोणद्वयपरिमाणे । इति वैद्यकपरिभाषा ॥ सर्त्ति । गतौ । सृपृभ्यामूङ्चेतिदशपादीस्थपाठात्प ॥

सूर्पणखी । स्त्री॰ रावणस्य भगिन्याम् ॥ सूर्पशोधितभाजनम् । नख विदूषणे । सूर्पवच्छोधितभाजने नखाद्यादिसत्त्वानि यस्या नखयतिदूषयतीति सूर्पणखी ॥

सूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥ पूर्वपदादिति णत्वम् ।

सूर्पारकम् । न॰ तीर्थविशेषे । रामतीर्थे ॥

सूर्म्मी । स्त्री॰ अयःप्रतिमायाम् ॥ शोभनार्म्मि । बहुव्रीहिर्वा । सर्वतोऽक्तिन्नर्थादिति॰ गौरादित्वाद्वा ङीष् ॥ सूर्म्मी ज्वलन्तीमाश्लिष्येन्मृत्युवे गुरुतल्पग ॥

सूर्य्य । पु॰ अर्कपर्णे ॥ सूरे । अर्यम्णि । आदित्ये । तपने । सवितरि । रवौ ॥ अस्याष्ट्यादिभिः पूजोक्ता वराहपुराणे । यथा । उदयाद्रि स्ततः सूर्यं यस्तु भक्त्या नरो दिज । दध्यक्षताञ्जलिभिस्तं तद्भि पूजयेच्छुचिः । तस्याभाव प्रपन्नस्याशुभं यत् समुपार्जितम् । तत्क्षणादेव निर्दग्धं भस्मीभवति तत्क्षणादिति ॥ रश्मीनाम्प्रकाशनारसानाञ्च स्वीकरणात् सूर्य ॥ यद्वा । सरत्याकाशे । सृ॰ । कर्त्तरिक्यप । निपातनादुत्वम् । तपरकरणवलितिदीर्घ ॥ यद्वा । सुवति॰ कर्म्मणि लोकं प्रेरयति । षू प्रेरणे । कर्त्तरिक्यप् । निपातनात्क्यपि रुडागमः । उभयत्र राजसूयसूर्येत्यादिना निपातनम् ॥ सूतेजगत् तिसर्वं जगदिति वा । षूङ् प्राणिगर्भविमोचने । पूर्ववन्निपातनम् सर्वावभासके ॥ पौर्णमासीचन्द्रे ॥ यथा । परीतन्तु दिवा प्रोक्तं विपरीतन्तु शर्वरी । पौर्णमासीगतश्चन्द्रः सूर्य इत्यभिधीयतइति ॥

सूर्य्यकान्त । पु॰ अग्निमणौ । अग्निगर्भे । सूर्यमणौ । सूर्याश्मनि । पुष्पवृक्षविशेषे । सूर्यमणौ

सूर्य्यभक्ता । स्त्री० सुवर्च्चलायाम् । आदित्यभक्तायाम् । हुलहुल० इ० भा० ॥

सूर्य्यमणि । पु० सूर्य्यकान्तमणौ ॥ पुष्पवृक्षविशेषे । पचत्पुटे । पुष्परक्ते ॥

सूर्य्यमण्डलम् । न० अर्कबिम्बे ॥ सूर्य्यस्य मण्डलम् ॥

सूर्य्यमण्डलभेदी । पुं० परिव्राजि । योगिनि यश्चरणेऽभिमुखो भूत्वा हतस्तस्मिन् ॥

सूर्य्यमता । स्त्री० आदित्यभक्तायाम् ॥

सूर्य्यमुखी । स्त्री० सूरजमुखीति ख्याते पुष्पवृक्षे ॥ सूर्य्यमुख्याः हरित्स्फोटयोनिरक्तक्रिमिपाण्डुताम् । अर्कद्युतिरोग ॥

सूर्य्यलोक । पु० सौरभुवने ॥

सूर्य्यवंश । पु० सूर्य्यसन्ताने ।

सूर्य्यसञ्ज्ञम् । न० कुङ्कुमे ॥

सूर्य्यसारथि । पु० अरुणे ।

सूर्य्यहृदयम् । न० सूर्य्यस्तवविशेषे ॥

सूर्य्या । स्त्री० सूर्य्यस्य देवतायाम् योषिति सूर्य्यस्यादेवता । सूर्य्यदेवतायाञ्चाप् । इन्द्रवारुण्योषधौ । विशालायाम् ॥ नवोढायाम् ॥

सूर्य्यार्घ्यम् । न० सूर्य्यसम्प्रदानकार्घ्ये ॥

सूर्य्यालोक । पु० आतपे ॥

सूर्य्यावर्त्त । पु० हुलहुल० इति प्रसिद्धक्षुपविशेषे । सुवर्च्चलायाम् ॥ सूर्य्यावर्त्तौ विवस्वद्य ॥ सुवर्चिनर० इ० गौ० दे० भा० प्र० शाकविशेषे अस्यपथ्यम् ॥ यथा । पार्व्वतेयश्वकरभौवशिर कपिपिप्पलौ । आमातासौकथितप्रोक्ता सूर्य्यावर्त्त. सितोऽपरइतिरत्नमाला ॥ वराहकालीकथित सूर्य्यावर्त्तस्तुशान्दिकोरिति रावणौ शिरोरोगविशेषे ॥ यथा । सूर्य्योदय याप्रतिमन्दमन्दमक्षिभ्रुवरुक समुपैति गाढम् । विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तो विनिवर्त्तते च ॥ शीतेनशान्तिलभते कदाचित्दुष्णेन जन्तु सुखमाप्नुयाद्वा । सर्व्वात्मकं कष्टतमं विकारसूर्य्यावर्त्तं समुदाहरन्ति ॥ सूर्य्योदयमितिव्याख्यारभ्येति यावत् । सूर्य्यावर्त्तौ० सूर्य्यस्याधोगतौ ॥ इति ॥

सूर्य्यावर्त्ता । स्त्री० आदित्यभक्तायाम् ॥

सूर्य्याश्मा । पुं० सूर्य्यकान्तमणौ ।

सूर्य्याह्व । सूर्य्यवेटके ॥ सूर्य्याह्वेकालाटहरितौसमाविति त्रिकाण्डशेष ॥

सूर्य्याह्वम् । न० ताम्रे ॥ पु० अर्कवृक्षे ॥ त्रि० सूर्य्यनामके ॥

सूर्य्येन्दुसङ्गम । पु० दर्शे । अमा

हिंसासर्पे क्विन् ॥ अग्नौ । पुं॰ स्त्री॰ वज्रे ॥ सृणिः स्त्रियामि त्यमरः । सृणि. स्यादङ्कुशेपुमा निति शब्दार्णवः । तीक्ष्णभयं तिरोयमङ्कुशे ॥ सरतिगच्छति ॥ अनयाया । सृ॰ । सृवृषिभ्यां किदितिनि ॥

सृणिका । स्त्री॰ लालायाम् ॥ सृका यामन् ॥

सृणीका । स्त्री॰ लालायाम् ॥ सर ति । सृ॰ । सर्तेर्णुक्चेति॰ ईक न् ॥

सृत । वि॰ गते ॥ सृधातौ क्त प्रत्ययेननिष्पन्न ॥

सृतिः । स्त्री॰ गमने ॥ मार्गे ॥ सरत्यनया । सृगतौ । क्तिन् ॥ सृकायाम् । कुत्सितयांमृढ अनप सरणायांगतौ ॥

सृत्वा । पु॰ विसर्पे ॥ पञ्चिव्वि हगौ ॥ प्रजापतौ । सरति । सृ॰ । शीङ्शीत्यादिना क्वनिप । तुक ॥

सृत्वर । वि॰ गमनशीले ॥ सरति तच्छील । सृ॰ इण्नशजिस र्तिभ्य ' क्वरप् ॥

सृत्वरी । स्त्री॰ गमनकर्त्रीम् ॥ टिड्ढेतिङीप् ॥

सृदर । पुं॰ । सर्पे ॥

सृदाकु । पु॰ वायौ ॥ वज्रे ॥ ज्वलने ॥ अग्नौ ॥ प्रतिसूर्ये ॥ दावाग्नावितिहैम ॥ सरत्यत्र थंम । सृ॰ । सर्तेर्दकुचेति काकुप्रत्यय ॥

सृदाकु । स्त्री॰ नद्याम् ॥

सृपाट । पु॰ सृपाट्याम् ॥

सृपाटिका । स्त्री॰ चञ्च्वाम् ॥

सृपाटी । स्त्री॰ माने । गौरादित्वा न्ङीष् ॥ रत्नधारीयाम् ।

सृप्रः । वि॰ गतौ । प्रविष्टे ॥

सृप्यमाण । वि॰ पच्यमाने ॥ सृ प्यमाणपर्यायस्मिन्पतञ्जपरिगा खगा ॥

सृप्र । पु॰ चन्द्रे । निशाकरे ॥ सर्पति । सृप्लृगतौ । स्फायि तञ्चिवञ्चिशकीक्षादिनारक् ।

सृमर । पु॰ मृगविशेषे ॥ यस्य शीलवाल कान्तासमाश्च्य म्रियते सचमरिवाकृतिर्भवति । सरणशील । सृगतौ । सृघसद क्मरच् ।

सृष्ट । वि॰ निर्मिते । रचिते । युक्ते ॥ निश्चिते ॥ प्रचुरे । प्राप्ये । भूषिते ॥ मुक्ते । त्यक्ते । सर्जनम । सृज॰ । भावेक्त ॥

सृष्टि । स्त्री॰ सर्गे । निर्माणे । नि र्मितौ ॥ स्वभावे । त्यागे ॥ सर्जनम् । सृज॰ क्तिन् । सृ ज्यतेइतिकर्मणिवाक्तिन् ।

सृष्टिप्रदा । स्त्री॰ गर्भदात्रीक्षुपे ॥

महासेने । षडानने । गुहे । स्कन्दे ॥ सेनाया वाहिन्याः पति ॥

सेनामुखम् । न० तिसृषुपत्तिषु ॥ यथा । एकेभैकरथाव्यश्वापत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्यायथोत्तरम् ॥ सेनामुखगुल्मगणौवाहिनीपृतनाचमूः । अनीकिनीदशानीकिन्यक्षौहिणीति । तेन सेनामुखे० हस्ती ३ । रथाः ३ । अश्वाः ९ । पदातयः पञ्चदश समस्तसङ्ख्या ३० भवन्ति । एतत्परिमाणपरिमिता सेना सेनामुखमुच्यते । सेनायामुखमुपक्रमः ॥

सेनारक्ष । पुं० सैनिके । प्रहरिकादौ । पहरिया० इ० भा० प्र० ॥ सेनांरक्षति । रक्षपालने । कर्म्मण्यण् ॥

सेनिका स्त्री० वर्णवृत्तविशेषे ॥ हारमण्डलकुण्डलेनमण्डितायापयोधरेणवीणयाङ्किता । रूपनूपुरेणचापिहृद्यभासेनिकाभुजङ्गराजवल्लभा ॥ यथा । सायुधाष्टबाहुराजिमण्डिता रत्नपीठरत्नपानपण्डिता । चण्डमुण्डशुम्भदम्भखण्डिका मङ्गलानिनोददातुचण्डिका ॥

सेपुरम् । न० वाह्लीकग्रामविशेषे ॥

सेरः । पुं० तुरुष्कपरिभाषितमाने। कप्रसिद्धसप्तत्याविष्कारपरिमाणविशेषे ॥ यथा । पादोनगद्याणकतुल्यटङ्कैर्द्विसप्ततुल्यैः कथितोऽत्र सेरइतिलीलावती ॥

सेराह । पुं० पीयूषवर्णाश्वे ॥ स तु दुग्धवर्णोऽतिवर्णः । इ० हेमचन्द्र ॥

सेव । पुं० सेवने । सेवते । सेव० पचाद्यच ॥ न० सेविफले ॥ यथा । मुष्टिप्रमाणं वदरं सेवमाहुर्भिषग्वराः । सेवं समीरपित्तघ्नं वृंहणं कफकृद्गुरु । रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् ॥

सेवकः । पुं० प्रसेवे ॥ त्रि० अनुजीविनि परिचर्म्मणि । परिकरे । भृत्ये । सेवाकर्त्तरि ॥ स्निग्धः स्थिरश्चवलवान् सेवायां सेवकोमतः ॥ अन्यप्रभुसन्निधौ प्रश्नकरणमसत्वं यथा ॥ किङ्कर किङ्करो नापि समर्थः प्रष्टुमीश्वरम् । यो यत्सेवानिरतः स कः पृच्छति तं विना ॥ सेवते । सेवसेवने ण्वुल् ॥

सेवकालु । पुं० दुग्धपुच्छायाम् । निशाभङ्गायाम् । दुग्धपेया० इ० गौ० भा० प्र० हद्दे ॥

सेवती । स्त्री० कुमार्याम् । भर्त्तृदार्याम् । तरुण्याम् ॥

सेवनम् । न० उपास्तौ । चित्तानुवृत्तौ । सेवनायाम् ॥ सूच्यादि

नावश्यादिसेवने । कृती । षि
वुतन्तुसन्तानि ल्युट् ॥ सेवसेव
नेवा ।
सेवना । स्त्री॰ परिचर्यायाम् । सेवा
याम् ॥
सेवनी । स्त्री॰ सूच्याम ॥ शरीरावय
वसंयोगविशेषे ॥ यथा । सेवन्य
स्सप्तताःसान्तुभवेयु पञ्चमस्तके ।
एकाशिफसिजिह्वायामेकाविवर्जन
ता क्वचिदितिभावप्रकाश ॥
सेवन्ती । स्त्री॰ शतपत्र्याम् ॥
सेवा । स्त्री॰ । सेवने । भक्तौ ॥ से
व्यचित्तानुवृत्तौ । सर्वभावेनसेव्या
नुकूलकारितायाम् । अवलम्बे ॥ वे
तनग्रहणेनाज्ञाकरणसेवेतिव्याख्या
तार । सेवातुदीनहृष्टसन्दर्शन
स्वामितर्जनोच्चक्रियादिधर्म्मयो
गात् ॰श्ववृत्तिर्भवति । ब्राह्मणे
नसाचकार्या । सेवाश्ववृत्तिराख्या
तातस्मात्तांपरिवर्ज्जयेदितिमनुवच
नात् ॥ सेवनम् । सेव॰ । गुरोश्च
लघ्व्य । टाप ॥ सेवनमाराधन
मुपभोगश्चाश्रयणञ्चेति । यथा । विष्णु
सेवते॰ सुखसेवते॰ तीर्थंसेवतेसा
धुरिति ॥ परस्मैपदप्यत्तु । नीच
सम्बन्धमपिसेवतिनीचएव । स्वाधी
नैविभवेष्वपीनरपतिंसेवतिकिमा
निन ।। इत्यादुदाहरन्ति ॥
सेवि । न॰ सेवे । सेविते । मुष्टि

प्रमाणबदरे ॥
सेविका । स्त्री॰ दुग्धपक्वाल्पपिष्टके ।
सिमई॰ सेवीं॰ इ॰ भाषा॰ प्र॰
॥ यथा । समितावर्त्तिका स
ल्पासुसूक्ष्मायवसन्निभा । शुष्का
क्षीरेषसाध्या भोज्याघृतसिता
न्विता ॥ सेविकातर्पणी बल्या
गुर्वीपित्तानिलापहा । याहिणी
सन्धिकृद्रुच्यातावदेवातिमाष
या ॥
सेविकामोदक । पु॰ लडुकविशे
षे । सेवकालडू॰ इ॰ भा॰ प्र॰ ॥
तत्प्रक्रियायथा । घृताव्ययासमि
तयाकृत्वासूत्राणितानितु । नि
पुणोभर्जयेदाज्ये खण्डपाकेनयोज
येत् । युक्तेनमोदकान्कुर्यात्तेषु
णेमंठकायथा ॥
सेवितम् । न॰ सेविबदरे । सैंधवे
॥ त्रि॰ समुपासितेगुर्वादौ । वरि
वसिते ॥ अनुष्ठिते ॥ उपभुक्ते ॥
आश्रिते ॥
सेव्य । पु॰ अश्वत्थवृक्षे ॥ हि
ज्जलद्रुमे । न॰ उशीरे । वीरण
मूले ॥ त्रि॰ सेवार्हे ॥ सेवि
तुमर्हे । विहसेवने । यत् ॥
सेव्या । स्त्री॰ वन्दाके ॥
सैंह । त्रि॰ सिंहसम्बन्धिनि ॥ सिं
हस्याऽयम् । अण् ॥
सैंहली । स्त्री॰ सिंहपिप्पल्याम् ।

सर्पदण्डायाम् । कुकुव्याम् ॥ त्रि० सिंहलद्वीपजे ॥

सैंहक । पु० राहौ ॥ इ० श० र० बली ॥

सैंहिकेय । पु० विधुन्तुदे । राहौ । स्वर्भानौ । सिंहिकायाअपत्यम् । ढक् ॥

सैकतम् । न० वालुकामयतटे । सिकतामये ॥ त्रि० सिकतामये । सिकतावति । सिकतिले । सिकता सन्त्यस्मिन् । सिकताशर्कराभ्या ञ्चेतमत्वर्थेऽण् ॥ सिकतेवचा । शर्कराद्यण् ॥

सैकतिक । पु० सन्न्यस्ते ॥ क्षपणके । न० मङ्गलसूत्रे ॥ त्रि० भ्रान्तिजीविनि । सन्देहजीविनि ॥

सैकतेष्टन् । न० आर्द्रके ॥ त्रि० सैकतिलप्रिये ॥

सैतवाहिनी । स्त्री० नदीविशेषे । बाहुदायाम् ॥ सितानिवाहानियस्या जुनस्य तस्ययम् । तस्येदमित्यणि टिड्ढेतिङीप् ॥ यद्वा सितस्य अर्जुनस्येयसैतो । सैतीवासीवाहिनी नदीच ॥

सैद्धान्तिक । त्रि० सिद्धान्तज्ञे ॥

सैनापत्यम् । न० सेनापतेः कर्मणि ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ यद्वा । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ सेनापतिसम्बन्धिनि ॥ सेनापतेः कर्म० सेनापतेरिदं वा ॥

सैनिक । पु० सेनारक्षे । प्रहरकारी ॥ सेनांरक्षति । रक्षतीति ठक् ॥ सैन्ये । सेनायांसमवेते ॥ सेनांसमवैति । सेनायावैतिरयोऽभावे० ठक् ॥

सैन्धव । पु० अश्वभेदे ॥ सिन्धुदेशजाश्वे ॥ सिन्धुरभिजनोऽस्य । सिन्ध्वादित्वादण् ॥ पु० न० लवणोत्तमे । माणिमन्थे । सिन्धुजे ॥ अस्य गुणायथा । सैन्धवलवणं स्वादुदीपनपाचनलघु । स्निग्धरुच्यहिमवृष्य सूक्ष्मनेत्र्य त्रिदोषहृत् । सैन्धवंद्विविधञ्चैयसितरक्तमिति क्रमात् । रसवीर्यविपाकैस्तुगुणाढ्य चाधितंसितम् ॥ अपिच । पूर्वोक्तयावलवणानांप्रायशोलवणंस्मृतम् । शूलानाह्विबन्धघ्न लवणं सैन्धवंपरम् ॥ त्रि० सिन्धुदेशभवे । सिन्धुजे ॥ सिन्धुजातो भवो वा ॥ तक्षादिभ्यश्च व्यञ । अणजौ चेतथा ॥ पु० सिन्धुदेशे ॥ स्वार्थेऽण् । लङ्काप्रदेशमारभ्यमक्कान परमेश्वरि, सैन्धवाख्योमहादेश पर्वतेतिष्ठतिप्रिये ॥

सैन्धी । स्त्री० तालादिमद्ये । तालायाम् ॥ सैन्धीशीताकषायाम्लापि

सोमसिन्धुः। पु० राहुमूर्द्धभिदि। विष्णौ॥

सोमसुता। स्त्री० नर्मदानाम्॥

सोमसूत्रम्। न० देवालयाज्जलनिर्गमस्थाने॥ यथा। शिवप्रदक्षिणे मर्त्त्यो अर्द्धचन्द्रक्रमेण तु। सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत्॥

सोमाह्वयम्। न० रक्तोत्पले॥

सोमाल। त्रि० कोमले॥

सोमाश्रम। पु० तीर्थविशेषे॥

सोमेश्वर। पु० काश्मीरमण्डलस्थ प्रतिष्ठितेश्वरे॥

सोमोद्भवा। स्त्री० रेवायाम्। नर्मदायाम्॥ सोमात् सोमवंशजात् पुरूरवसउद्भवतिनामगन्धर्वात्॥ यद्वा। सोमोऽमृतमुद्भवत्यस्याः स्वर्गप्रदत्वात्। अप॥ सोमाद्रुद्राद्भवतिवा। पचाद्यच्॥ सोमोद्भविशेष उद्भवोयस्याः॥

सौम्य। पु० जपदोनभेदे॥ त्रि० प्रियदर्शने॥ सौम्यरूप। ध्यानादिस्थोर्थ॥

सोरठा। स्त्री० मात्रावृत्तान्तरे। स तु सोरठा दूनप्रमाणसुरगपतिरितिच दर्शितं। यदिदं विपरीतमिदं जलनखं दिमुदस्तपनशति॥ यथा। चक्रिन वक्षसुनिधिनीलमसलकामलवदसौ पनम्। सत्वतपश्चादिमदापिमधु मधीन भवमोचनम्॥

सौखृत्य। पु० सौखृत्ये॥

सौखृत्यम्। न० स्तोचपूर्वं दुहकी। सुतिपूर्वक दुर्वादे। समुपवत्या दिवोधकवाक्ये॥ सुकृति। सु ठ भासके प्रतिघातेच। ष्यञ्। सु सठनेनसहितम्॥

सौखृत्योक्ति। स्त्री० सव्यथोक्तौ॥

सौकर्य्यम्। न० अनायासे॥ सुकर स्यक्रियायाम्॥

सौकुमार्य्यम्। न० मार्द्दवे॥

सौक्ष्म्यम्। न० सूक्ष्मतायाम्॥ सूक्ष्मस्यभावः। ष्यञ्। चसङ्गत भावे। गुणविशेषे॥ यथा सद्रूपस्य यत्स्थानसौक्ष्म्यमुच्यते

सौखरात्रिक। त्रि० सुखरात्रिप्रश्नकर्त्तरि॥ सुखरात्रिं पृच्छति। पृच्छतौ सुस्नातादिभ्यइति ठक्॥

सौखशायनिक। त्रि० सुखशयनप्रश्नकर्त्तरि॥ सुखशयनं पृच्छति। पृच्छतौ सुस्नातादिभ्य इतिठञ्। च सुखशाये॥

सौखसुप्तिक। त्रि० वैतालिके। वैतालिका बोधकराअर्थिका सौखसुप्तिकाः इ० अमरः।

सौखिक। त्रि० सुखार्थिनि। सौखीनर्तिभाषाप्रसिद्धे। म० भा० राजधर्म०॥

सौख्यम्। न० सुखे। सुखमेव। स्वार्थे ष्यञ्। यत्किञ्चिदपि कुर्वीत।

कन्। टिट्ढाणञिति ङीप्॥

सौप्तिकम्। न॰ रात्रिमारणे। रात्रियुद्धे॥ महाभारतस्य पर्वविशेषे॥ त्रि॰ सुप्तसम्बन्धिनि॥

सौभम्। न॰ खसञ्चारिपुरे॥ हरिश्चन्द्रपुरे॥

सौभगम्। न॰ सुभगत्वे॥

सौभद्रः। पु॰ सुभद्रातनयेऽभिमन्यौ॥ सुभद्राया अपत्यम्। बह्वाभ्यो नदीमानुषीभ्यश्चत्पण्॥ सङ्ग्रामविशेषे॥ सुभद्राप्रयोजनमस्य। सङ्ग्रामे प्रयोजनयोधृभ्यश्चत्पण्। ग्रन्थविशेषे॥ सुभद्रामधिकृत्य कृतो ग्रन्थः। अधिकृत्य कृते ग्रन्थे॰ चत्पण्॥ त्रि॰ सुभद्रासम्बन्धिनि॥

सौभद्रेयः। पु॰ अभिमन्यौ॥ सुभद्राया अपत्यम्। स्त्रीभ्यो ढक्॥ विभीतकवृक्षे॥

सौभरम्। न॰ सामविशेषे॥

सौभरिः। पु॰ पुराणप्रसिद्धे परमहंसे। मुनिविशेषे। *

सौभागिनेयः। पु॰ सुभगासुते॥ सुभगाया अपत्यम्। कल्याण्यादीनामिनङ् इति ढक्॰ इनङादेशश्च। हृद्भगेत्युभयपदवृद्धिः॥

सौभागिनेयी। स्त्री॰ सुभगात्मजायाम्॥

सौभाग्यम्। न॰ विष्कम्भाद्यन्तर्गतयोगविशेषे॥ तज्जातफलं यथा। सौभाग्यजन्मा सुभगो मनुष्यः स्त्रीणां जनानां धनवान् गुणज्ञः। उदारचित्तो बलवान् विवेकी महाभिमानी प्रियभाषणश्चेति॥ सिन्दूरे॥ टङ्कणे॥ सुभगत्वे। तल्लक्षणं यथा। अल्पनिद्रोऽल्पभुग्वाग्मी मितभाष्यनसूयकः इति॥ सुभगस्य कर्म भावो वा। ष्यञ्। हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः॥ व्रतविशेषे॥

सौभाग्यकरणम्। न॰ वाक्पटुतौ॥ यथा। सार्वजन्य सुभगत्वमिच्छतः कुर्यात् सकलस्य वदेत् परोक्षम्। प्राप्नोति दोषानसतोऽपि कांश्चित् परस्य यो दोषकथां करोति॥

सौभाग्यचिन्तामणिः। पुं॰ सारकौमुद्युक्तौषधविशेषे॥

सौभाग्यशुण्ठी। स्त्री॰ पाकविशेषे। यथा। नागरस्य पलान्यष्टौ घृतदेयञ्च तत्समम्। क्षीरं द्विप्रस्थसंयुक्तं खण्डस्यार्द्धशतपलम्॥ पचेन्मृद्वग्निना सम्यक् यथा पाको भवेत्तदा। चूर्णं दद्यात् त्रिजातस्य त्रिकटोश्चापि पलोन्मितम्॥ भक्षयेत् प्रातरुत्थाय शुचिर्भूत्वा समाहितम्। सूर्यावर्त्तहनुस्तम्भमन्यास्तम्भगलग्रहम्॥ अर्द्धावभेदकं हन्याद्बलीपलितनाशनम्। अम्लपित्तप्रशमनं सौभाग्यकरमुत्तममिति पाकावली॥

सौभ्रात्रम्। न॰ सुभ्रातृणां भावे॥ यु

आदित्वादण् ॥
सौमदत्ति : । पुं॰ नृपविशेषे । भूरिश्रवसि ॥ सोमदत्तस्याऽपत्यम् । अतइञ् ॥
सौमनसा । स्त्री॰ जातिपत्र्याम् ॥
सौमनसायनी । स्त्री॰ जातिपत्र्याम् । मालतीपत्रिकायाम् । जाविश्री ० श॰ भा॰ प्र॰ ॥
सौमनस्यम् । न॰ शोभनमनोभवे ॥ कुसुमसमूहे ॥ श्राद्धेपिण्डदाना नन्तरब्राह्मणहस्ते पुष्पदानमन्त्रे
सौमनस्यवान् । त्रि॰ प्रीतिमति ॥
सौमनस्यायनी । स्त्री॰ मालतीकलिकायाम् ॥ यथा । मालतीपुष्पकलिकासौमनस्यायनींविदुरितित्रिकाण्डशेष : ॥
सौमिक : । पुं॰ सोमरससाध्येऽग्निष्टोमादियागे ॥
सौमिकी । स्त्री॰ दीक्षणीयेष्टौ ॥ श॰ द्दे॰ चन्द्र ॥
सौमित : । पुं॰ लक्ष्मणे ॥
सौमित्रि । पु॰ रामानुजे । लक्ष्मणे ॥ सुमित्रायाअपत्यम् । बाह्वादित्वादिञ् ॥
सौमी । स्त्री॰ ऋग्विशेषे ॥ सोमो देवताऽस्याः । सोमाट्ट्यण् । ङीप् । यलोपः ॥
सौमेधिक । पुं॰ सिद्धे ॥
सौमेरव । त्रि॰ सुमेरुसम्बन्धिनि ॥
सौमेरुकम् । न॰ सुवर्णे ॥
सौम्य । पुं॰ सोमात्मजे । बुधे ॥ वत्सरविशेषे ॥ तत्फलयथा । सुभिक्षक्षेममारोग्यसुखञ्चनिरुपद्रवम् । सौम्यवृष्टिर्भवेद्राजासौम्ये सौम्यंप्रकीर्त्तितमिति ॥ ४३ ॥ भास्करे ॥ द्रुतिधरणीविप्रे ॥ उदुम्बरवृक्षे ॥ भूखण्डविशेषे ॥ कृच्छ्रव्रतविशेषे ॥ न॰ मृगशिरोनक्षत्रे ॥ तीर्थविशेषे ॥ करमध्ये सौम्यतीर्थम् ॥ त्रि॰ मनुष्ये ॥ साधौ ॥ मनोज्ञे ॥ सोमदैवते ॥ सोमदेवसौम्य । शाखादिभ्योय । तत्र प्रत्ययः ॥ सोमो देवताऽस्या । सोमाट्ट्यण् । यद्वा । सोमइवसौम्य । तत्रचतुर्वर्णादित्वात्ष्यञ् ॥
सौम्यकृच्छ्र । पुं॰ व्रतविशेषे ॥ यथा । पिण्याकाचामतक्राम्बुसक्तूनांप्रतिवासरम् । एकैकमुपवासश्चकृच्छ्र सौम्योयमुच्यते ॥
सौम्यगन्धी । स्त्री॰ शतपत्र्याम् ॥
सौम्यग्रह । पु॰ शुभग्रहे ॥ यथा । अदृश्चीर्णिनृहक्सौरारा पापा : सौम्यास्तथापरे । पापयुक्तोबुध : पापौराहुकेतूचपापदौ ॥
सौम्यता । स्त्री॰ प्रियदर्शनतायाम् ॥
सौम्यत्वम् । न॰ सौमनस्ये ॥ स

वंशीकर्कटिकेविल्वे ॥ प्रतिविट्टधा विलवी ॥

सौम्यधातु । पुं॰ कफे । श्लेष्मणि ॥

सौम्यवपुः । न॰ अनुग्रवशरीरे ॥

सौम्या । स्त्री॰ अनुग्रायाम ॥ मनोज्ञायाम् ॥ दुर्गायाम् । गौर्यम् ॥ मालपर्ण्याम् ॥ महाज्योतिष्मत्याम् ॥ गुञ्जायाम् ॥ उत्तरदिशि ॥ ब्राह्म्याम् ॥ मल्लिकायाम् ॥ रुद्रजटायाम् ॥ शट्याम् ॥ महेन्द्रवारुण्याम् ॥ महिषवल्ल्याम् ॥

सौम्या । स्त्री॰ बहुत्वे॰ मृगशिरशिरःस्थासु पञ्चतारकासु । इल्वलासु ॥

सौम्यायनम् । न॰ उत्तरायणे ॥

सौर । पु॰ शनैश्चरे ॥ मासविशेषे । सूर्यैकराशिभोगावच्छिन्नेमासि ॥ यथा । आदित्यराशिभोगेनसौरोमास प्रकीर्त्तितइति । एकस्मात्सङ्क्रमाद्यासङ्क्रान्ति सौरोभिधीयतइतिच ॥ दिनविशेषे ॥ वर्षविशेषे । तुम्बुरुवृक्षे ॥ त्रि॰ सूर्यसम्बन्धिनि ॥ न॰ उपपुराणविशेषे । त्रि॰ सूर्योपासके ॥ सूर्यस्यार्कस्यायम् । तस्येदमित्यण् ॥

सौरज । पुं॰ तुम्बुरुवृक्षे ॥ फलविशेषे । त्रि॰सौरजाते ॥

सौरदिनम् । न॰ सौरदिवसे ॥

सौरनक्तम् । न॰ व्रतविशेषे ॥ यथा । हस्तयुक्तेऽर्कदिने सौरनक्तसमाचरेत् । स्नात्वार्कंसमभ्यर्च्य नीरोगो बहुजीवति ॥ आत्मनोद्विगुणच्छाया यदास्यात्तदतीरवि । सौरनक्तं विजानीयान नक्तंसुनिशिभोजनमितिनारसिंहे ६४ अध्याय ॥

सौरभम् । न॰ कुङ्कुमे । वोले । सुगन्धितायाम् ॥ विषमहस्तान्तरे ॥ अयमुद्दतासदृशमेवपद्दलिहत्तीयमन्यथा । जायतेरनभगैर्यंषितं कथयन्तिसौरभमिदंतदीदृशम् ॥ यथा । परिभूतकुङ्कुमतपत्त्रवनविस्तृतगर्वविभ्रमा । काश्मीरहरतीह हरिमुखपद्मसौरभकणातशङ्किता ॥

सौरभेय । पु॰ वृषे ॥ सुरभ्याअपत्यम । स्त्रीभ्योढक् ॥

सौरभेयी । स्त्री॰ माहेय्याम् । गवि । उस्रायाम् ॥ सुरभ्या . अपत्यम् । ढक् । ङीप् ॥

सौरभ्यम । न॰ मनोज्ञत्वे । सौगन्ध्ये । सुगन्धितायाम् ॥ गुणगौरवे । पु॰कुबेरे ॥

सौरमास । पुं॰ सूर्यैकराशिभोगावच्छिन्नकाले ॥ यथा । एकराशौरविर्यावत्कालमास समास्थाय । अयषडभि सौरमासैरयन परिकीर्त्तितम् ॥

सौरसम्वत्सर । पु० सूर्यकृतद्वादशराशिभोगावच्छिन्नकाले । यथा । सौरसम्वत्सरस्यान्ते मानेन शशिजेन तु एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥

सौरसेन । पु० देशविशेषे । यथा । मागधाद्दक्षिणेनैव तु किञ्चित्पश्चिमतः स्थिते । सौरसेनाभिधो देशः सूनवो यत्र कापय ॥

सौरसेय । पु० कार्त्तिकेये । स्कन्दे ॥ सुरसायामपत्ये ॥

सौरसैन्धव । त्रि० गङ्गासम्बन्धिनि ॥ सुरसिन्धोरयम् । अण् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः ॥

सौराष्ट्र । पु० देशविशेषे ॥ कोङ्कणात्पश्चिमतीर्थे समुद्रप्रान्तगोचरम् । हिङ्गुलाजान्तको देवि दशयोजनदेशकः । सौराष्ट्रदेशो देवेशि सत्यात्गुर्जराभिधः ॥ कुन्दुरुकी ॥ न० कांस्ये ॥

सौराष्ट्रकम् । न० पञ्चलौहे ॥

सौराष्ट्रमृत्तिका । स्त्री० काश्याम् । तुवर्याम् । फट्करी० इ० भा० प्र० ॥

सौराष्ट्रा । स्त्री० तुवर्याम् ॥

सौराष्ट्रिकः । पु० विषभेदे । सौमल्खार० सङ्खिया० इ० भा० प्र० ॥ सुराष्ट्रविषयेऽप्यात्सौराष्ट्रिक उच्यते ॥ त्रि० सुराष्ट्रदेशविशेषभव । अध्यात्मादित्वात् ठञ् ॥

सौराष्ट्री । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ स्फटिकायां तुवरा सर्वसौराष्ट्र्यपि कीर्त्तिता ॥ सुराष्ट्रे भवा । अण् । ङीप् ॥ सौराष्ट्रीकफपित्तघ्नी विसर्पव्रणनाशिनी ॥

सौरि । पु० शनैश्चरे । शनियमे ॥ सूरस्यार्कस्यापत्यम् । अत इञ् ॥ श्रीकृष्णे ॥ सूरो यादवेन्द्रस्यानपत्यौ तिमधुमाधवौ । सर्ववसुदेवस्यापि ता । तत्प्रत्यया० सौरि कृष्ण । अपत्यं पितामहादेरागत्यगस्त्यादिना अतः इञ् ॥ आदित्यभक्तायाम् ॥

सौरिकः । पुं० स्वर्गे ॥ न० सुरानिमित्तधने ॥

सौरिरत्नम् । न० नीलमणौ ॥

सौरी । स्त्री० रश्मौ । सूर्यकान्ते ॥ सूर्यस्येयम् । अण् । ङीप् । सूर्यतिष्येतियलोपः ॥

सौव । त्रि० स्वकीये ॥ स्वस्येदम् । अण् ॥

सौवर्चलम् । न० सर्जिकाक्षारे ॥ सुवर्चलाया इदम् । तस्येदमित्यण् ॥ सञ्चर० इ० प्र० सवर्ण । कृष्णलवणे । पर्णे । रुचिके । सुष्ठु वर्चन्ते । वर्चदीप्तौ । इगुपधलक्षणः ।

वादिशब्दितवराङ्गीस्तनयुगमुपधत्तेय
त्सुखमालिङ्गनतदिति ॥

स्तनितम् । न॰ गर्जिते । मेघनिर्घो
षे ॥ स्तनगदोदेशब्दे । भावेक्त
॥ त्रि॰ शब्दिते ॥

स्तनितफल॰ । पु॰ विकङ्कटवृक्षे ॥

स्तन्यम् । न॰ दुग्धे ॥ स्तनेभवम् ।
शरीरावयवाद्यत् ।

स्तब्ध । त्रि॰ साभिमाने । अविनी
ते । अप्रगल्भभावे । अनम्रे । गु
रुदेवतादिष्वप्यनम्रे ॥ स्तम्भिते ।
जडीकृते ॥ स्तम्भ॰ । क्त ॥

स्तब्धरोमा । पुं॰ वराहे । सूकरे ।
घोषिनि ॥ स्तब्धानि॰ अनम्राणि
रोमाणियस्य ॥

स्तम्ब । पुं॰ गुल्मे । स्कन्धरहित॰
अप्रकाण्डद्रुमे ॥ तृणवल्यादिगुच्छे
॥ व्रीह्यादीनामप्रकाण्डे ॥ आला
ने ॥ तिष्ठति॰ अथवा । ष्ठा॰ ।
स्थस्तोम्बजवकाविच्छम्बच्॰ तिष्ठ
ते स्तादेशश्च ॥ तृणादौ ॥

स्तम्बक । पु॰ स्तम्बे ॥ स्वार्थे॰ या
वादिभ्य॰ कन् ॥

स्तम्बकरि: । पुं॰ धान्ये ॥ स्तम्बङ्
करोति । स्तम्बशकृतोरिन् । व्री
हिवत्सयोरितिवक्तव्यम् ॥ त्रि॰ ब
हुस्तम्बे ॥

स्तम्बकार । पु॰ गुच्छकारके ॥

स्तम्बघ्न । पु॰ स्तम्बघ्ने ॥

स्तम्बघन॰ । पुं॰ स्तम्बघ्ने । तृणादि
गुच्छोन्मूलनसाधने ॥ स्तम्बस्तुश
ब्दघन॰ स्तम्बोयेननिहन्यते॰ कृत्य
मर॰ । स्तम्बश्च वीरुध । सहन्य
तेयेन । स्तम्बेकचेत्यप् घनादेशश्च
भादेश॰ ॥ नीवारादिग्रहणार्थं ल
लवंशपात्रे ॥

स्तम्बघ्न । पुं॰ तृणादुन्मूलकखनि
त्रादौ । स्तम्बघने ॥ स्तम्बोहन्यते॰
येन । स्तम्बेकचेतिक॰ ॥ नीवारा
दिग्रहणार्थं लवंशपात्रे ॥

स्तम्बपू । स्त्री॰ पुरीभेदे । तामलि
प्ते । विष्णुगृहे । तमोलुक॰ कृ॰
भा॰ प्र॰ देशि ॥

स्तम्बहननम् । } न॰ स्तम्बघ्ने ॥
स्तम्बहननी । } स्त्री॰

स्तम्बेरम । पु॰ दन्तिनि । दन्ताव
ले । कुभे । स्तम्बेरमते । रमु॰ । स्त
म्बकर्णयोरमिजपोरित्यच् । हस्ति
सूचकयोरितिवक्तव्यम् । अन्यत्र
स्तम्बेरन्ता । तत्पुरुषेकृतीति॰
हलदन्तादितिवाऽलुक् ॥

स्तम्भ: । पु॰ स्थूणायाम् । थम्ब॰
भा॰ ॥ जडत्वे । अङ्गजाड्ये ॥ स्त
भ्नाति । स्तम्भुविधने । पचाद्यच्
भाविघञ्वा ॥ गतिनिरोधे । नि
ष्क्रियतायाम् ॥ गर्वे ॥

स्तम्भकर । पु॰ वेष्टने । त्रि॰ स्थूणा
कारके ॥ जाड्यकारके ॥

यतायाम् । गुरुणाभिच्यमाणया व्यासमादिकमनिष्टतायामितिया वत ॥ निम्नये ॥

स्त्येन । पु० चोरे ॥ अमृते । सुधायाम् । स्त्यायति । स्त्ये० । श्या स्त्याशब्दसंघातयोश्च ॥

स्त्री० । स्त्री० स्तनकेशवत्याम् । अस्या पर्यायायथा । स्त्रीयोषिदबला योषानारीसीमन्तिनी-वधूः । प्रतीपदर्शिनीवामावनितामहिला तथेति ॥ स्त्यायतिगर्भोऽस्याम् । स्त्ये० । स्त्यायतेड्रट् । टिल्लोप । यलोप । टिड्ढेतिङीप ॥ वृषकर्कान्याशश्चिकमकरमीनराशिषु ॥ अस्युकथ मेदे ॥ गौस्त्री । यथा । शैपस्त्रीभि । कृष्णोरेमे ॥ देवतिर्यङ्मनुष्येषुपुंनामाभगवान्हरि । स्त्रीनाम्नीलक्ष्मीमैत्रेयनानयोर्विद्यतेपरमितिविष्णुपुराणम् ॥ प्रजनार्थंमहाभागा पूजार्हागृहदीप्तय । स्त्रिय श्रियश्चगेहेषु नविशेषोस्तिकश्चन ॥

स्त्रीकरण । न० रतबन्धे ॥

स्त्रीगवी । स्त्री० धेनौ ॥

स्त्रीचित्तहारी । पु० शिवी ॥ त्रि० नारीमनोहारिणि ॥

स्त्रीचिक्रम् । न० भगे । योनौ ॥ स्त्रीणामवाच्यदेशश्चिह्नमाङौषधस्य च । भगेदेपिमगोमेद्रोस्मर : प्राये

णवज्यते । ब्रह्मखण्ड विधाभिश्चमपार्गोद्वारधूपितम् । येरमन्ते नमस्तेभ्य साहसिकमत परम् ॥ नारीलक्षणे ॥ स्त्रिया चिक्रम्

स्त्रीचेष्टितम् । ट० स्त्रीणाव्यवहारे ॥ गासास्त्वातिविषमचेष्टितत्त्वसुक्तं यथा । यद्दर्भणवेणीविनिगूहितेनविदूरथवैमहिषीजघान । विषप्रदिग्धेनचनपुरेणदेवीविरक्ताकिलकाशिराजमिति । तच्चान्यत्रवितर्कवब्रह्मवैवर्त्तं प्रकृतिखण्डे १४ ऽध्याये द्रष्टव्यम् ॥

स्त्रीचौर । पु० कामुके । रतहिण्डके ॥ त्रि० योषिद्धर्त्तरि ॥ स्त्रिया चौर ॥

स्त्रीजित । पु० स्त्रैणे । स्त्रीवशीभूते ॥ वस्तुगत्यास्त्रीजितोयोनिन्दित सर्वथैवहि । यथा । सनिन्दितसाप्यशुचिश्च पुमांश्चस्त्रियाजित । निन्दन्तिपितरोदेवाबान्धवा । स्त्रीजितनरम ॥ स्त्रीजितमनसामातापिताभ्रातासनिन्दतीति ॥ अपिच । शुध्येद्विप्रोदशाहेनजातकेमृतकेयथा । भूमिपोद्वादशाहेन वैश्य पञ्चदशाहत । शूद्रोमासेनवैदेशुमात्रवद्भीमसङ्कर । अशुचि स्त्रीजित शुध्येच्चितादग्धमजावत ॥ नग्नहृष्णीस्वयातस्य पितर पिण्डतर्पणम् । नग्नहृष्

न्ति वटेवाश्वत्थपुष्पजलादिकम् ॥ ज्ञानेनापि किं तपसा जपहोमप्रपूजनैः । विष्णवाचैवयशसा स्त्रीभिर्यै श्चमनोहरमिति श्रीदेवीभागवते तुलस्युपाख्यानम् ॥ तत्र स्वर्गोऽपि निषिद्धः । यथा । स्त्रीजितस्य च मात्र पार्वं पुण्यं प्रणश्यति । न भूमौ पातकी पापात् पापिनां स्त्रीजितात् परः ॥ इति । स्त्रियाजितः ॥

**स्त्रीधनम्**, न० स्त्रीस्वत्वास्पदीभूतधनम् । यस्मिन् धने पतिनिरपेक्षतया स्त्रिया अधिकारस्तत् धनम् ॥ तद्विधा । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति ॥ मनुश्च । अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ नारदोऽपि । अध्यग्न्यध्यावाहनिकं भर्त्तृदायस्तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥ याज्ञवल्क्यः । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् ॥ तदेवमव्यवस्थितसंख्यस्त्रीधनकीर्त्तनात् षट्त्वसंख्या विवक्षिता । किन्तु स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि । तदेवं स्त्रीधनं यत्र दत्तं स्वातन्त्र्येण दानविक्रयभोगान् कर्त्तुमधिकरोति । तदिदं किञ्चित् संक्षिप्य कात्यायनेन । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः । भर्त्तुः स्वाम्यम्भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतम् । अन्यत इति । पितृमातृभर्त्तृकुलव्यतिरिक्तात् । यत्तत्र शिल्पेन वा यदर्जितम् तत्र भर्त्तुः स्वाम्यम् स्वातन्त्र्यम् । अनापद्यपि भर्त्ता ग्रहीतुमर्हति । तेन स्त्रिया अपि धनमस्त्रीधनमस्वातन्त्र्यात् । एतद्व्यतिरिक्तधनन्तु स्त्रिया एव दानाद्यधिकारात् ॥ कुलार्णवसंतौ श्रीमहानिर्वाणे श्रीसदाशिवः । पितृभिः श्वशुरैर्वापि दत्तं यद्धर्म्मसम्मतम् । स्वकृत्योपार्ज्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितमिति ॥ स्त्रियाः । धनम् ॥ न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णव इति दायभागः । प्रभविष्णवः प्रभवः ॥

**स्त्रीधर्म्मः**, पुं, ऋतौ । पुष्पे । आर्त्तवे । रजसि ॥ स्त्रीणामनुष्ठेये ॥ तत्र मनुः । बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्यं गृहेष्वपि ॥ बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने । पुत्राणां भर्त्तरि प्रेते न भजेत्

स्त्रीसन्ततम् ॥ पित्राभाचासुते वापिनेच्छेद्विरहमात्मनः । एषांहिविरहेणस्त्रीगर्ह्येकुर्यादुभेकुले ॥ सदाप्रहृष्टयाभाव्यं गृहकार्येषुदक्षया । सुसंस्कृतोपस्करयाव्ययेचामुक्तहस्तया ॥ यस्मैदद्यात्पिताम्वेनांभ्राताचानुमतेपितुः । तंशुश्रूषेतजीवन्तं संस्थितं चनलङ्घयेत् ॥ मङ्गलार्थंस्वस्त्ययनंयज्ञश्चासांप्रजापतेः ॥ प्रयुज्यतेविवाहेषुप्रदानंस्वाम्यकारणम् ॥ अनृतावृतुकालेचमन्त्रसंस्कारकृत्पतिः । सुखस्यनित्यंदातेहपरलोकेचयोषितः ॥ विशीलः कामवृत्तोवागुणैर्वापरिवर्जितः । उपचर्यः स्त्रियासाध्व्यासततंदेववत्पतिः ॥ नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषितम् । पतिंशुश्रूषतेयेनतेनस्वर्गेमहीयते ॥ पाणिग्राहस्यसाध्वीस्त्रीजीवतोवामृतस्यवा । पतिलोकमभीप्सन्तीनाचरेत्किञ्चिदप्रियम् ॥ कामन्तुक्षपयेद्देहंपुष्पमूलफलैः शुभैः नतुनामापिगृह्णीयात्पत्यौप्रेतेपरस्यतु ॥ आसीतामरणात्क्षान्ता नियताब्रह्मचारिणी । योधर्मएकपत्नीनांकाङ्क्षन्तीतमनुत्तमम् ॥ अनेकानिसहस्राणिकुमारब्रह्मचारिणाम् । दिवंगतानिविप्राणामकृत्वाकुलसन्ततिम् ॥ मृतेभर्तरि साध्वीस्त्रीब्रह्मचर्येव्रतेस्थिता । स्वर्गंगच्छत्यपुत्रापियथातेब्रह्मचारिणः ॥ अपत्यलोभाद्यातुस्त्रीभर्तारमतिवर्तते । सेहनिन्दामवाप्नोतिपतिलोकाच्चहीयते ॥ नान्योत्पन्नाप्रजास्तीहनचाप्यन्यपरिग्रहे । नद्वितीयश्चसाध्वीनांक्वचिद्भर्तोपदिश्यते ॥ पतिंहित्वापकृष्टंस्वमुत्कृष्टंयानिषेवते । निन्द्यैवसाभवेल्लोकेपरपूर्वेतिचोच्यते ॥ व्यभिचारात्तुभर्तुः स्त्रीलोकेप्राप्नोतिनिन्द्यताम् । शृगालयोनिंप्राप्नोतिपापरोगैश्चपीड्यते ॥ पतिंयानाभिचरतिमनोवाग्देहसंयता । साभर्तृलोकमाप्नोतिसद्भिः साध्वीतिचोच्यते ॥ अनेननारीवृत्तेनमनोवाग्देहसंयता । इहाग्र्यांकीर्तिमाप्नोतिपतिलोकंपरत्रच ॥ इतिमानवे धर्मशास्त्रे ५ अध्याय ॥

स्त्रीधर्मिणी । स्त्री० ऋतुमत्याम् ॥ स्त्रीधर्मोरजोऽस्त्यस्याः । अतइनिठनावितीनिः । ङीप् ॥

स्त्रीधव । पुं० पुरुषे ॥

स्त्रीपर । पु० कामुके । विद्गे ॥

स्त्रीपण्योपजीवी । पु० सम्भोगार्थंमत्स्यैः स्त्रियंदत्त्वातद्वेतनोपजीविनि ॥

स्त्रीपुंसौ । पु० २ मिथुने । दम्पत्योः ॥ स्त्रीचपुमांश्च । अचतुरेत्यच् ॥

स्त्रीपुंसलक्षणा । स्त्री० पेटायाम् ॥

ग्राध्यसौ । स्थण्डिलेकुशाद्यास्तीर्य्य शेते । अते० इतिणिनि ॥

स्थण्डिलसितकम् । न० वेद्याम् ॥ कू० श्र० स्तौ ॥

स्थण्डिलेशय । पुं० स्थाण्डिले ॥ अतेनस्थण्डिलेशेते । शीङ्० अधिकरणेशेतेरित्यच् । अलुक् ॥

स्थपति । पु० बृहस्पतौ । बृहस्पति सवकर्त्तरि । जीवेष्टियाजके । स मीप्यतोक्ष्या स्थपतिरित्यमरः । स यक्षेतिसम्बन्ध ॥ कुबेरे । कञ्चुकिनि । सौविदे । यक्ष्वनि ॥ का रुभेदे । शिल्पिविशेषे । राज० था बो० कू० भा० प्र० ॥ तदुक्तञ्च यथा । वास्तुविद्याविधानज्ञोलघुह स्तोजितश्रम । दीर्घदर्शीचशूरश्च स्थपति परिकीर्त्तित इति ॥ स्थान स्थ । सुपिस्थ इत्यच० स्थ इतियोगविभागात्क । स्थस्य पति । यद्वा । तिष्ठन्त्यस्मिन् । स्था० । घञर्थेक । स्थस्यासौपति स ॥ त्रि० अससमे ॥

स्थपुट । त्रि० विषमोन्नते ॥ विष मसञ्चारणीबिनि ॥

स्थलम् । न० अकृत्रिमभूमा गो । स्थल्याम् ॥ स्थलति । स्थल० । पचाद्यच् ॥ वस्त्रगृहे ।

स्थलकन्द । पु० वनाम्यकन्द । वन सोलकिमाशाप्र० ॥

स्थलकमलम् । न० स्थलपद्मे ॥

स्थलकुमुद । पु० करवीरे ॥ कू० रा० नट ॥

स्थलपद्म । पुं० मानके । मान कच० कू० भा० । न० पुष्प प्रभेदे । छत्रपत्रे । तमालके ॥ प्र पौण्डरीके ॥ स्थलपद्मसाधुपुष्प इत्युक्तत्पुण्डरीयकमितिरभस ॥

स्थलपद्मनी । स्त्री० स्थलपद्मे ॥

स्थलपाकम् । न० पक्वमांसविशेषे ॥ यथा स्थलेनपक्वश्चन्मांसतज् ज्ञेयं स्थलपाकम् ॥

स्थलमञ्जरी । स्त्री० अपामार्गे ॥

स्थलविहङ्गम । पु० मयूरादौ ॥ स्थलस्थविहङ्गम ॥

स्थलशृङ्गाट । )<br>
स्थलशृङ्गाटक । ) पु० गोक्षुरे ।

स्थलसीमा । पु० स्थण्डिले ॥

स्थला । स्त्री० पुरुषेणकृतायां भूमौ । स्थलति । स्थल० । प चाद्यच् । टाप् ।

स्थली । स्त्री० अकृत्रिमायाम्भूमौ ॥ जानपदेतिङीष् ॥

स्थलेरुहा । स्त्री० घृतकुमार्य्याम् । दग्धास्त्रे । त्रि० स्थलजाते । स्थलेरोहति । रुह० । इगुपधेति क । तत्पुरुषेकृतीत्यलुक् ॥

स्थलेशय । पु० मृगादौ ॥ स्थ लेशेते । अधिकरणेशेतेरितिश्रोङो

। तिष्ठन्त्यस्मिन्नित्यस्मात् व्युत्पत्त्या क्वचित्स्थानशब्दोऽर्थवाची । नि कटे । स्वधर्मानुष्ठायिनामसम्यग्व र्त्तिनाञ्च स्थानविशेषप्राप्तिर्यथा । वर्णानामाश्रमाणाञ्च सम्यग् धर्मानु पालिनाम् । असम्यग्वर्त्तिनालोकान् ब्रह्मा चक्रे यथाचयत् ॥ प्राजा पत्य ब्राह्मणानास्मृत स्थान क्रिया- वताम् । क्षत्रियाणांतथाचेन्द्रं संग्रा मेष्वनुवर्त्तिनाम् ॥ वैश्यानांमा रुत स्थान स्वधर्ममनुवर्त्तिनाम् । गान्धर्वं शूद्रजातीनां परिचर्यानुका रिणाम् ॥ अष्टाशीतिसहस्राणांय तीनामूर्ध्वरेतसाम । स्मृत तेषान्तु यत्स्थान तदेवगुरुवासिनाम् ॥ स प्तर्षीणाञ्चयत्स्थान स्मृत तद्वनौक साम् । प्राजापत्य गृहस्थान गृहध र्मानुवर्त्तिनाम् ॥ न्यासिनान्तुपर स्मृतयोगिनामस्मृतं स्मृतम् । ए कान्तवासिनांब्रह्मध्यायिनांपरम प दम ॥ तामिस्रमन्धतामिस्रं महा रौरवरौरवम् । असिपत्रवन घोर कालसूत्रमवीचिमत् ॥ वेदनिन्द कानान्तुयज्ञव्याघातकारिणाम् । स्थानमेतत्समाख्यात स्वधर्मविनि वर्त्तिनाम् ॥ इतिवह्निपुराणे सर्ग कथननामाध्याय ॥

स्थानक्रम् । न० आलवाले ॥ नगरे ॥

स्थानचञ्चला । स्त्री० बर्बरायाम् ॥

स्थानच्युत । त्रि० स्थानभ्रष्टे । यथा । स्थानस्थितस्यपद्मस्यमित्रौवरुण भास्करौ स्थानच्युतस्यतावेवौ दर्शीषणकारकौ ॥ इतिग० पु० ॥

स्थानपाल । पु० स्थानरक्षके ॥

स्थानभ्रष्ट । त्रि० पदच्युते ॥ यथा । स्थानस्थितानि० पूज्यन्ते पूज्य न्तेचपदंस्थिता । स्थानभ्रष्टानपू ज्यन्तेकेशादन्तानखानरा ॥ इति गारुडेऽध्याय ११५ ॥

स्थानाध्यक्ष । ) स्थानिक । ) त्रि० स्थानरक्षके ॥

स्थाना । त्रि० स्थानविशिष्टे । स्थानौ वति ॥

स्थानीयम् । न० पुर्याम् । पत्तने । निगमे । नगरे ॥ प्राकारादिनाद्रु र्गं योजनविस्तीर्णनगर स्थानीयम । ख्यातयशितम् । तस्मै हितमि ति० क्र ॥ त्रि० ।नभवे ॥ स्था नसम्बन्धिनि ॥

स्थाने । अ० कारणार्थे । हेतौ । यु क्ते ॥ सादृश्ये । सास्ये स्थानस्यक रणम । स्थानशब्दात्० तत्करोती तिणिजन्तादेप्रत्यय ॥

स्थापक । त्रि० आपनकर्त्तरि ॥ स्था पयति । स्था० । णिजन्तात्ण्वुल् ॥

स्थापत्य । पुं० राज्ञास्त्र्यागारेषवीर अधिकृते । सौविदल्ले । कञ्चुकि नि ॥ तिष्ठन्त्यस्मिन्पुरुषा । घञर्थे

क । स्थानाद्वाराधिपति । पालक । स्थपतिरेव । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ॥ न० स्थपतेर्भावे ॥

स्थापनम् । न० रोपणे । निवेशने ॥ प्रसवने ॥ समाधौ ॥ स्थितिहेतुप्रयत्ने ॥ स्थापयति । छा० । ल्युट् ॥

स्थापना । स्त्री० स्थापने । निवेशने ॥ मनुष्याद्याश्रयत्वे ॥

स्थापनी । स्त्री० पाठायामोषधौ ॥

स्थापित । त्रि० निश्चिते । न्यस्ते ।

स्थाप्य । त्रि० रक्षितधने । न्यस्तधने ॥

स्थाम । न० सामर्थ्ये ॥ तिष्ठत्यनेन । छा० । सर्वधातुभ्यो मनिन् ॥

स्थायी । पु० भावभेदे । रत्यादिभावेषु यथा । रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा । जुगुप्सा विस्मयश्चमौ स्थायिभावाः प्रकीर्त्तिताः ॥ समवेय समुद्भूत स्वात्मा यत्र वर्त्तते । भाव स्थायी स विज्ञेयो व्यभिचारीतरोऽन्यथेति ॥ त्रि० स्थिरे । स्थितिमति ॥ यो हि राजा स्वदेशे दुर्गं कृत्वा तिष्ठति स स्थायीत्युच्यते ॥ तिष्ठति । छा० । या स्थादित्वाण्णिनि । आतो युक् चिण्कृतोरिति युक् ॥

स्थायुक । पु० एकग्रामाध्यक्षे ॥ स्थानशीलमस्य । छा० । लषपतपदस्थभूवृषित्युकञ् ॥ त्रि० स्थिरे ।

स्थालम् । न० स्वर्णादिनिर्मितभोजनपात्रे । थाल इ० भा० प्र ॥ तिष्ठत्यत्र । छा० । स्थाचतीभ्यालच् ॥

स्थाली । स्त्री० ओदनादिपचनपात्रे । पिठरे । उखायाम् । कुण्डे । हाण्डी इ० भा० प्र ॥ तिष्ठति । छा० । स्थाचतिमृजेरालजालञा । जातेरिति ङीष् ॥ पाटलीवृक्षे ॥

स्थालीपाक । पु० भोजनपक्वान्नादौ । मासाष्टकाश्राद्धे स्थालीपाकस्य मांसप्रतिनिधित्वं यथा गोभिल । अपि वा स्थालीपाकं कुर्वीतेति । तद्विधानन्तु । स्थालीपाकं पशुस्थाने कुर्याद्यद्यनुकल्पितम् । श्रपयेत सवत्सायास्तरुण्या गोः पयस्यनु । इति छन्दोगपरिशिष्टोक्तं ग्राह्यम् । अन्विति ओदनचरौ पचत् ॥

स्थालीपुरीषम् । न० स्थालीलग्नदग्धान्ने ॥

स्थालीपुलाक । पु० न्यायविशेषे ॥ यथा । स्थालीस्थतण्डुला एते भवेयुः सिद्धिभागिनः । समकालाग्निसंयोगभागित्वात्प्रतिपन्नवत् । इति स्थालीपुलाकन्यायेन वैदिकलिङ्गत्वावच्छेदेनापूर्वं प्रति कल्पनात् । प्रतिपन्नवत्समर्द्दनादिनास्फु

क्षिति । स्त्री॰ अवस्थानौ । अर्हाव स्थानौ । मर्यादायाम् । न्यायपथ स्थितौ । सत्वायाम । ईश्वरेच्छा निरुद्धसमस्तसर्वप्राणिनामनि योगस्थापने । विद्यमानतायाम् सृष्टिप्रलययोर्मध्ये । सौमनि । स्थानम् । छा॰ । स्थागापापभोभा वे॰ क्तिन् । तिष्ठत्यवषा । बाहुलकादधिकरणे क्तिन ॥

स्थितिस्थापक । पु॰ संस्कारविशेषे । अन्यथाकृतस्य पुनस्तदवस्थापादके घटादिपृथिवीवृत्तौ ॥

स्थिरः । पुं॰ शनैश्चरे । मोक्षे । देवे । नगे । पर्वते । वृषे । कार्त्तिकेये । अवहक्षे । वृषे । धर्मसिन्धृर्विष्कुमारादिषु । न॰ नक्षत्रविशेषेषु । यथा । उत्तरात्रय रोहिण्योभास्करस्य ध्रुवं स्थिरम् । तत्र स्थिरं बीजगेहं शान्त्यारामादिसिद्धयतीति ॥ त्रि॰ कठिने । अचले । दृढप्रयत्ने । रसाच्च शोनिर्गिर स्थानस्थायिनि शरीरे । तिष्ठति । छा॰ । अजिरशिशिरशिथिलस्थिर स्फिरस्थविरखदिरा॰ । इति किर च॰ टिलोप । षड्भावविकार रहितेसद्ब्रह्मणि ॥

स्थिरकर्मा । त्रि॰ आफलोदयकारिणि ॥

स्थिरगन्धः । पु॰ चम्पके ॥ त्रि॰ स्थिरगन्धयुक्ते । स्थिरोगन्धो यस्मिन् ॥ *

स्थिरगन्धा । स्त्री॰ पाटलायाम् ॥ केतक्याम ॥

स्थिरचक्र । पु॰ मञ्जुघोषाभिधेजिनविशेषे । त्रि॰ सुस्थसैन्ये ॥

स्थिरच्छद । पु॰ भूर्जपत्रे ॥ स्थिरा छदायस्य ॥

स्थिरच्छाय । पु॰ देवद्रुमे ॥ स्थिराच्छायाछाया यस्य । तत्प्रभावे । छायावृक्षे ॥

स्थिरजिह्व । पु॰ मत्स्ये ॥

स्थिरजीविका । स्त्री॰ स्थिरवृत्तौ । शाल्मल्यौ ॥ त्रि॰ स्थिरवृत्तिमति ॥

स्थिरजीविता । स्त्री॰ शाल्मलिवृक्षे ॥

स्थिरतर । त्रि॰ स्थाणौ । अयमस्मि । अतिस्थिरे ॥ अतिशयेनस्थिर । द्वित्वचनविभज्ये तिलरप् ॥ एकरूपतयातिस्थिरे ॥

स्थिरदंष्ट्र पु॰ भुजङ्गमे ॥ वराहाकृतिविष्णौ । ध्वनिविशेषः ॥

स्थिरदारु । पु॰ शाकवृक्षे ॥

स्थिरपत्र । पु॰ हिन्तालौ ॥

स्थिरपुष्प । पु॰ चम्पके ॥ बकुले ॥

स्थिरपुष्पी । स्त्री॰ तिलकद्रुमे ॥

स्थिरफला । स्त्री॰ कूष्माण्डाम ॥

स्थिरबुद्धि । त्रि॰ स्थिरप्रज्ञे । लब्धश्रवणमननफले ॥ सुस्थिरानिश्चला सन्यासपूर्वकवेदान्तवाक्यविचार

परिपाकेणसर्वसम्पच्छून्यत्वेऽनि विविक्तात्मनिश्चितासत्यनिबुद्धिर्यस्य ॥

स्थिरमति । स्त्री॰ निश्चलायांबुद्धौ ॥ परमार्थवस्तुविषयायामतौ ॥ त्रि॰ तद्वति ॥ स्थिरापरमार्थवस्तुविषयामतिर्यस्य ॥

स्थिरयोनि । पु॰ द्रुमे ॥

स्थिरयौवन । पु॰ विद्याधरे ॥ त्रि॰ चिरस्थायितरुणावस्थे ॥ स्थिरयौवनमस्य ॥

स्थिररङ्गा । स्त्री॰ नील्याम् ॥

स्थिररागा । स्त्री॰ दारुहरिद्रायाम् ॥

स्थिरश्री । पु॰ विष्णौ ॥ त्रि॰ निश्चलश्रीविशिष्टे ॥ स्थिराश्रीयस्मिन्॰ यथावा ॥ स्थिरोपायोहि पुरुष, स्थिरश्रीरेवजायते । चंचलतु नैवसक्नोतिचपलश्चपलांश्रियमिति मत्स्यपुराणम् ॥

स्थिरसाधनक । पुं॰ सिन्धुवारवृक्षे ॥

स्थिरसार । पुं॰ शाकवृक्षे ॥

स्थिरा । स्त्री॰ भुवि । धरित्र्याम् । विश्वम्भरायाम् ॥ शालपर्ण्याम् ॥ शाल्मलिवृक्षे ॥ तिष्ठति । छा॰ । अजिरशिशिरेत्यादिनाकिरच्॰ टिलोप । टाप् । काकोल्याम ॥

स्थिराङ्घ्रिप । पुं॰ सिन्तालवृक्ष ॥

स्थिरायु । स्त्री॰ शाल्मलिद्रुमे ॥ त्रि रमायुर्यस्या: ॥ चच्चिरमसम्बद्धा

शिवमेजीवतिशाल्मलिरितिवचनात् ॥

स्थूणा । स्त्री॰ गृहस्याधारभूतेस्तम्भे काष्ठमयीदिवनिर्मिताधूणाभवति । स्थूणी॰ स्थू॰ भा॰ प्र॰ गृहपूर्व स्थूणामन्द्रा ब्रावि । यथागृहस्थूणमिति ॥ सूर्म्याम् ॥ तिष्ठति । छा॰ । रास्नासाञ्जेतिसाधु ॥ कृगल्पावे ॥ इतिहेमचन्द्र ॥

स्थूर । पुं॰ मनुष्ये ॥ तिष्ठति । छा॰ । स्थ किच्चेस्यूरम् ॥ स्थूलवृगायइतिमर्न्तुयोगपुरस्कारात् स्थिरस्येच्छयं ॥

स्थूरी । पु॰ खरहयमवतृपृष्ठेनभारवाहकेऽश्वे ॥

स्थूल । पु॰ विराजि ॥ पनसे ॥ न॰ कूटे । समूहे ॥ त्रि॰ निष्प्रज्ञे ॥ जडे ॥ उपचितावयवे । पौनै । पीवरे । पीवरे । मोटा॰ क॰ भा॰ ॥ सथूलशरीरे । चात्मनउपाधिविशेषे ॥ स्थूलोदेहोऽहमप्रत्ययादात्मेतिलोकायतभेद । तन्न । मृतस्य स्थूलयोरपिसङ्घातविशेषाचेतन्यप्रसङ्गात् । एकस्यचभूतस्याचैतन्यादर्शनात् । सङ्घातस्याचावस्तुत्वात् ॥ स्थूलयति । स्थूलपरिवृ हणे । चुरादयन्त । पचाद्यच् ॥

स्थूलक । पुं॰ तृणविशेषे । सूच्य

णि। खरच्छदे। उलुखड० कृ० गो० दे० भा० प्र० ॥ त्रि० स्थूले ॥

स्थूलकङ्गु। पु० वरकधान्ये ॥

स्थूलकणा। स्त्री० स्थूलजीरके ॥

स्थूलकण्टक। पु० जालबर्बूरे ॥

स्थूलकण्टकिका। स्त्री० शाल्मलिवृक्षे ॥

स्थूलकण्टा। )
स्थूलकण्टिका। ) स्त्री० वृहत्याम् ॥

स्थूलकन्द। पु० हस्तिकन्दे ॥ शूरणे ॥ मानकन्दे ॥ रक्तलशुने। रक्तशूने ॥

स्थूलकाय। पु० स्थूलशरीरे ॥

स्थूलकाष्ठधृक्। पु० वृहत्काष्ठाग्नौ। स्कन्धानले ॥

स्थूलकाष्ठाग्नि। पु० स्कन्धाग्नौ।

स्थूलखण्ड। पुं० मार्गे ॥

स्थूलकेश्वर। पु० सिद्धस्थानविशेषे ॥ स्थूलाख्यात्स्थूलकेश्वरे॰कृतिदेवीगीता ॥

स्थूलग्रन्थि। स्त्री० व्याप्रभेदे। महाभरा॰ कृ० भा० ॥

स्थूलचञ्चु। पु० महाचञ्चुशाके।

स्थूलचाप। पु० तूलपरिष्कारार्थधनुषि। तूलचापे ॥ कृ॰श॰र॰लो ॥

स्थूलजीरक। पुं० कृष्णजीरके। उपकुञ्चिकायाम्। कलौंजी॰ मंगरैला॰ कृ० भा० प्र० ॥

स्थूलताल। पु० हिंताले ॥

स्थूलत्वचा। स्त्री० काश्मर्याम्। गम्भार्याम्।

स्थूलदण्ड। पु० देवनले ॥

स्थूलदर्भ। पु० मुञ्जे ॥

स्थूलदला। स्त्री० घृतकुमार्याम् ॥

स्थूलनाल। पु० देवनले ॥

स्थूलनास। )
स्थूलनासिक। ) पु० शूकरे ॥ त्रि० पीनमासायुक्ते ॥

स्थूलपट। पु० स्थूलशाटके। पटके। पटगतौ० पटविस्तारिता। पचाद्यच्। स्थूलश्चासौपटश्च ॥ त्रि० स्थूलवस्त्रवति। यथा। कृच्छ्रगतः स्थूलपटायनेधूमशालिनः। प्रवर्षेपिमसोदन्तियदि कन्यानजायते ॥

स्थूलपट्ट। पु० कार्पासे ॥

स्थूलपट्टाक। पु० स्थूलवस्त्रे ॥

स्थूलपाद। पुं० हस्तिनि। व्याधिनास्थूलचरणे।

स्थूलपुष्प। पु० वकद्रुमे ॥

स्थूलपुष्पिका। स्त्री० गिरिजापराजितायाम ॥

स्थूलप्रपञ्च। पु० विराजि।

स्थूलफल। पु० शाल्मलिवृक्षे ॥

स्थूलफला। स्त्री० शणपुष्प्याम् ॥

स्थूलभद्र। पु० श्रुतकेवलिनामनि

जीवभेदे ॥

स्थूलभुक् । न० अष्टद्युतिस्तचैतन्ये० विश्वशब्दाभिधेये ॥ स्थूलान्विषयान्भुङ्क्ते । भुज० । क्विप् ॥

स्थूलभूतम् । न० पञ्चीकृताकाशादिभूते अपञ्चीकृतानामेवभूतानांपरस्परव्यवहारयोग्यनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मापेक्षपरमेश्वरसात्निध्यादिनिमित्तापेक्षयाविभागेनमिलितानांस्थूलतापत्तौ । पञ्चीकृतभूते ॥

स्थूलमरिचम् । न० कक्कोलि ॥

स्थूलमूलम् । न० चोरकमूलके ॥

स्थूललक्ष । त्रि० वदान्ये ॥ स्थूलैर्महद्भिर्लक्ष्यते । लक्ष० । कर्म्मणिघञ् ॥

स्थूललक्ष्य । त्रि० दानशौण्डे । बहुप्रदे । वदान्ये ॥ स्थूलकूटलक्ष्यमस्य ॥ स्थूलैर्महद्भिर्लक्ष्यते वा । लक्ष० । कर्म्मणियत् ॥

स्थूलवर्म्मन् । पु० ब्रह्मयष्ट्याम् ॥

स्थूलवल्कल । पु० रक्तलोध्रे ॥

स्थूलवृक्षफल । पु० मदनवृक्षे ॥ शिंशपायां ॥ विरुधर्पिण्डीतके ॥

स्थूलवैदेही । स्त्री० गजपिप्पल्याम ॥

स्थूलशर । पु० महाशरे । सुरपर्णे ॥

स्थूलशरीरम् । न० आत्मनउपाधिविशेषे । अन्नमयकोषे ॥ यथा । र

सादिपञ्चीकृतभूतसम्भव भोगालयद्दु खसुखादिकर्म्मणाम् । शरीरमाद्यन्तवदादिकर्म्मजं मायामयं स्थूलमुपाधिरात्मन ॥

स्थूलशाटक । पु० स्थूलवस्त्रे । वराशी ॥ शटति । शटरुजादौ ण्वुल् । स्थूलश्चासौशाटकश्च ॥

स्थूलशाटका । )
स्थूलशाटिका )
स्थूलशाटि । )

स्त्री० स्थूलवस्त्रे । वराशी ॥

स्थूलशालि । पु० महाशाली । स्थूलतण्डुले ॥

स्थूलशिरा । पु० ऋषिविशेषे ॥ न० वृहन्मस्तके ॥ त्रि० तद्युक्ते ॥ स्थूल शिरोयस्य ॥

स्थूलशीर्षिका । स्त्री० क्षुद्रपिप्पलिकायाम् ॥

स्थूलषट्पद । पु० वरोलि । वोल्ता० इ० गौ० भा० प्र० ॥

स्थूलस्कन्ध । पु० लकुचे ॥

स्थूलहस्त । पु० करिशुण्डायाम । हस्तिहस्ते ॥ त्रि० पीनभुजे ।

स्थूला । स्त्री० स्थूलैलायाम् । कृष्णपिपीलिकायाम् । गन्धपत्रायाम । एर्वारौ ॥ गजपिप्पल्याम् ॥ स्थूलकीश्वरशायादिकायाम् ॥

स्थूलांशा । स्त्री० गन्धपत्रायाम ॥

स्थूलास्यः । पु॰ महाराजाम्रे ॥

स्थूलास्य । पु॰ सर्पे ॥ त्रि॰ वृहन्मुखे

स्थूलैरण्ड । पु॰ महैरण्डे ॥ स्थूलैरण्डोगुणाढ्यः स्याद्रसवीर्यविपक्तिषु ॥

स्थूलैला । स्त्री॰ बृहदेलायाम् ॥ अस्यागुणायथा । स्थूलैलाकटुका पाकेरसेचानलकृल्लघु । रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा ॥ हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥

स्थूलोच्चय । पु॰ गण्डोपले । गण्डाश्मनि । स्थूलोपले ॥ असाकल्ये । असामग्र्ये । वरण्डे ॥ गजानांमध्यमगतौ ॥ नीचैर्गतम्॰ स्थूलोच्चय॰ बोधिमार्गइतिति कोषस्तिगतय ॥ उच्चयनम् । चिञ्॰ । एरच । स्थूलस्योच्चयः । गजानांदन्तरन्ध्रे ॥

स्थेमा पु॰ स्थैर्ये । स्थिरस्यभाव पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिस्थादेश ॥

स्थेय । पु॰ विवादपक्षस्यनिर्णेतरि । अवहर्थि । प्राड्विवाके ॥ तिष्ठत्यस्मिन्विवादपदनिर्णयार्थम् । ष्ठा॰ । बाहुलकादधिकरणे॰ अचोयत् । ईद्यति ॥ पुरोधसि । त्रि॰ अतिस्थिरे ॥

स्थेयान् । त्रि॰ स्थास्नौ । स्थिरतरे ॥ अयमनयोरतिशयेनस्थिरः । द्विवचनविभज्योपपदेतरबीयसुनावितीयसुनि॰ प्रियस्थिरेतिस्थादेश ॥ स्त्री॰ स्थेयसी ॥

स्थेष्ठ त्रि॰ स्थिरतमे ॥ अयमेषामतिशयेनस्थिरः । अतिशायनेतमबिष्ठनावितीष्ठनि॰ प्रियस्थिरेतिस्थादेश ॥ सुस्थिरे ॥

स्थैर्य्यम् । न॰ स्थिरत्वे । अचञ्चलत्वे । मोक्षसाधनेप्रवृत्तस्यानेकविधविघ्नप्राप्तावपितदपरित्यागेनपुनःपुनर्यत्नाधिक्ये ॥ स्थिरस्यभाव । ष्यञ् । स्तब्धत्वे ॥

स्थोरी । पुं॰ भारवाहितुरगे ॥

स्थौणेयम् । न॰ ग्रन्थिपर्णप्रभेदे । कुकुरौंधास्थौणधी । मांठयाला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यप्रभेदागुणाश्चयथा । ईषत्सुगन्धिस्थौणेयघुनेर॰ इतिचेके । स्थौणेयकं वर्हिवर्हं शुकवर्हंचकुक्कुरम् । शौणेरोम शुकस्यापिशुकपुष्पंशुकच्छदम् ॥ स्थौणेयकं कटुस्वादुतिक्तंस्निग्धं त्रिदोषनुत । मेधाशुक्रकर त्वच्यंरक्षोऽश्रोज्वरजन्तुजित् ॥ हन्तिकुष्ठास्रतट दाहदौर्गन्ध्यतिलकालकान्॰ इतिभा॰ प्रकाश ॥

स्थौणेयकम् । न॰ सुगन्धद्रव्यभेदे ।

वर्हिशिखे । स्रौघेये ॥

स्नौरी । प॰ खरचर्मवत पृष्ठेनभार वाहकोऽश्वो । पृष्ठये । स्थलस्येद म् । तथेदमित्यण । स्थलीरेक स्वम् । स्नौरवलमस्यास्ति । इनि ॥

स्नौललक्ष्यम । न॰ वहुप्रदत्वे ॥ ॥

स्नौल्यम । न॰ स्थूलत्वे ॥ स्थूलस्य भाव॰ । ष्यञ ॥

स्नपनम । न॰ अभिषिञ्चने ॥ स्नाने ॥ यथा । मज्जनात् स्नपनं श्रेष्ठ स्न पनात्तर्पणं स्मृतम । तर्पणान्मा सदानन्तुमक्षिपाजनिपातनमिति दुर्गोत्सवप्रकरणेतिथ्यादितत्त्वम ।

स्नपित । त्रि॰ क्षालिते ॥ सिक्ते ॥ स्नातेप्यन्तात् क्त॰ । अर्त्तिह्रीव्ला दिनापुक । मिताञ्झस्व॰ ॥ आ प्लुते ॥

स्नव : । पुं॰ स्रवे । स्रवणे । क्षरणे ॥ स्नवनम । आप्रस्रवणे । स्नुदो रप ॥

स्नसा । स्त्री॰ स्नायौ ॥

स्नात॰ । त्रि॰ आप्लुते । कृतस्नाने ॥ यथा । स्नातोऽधिकारीभवतिदैवे मैत्रेचकर्मणि । अस्नातस्यक्रिया : सर्वा भवन्तिह्ययतोऽफला : ॥ प्रात समाचरेत् स्नानमतोनित्य मतन्द्रित॰ ॥ इतिप्रायश्चित्ततत्त्वम । स्नात्वाकर्माणिकुर्वीत । शिर॰ स्नातश्चकुर्वीतदैवंपित्र्यमथापिवेति

स्मृति॰ ॥ आप्लोचे । भावेक्त॰ ॥

स्नातक॰ । पु॰ आप्लुतव्रतिनि । स माप्तवेदपाठे॰ अगृहस्थे । आश्र मान्तरगतिसमाप्तवेदव्रते । कृत स्नाने ॥ अचाहहारीत । अथ॰ स्नातकाभवन्ति । विद्यास्नातको॰ व्रतस्नातकोविद्याव्रतस्नातकश्चेति । तत्र॰ समाप्यवेदमसमाप्यव्रता निसमावर्त्तते॰ सविद्यास्नातक॰ । य॰ समाप्यव्रतानि॰ असमाप्य वेदं समावर्त्ततेसव्रतस्नातक । य उभयंसमाप्यसमावर्त्ततेसविद्याव्र तस्नातकोभवति ॥ अथभवन्तिच य पद्या॰ । यथा । मन्त्रब्राह्मणा त्मक वेदमधीत्यावबुद्ध्यचस्नाया दित्येक पक्ष । साङ्गवेदमधी त्यावबुद्ध्यचस्नायादित्यपर॰ । य त्समावमप्यधीत्ययज्ञविद्याग्राभ्यस्न स्नायादितितृतीय : पक्ष॰ । यज्ञ विद्याविस्तैरेयन्यमार्गेऽधीतेनस्ना यादितिनिषेध । अतोवेदाध्ययन वेदविहिताग्निहोत्रादिकर्मानुष्ठा नप्रयोजनमिति ॥ स्नातिस्म । आ ॰ । गत्यर्थाकर्मकेतिक्त । सज्ञा यांकन ॥ यावादिषु॰ स्नातवेदस माप्ताविति पाठाद्वाकन ॥ गृहस्थ ब्राह्मणे ॥

स्नानम् । न॰ मज्जने । आप्लावे । आ प्लवे ॥ स्नान षड्विध भवति । यथा

ह्यङ्ख । नित्यं नैमित्तिकं काम्यं क्रियाङ्गमलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितमिति ॥ विशेषस्तु स्नानानां ततएवावगम्यताम् । तथाच स्मृतिः ॥ आग्नेयादिप्रभेदेन तच्च प्रोक्तं चतुर्विधम् । यथा । आग्नेयं भस्मना स्नानमवगाह्यन्तु वारुणम् । आपो हिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतमिति ॥ आश्रौचे । भावे ल्युट् ॥ स्नानं तर्पणपर्यन्त आशान्त देवपूजनम् । आह्निकन्तु विसन्ध्यान्त विप्राणाञ्च स्मृतौ स्मृतम् ॥ तत्र प्रातःस्नानं प्रथ सन्निहृष्टादृष्टकारहितम् । सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकमिति दृष्ट । दृष्टं कर्माधिकार । अदृष्टं जपादिद्वारा परलोकसिद्धि ॥

स्नानतृणम् । न० कुशे ॥

स्नानीयम् । न० स्नानसाधने चूर्णादौ ॥ स्नात्यनेन । आ० । कृत्यल्युटो बहुलमित्यनीयर् ॥

स्नानी । स्त्री० जलमवगाहमानायाम् ॥

स्नायी । त्रि० स्नानकर्त्तरि ॥

स्नायु । स्त्री० वायुवाहिन्यां नाड्याम ॥ वसायाम् ॥ स्नाति । आ० । बाहुलकादुण् । आतो युक् चिण्कृतोः ॥

स्नायर्म्म । न० नेत्ररोगप्रभेदे । तल्लक्षणं यथा । श्वेते प्रस्तारिमांसाभं शुष्कस्नायर्म्म पञ्चमसितमाख्यक र ॥

स्नावा । पु० रसिके ॥ स्नाति । आ० । स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् । धीवावत् ॥

स्नावरी । स्त्री० नद्याम् ॥ स्नान्त्यस्याम । आ० । वनिप । वनोर च ॥ इति ङ्रौ ॥

स्नाव । स्त्री० शिरायाम् ॥ स्नु प्रस्रवणे । स्नावयति शरीरमिति स्नावा ॥

स्निग्ध । पु० बहुवारे ॥ रक्तैरण्डे ॥ सरलद्रवे ॥ मयके ॥ न० समूहगन्धे । जवादिके ॥ सिक्थके ॥ त्रि० स्नेहयुक्ते । अरूक्षे । चिक्कणे । मसृणे ॥ सहजेन गतुकेनवा स्नेहेनयुक्ते । प्रिये । वत्सले । स्निह्यति स्म । ष्णिह प्रीतौ । अकर्म्मकत्वात्कर्त्तरि क्त । वा दुहेति च ॥ मतिबुद्धिपूजार्थेभ्यश्चेति चाद्वर्त्तमानेक्त ॥

स्निग्धकन्दा । स्त्री० द्रोणपर्ण्याम् । भूमिकदल्या ॥

स्निग्धतण्डुल । पुं० षष्टिशाली ॥

स्निग्धता । स्त्री० स्नेहे ॥ प्रियत्वे ॥

स्निग्धदारु । न० देवदारुणि ॥ देवदारुप्रभेदे पूतिकाष्ठे ॥ सरलद्रवे ॥

स्निग्धपत्र । पु० गर्जरद्रवे ॥ घृत

करञ्जे । गुच्छकरञ्जे ।

स्निग्धपत्रा । स्त्री॰ बदर्य्याम् ॥ पालङ्क्याम् ॥ काश्मर्य्याम् ॥

स्निग्धपर्णी । स्त्री॰ गम्भार्य्याम् ॥

स्निग्धपिण्डीतक । पु॰ मदनवृक्षविशेषे । स्थूलवृत्तफले ॥

स्निग्धफला । स्त्री॰ कर्कटीप्रभेदे । वालुङ्क्याम् । मूत्रलायाम् ॥

स्निग्धा । स्त्री॰ मेदायाम् ॥

स्नु । पु॰ प्रस्थे । सानौ । पर्व्वतसमभूभागे । स्नौतिजलम॰ । स्नात वा । आप्रस्रवणे॰ आगमौचेशा । मितद्वादित्वात्॰ डु ॥ स्त्री॰ स्नायौ ॥

स्नुकछद । पुं॰ चीर । स्नुहीवृक्षे ॥

स्नुत । त्रि॰ स्यन्न । स्नुतजलादौ । स्नूयतेस्म॰ । स्नु॰ क्त ॥

स्नुषा । स्त्री॰ सुतस्त्रियाम् । पुत्रवध्वाम् । स्नौति । स्नु॰ । स्नुवश्चित्कृत्यृषिभ्य किदिति स॰ ॥ स्नुह्याम् ॥

स्नुक् । स्त्री॰ स्नुह्याम् । स्नुह्यति । स्नुह उद्गिरणे । क्विप् । बाहुलेति कुत्वम् । तदभावेहोढइतिढत्वे स्नुट् स्नुड् ॥

स्नुहा । स्त्री॰ स्नुहीवृक्षे ॥ भागुरिमते॰ स्नुहटाप् ॥

स्नुहि । स्त्री॰ स्नुह्याम् । स्नुह्यति । स्नुह॰ । सर्व्वधातुभ्य इन् ॥

स्नुही । स्त्री॰ सिहुण्डे ॥ इन्नन्तात्स्नुहि कृदिकारादिति पक्षे ङीष् ॥

स्नेह । पु॰ सौहृदे । प्रेम्णि । प्रियतायाम् ॥ तामसीयचित्तवृत्तिविशेषे॰ यस्मिन्सत्यन्यदीये हानिवृद्धीस्वस्मिन्नारोप्यते । अन्यविषय प्रेमापरपर्य्याय स्नेह ॥ यथा । स्मृत्वावियोगजदुःख त्यजस्नेहप्रियेजने । अतिस्नेहपरिष्वङ्गाद्वर्त्तिरार्द्रापिदह्यतेइति । स्नेहयतिप्रीणयतिपुरुषम् । ष्णिह॰ । पचाद्यच् । स्निह्यन्ति पुरुषायस्मिन् । अधिकरणार्थे॰ घञ ॥ घृतादिरसविशेषे ॥ यथा स्नेहश्चतुर्व्विध प्रोक्तोघृततैल वसातथा । मज्जाच॰ तंपिबेन्मर्त्य किञ्चिदभ्युदितेरवौ ॥ स्थावरोजङ्गमश्चैवद्वियोनि स्नेहउच्यते । तिलतैलस्थावरेषुजङ्गमेषुघृतवरमद्भुत ॥ द्वाभ्यांत्रिभिश्चतुर्भिर्वा॰ यमकास्त्रिवृतोमहान् ॥ न्यायमते॰ चूर्णादिपिण्डीभावहेतौ॰ गुणविशेषे॰ जलमात्रवृत्तौ ॥ जलीयपरमाणावयंनित्योऽन्यत्त्वनित्य । तैलादावस्यप्रकर्षोऽस्यतस्तेषाद्दाहोभवति । यथोक्तं भाषापरिच्छेदे । स्नेहोजलेऽसौनित्योयमनित्योऽवयविन्यसौ । तैलान्त

रेतत्प्रकर्षाद्दहनस्यानुकूलतेति ॥

स्नेहनम् । णिह० । भावेघञ् ॥

स्निह्यतेयेनवा ॥ स्नेहस्यद्रु खमू लत्वमुक्तगारुडे ११४ऽध्याये । यथस्नेहाभयतथस्नेहाद्दु खस्यभाजनम् । स्नेहमूलानिदु खानि तस्मिं स्त्यक्ते महत्सुखमिति ॥ स्निग्धतायाम ॥ यथा । स्नेह प्रसु लक्ष्मीवाग्जिह्वाद्दन्तेक्षणस्वरस्य । सुतधनसौभाग्ययुता स्निग्धैस्तैर्निर्धनारूक्षैरिति ॥

स्नेहा । पु० व्याधिप्रभेदे ॥ सङ्हि ॥ चन्द्रे ॥ स्निह्यन्त । णिह० । स्वनुघनपूषस्निह्यादिना० कनि न० निपातनात्साधु ॥

स्नेहनम् । न० तैलमर्द्दने । स्नघर्णे । अभ्यङ्ग ॥ स्निह्यतेयेन । णिह० । ल्युट ॥

स्नेहपानम् न० कुत्साम् । कर्मम यैतैलादिभाण्डे ॥ स्नेहस्यतैलघृतादे पानम् ॥

स्नेहप्रिय । पु० प्रदीपे ॥ त्रि० तैलादिप्रिये ॥

स्नेहफल । पु० तिले । पादपे ॥

स्नेहभू । पु० श्लेष्मणि ॥ त्रि० स्निग्धभूमौ ॥

स्नेहरङ्ग । पु० तिले ॥

स्नेहवती । स्त्री० मेदायाम ॥ स्नेहोऽस्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । ङीप् ॥

स्नेहपयस्य । प० प्रिये । प्रदीपे ॥

स्नेहवस्ति । स्त्री० अनुवासनवस्तौ । तैलपिचकारी० इ० भा० ॥ यथा । वस्तिर्द्विधाऽनुवासाख्योनिरूहश्चतत पर । य स्नेहैर्दीयतेसस्यादनुवासननामक ॥

स्नेहबीज । पु० पियालवृक्षे ॥ त्रि० स्नेहकारणे ॥

स्नेहाश । पु० प्रदीपे । दीपे ॥

स्नेही । पु० वयस्ये ॥ त्रि० स्नेहयुक्ते ॥

स्नेहु । पु० व्याधिभेदे ॥ चन्द्रे ॥ स्निह्यति । णिह० । मृस्वृस्निही त्यादिनाउ ॥

स्पन्द । पु० स्पन्दने । प्रस्फुरणे ॥ स्पन्दते । स्पदिकिञ्चिच्चलने । पचाद्यच ॥

स्पन्दनम् । न० स्पन्दे । किञ्चिच्चलने ॥

स्पर्द्धक । त्रि० स्पर्द्धाकारे ॥

स्पर्द्धा । स्त्री० सङ्घर्षे । पराभिभवेच्छायाम् ॥ स्पर्द्धतेश्लिनस्तौ ॥ साम्ये ॥ क्रमसमुन्नतौ ॥ स्पर्द्धसङ्घर्षे ॥ भिदाद्यङ् ॥

स्पर्द्धालु । त्रि० स्पर्द्धायुक्ते ॥ स्पर्द्धालाति । ला० । मितद्र्वादित्वाद्० डु ॥

स्पर्श । पु० रुजायाम ॥ सम्पर्के ॥

सन्तापे ॥ सपृशति । सपृशथा धनसम्पर्शनयो । पदरुजेत्यत्र • सपृशउपतापद्रुतिकर्त्तरिघञ ॥ यद्वा, सपर्शनसपर्शं भावेघञ् ॥ द्वाभ्याम् । सपर्शके । कादिमावमाभेवर्गाद्वरे । उपतापे । रोगविशेषे । स्पर्शके ॥ मणिविशेषे । पारस • द्र • भा • प्र • ॥ त्वगिन्द्रियविषये । स्पर्शने । त्वगिन्द्रयमात्रग्राह्यो गुणविशेषे ॥ सत्रविध । शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोमाच्छरुत्ति । तत्रशीतस्पर्श । उष्णस्तेजसि । अनुष्णाशीत पृथिवीवाय्वो । रूपरसगन्धस्पर्शा पृथिव्यापाकजा • अनित्याश्च । जलादावपाकजा • नित्या अनित्याश्च । नित्यगतानित्या • अनित्यगताअनित्या अथाहु । कठिन पार्थिव स्पर्श शीतोऽपोजलवह्निजो । मृदुर्वायोरिति स्पर्शविशेषाद्बहवोगीता ' ॥ स्पर्शसामान्येस्पर्शविशेषाणालक्षणति ॥ इन्द्रिये स्पृश्यन्ते • इतिव्युत्पत्त्या • शब्दादिविषयेषु ॥ माचामाचे • । • ॥ स्पर्शनम् । स्पृशस्पर्शने । अकार्त्तरिचकारकेस ज्ञायामितिघ ॥ पुराणे • एकादशविध स्पर्शउक्तोयथा । उष्णा शीत सुखोदु ख ' स्निग्धोविशदएवच । खरोमृदुश्लक्ष्णश्च लघुर्गुरुरितिक्रमात् ॥ कामिनस्तु । शब्दादीनाञ्चपञ्चानामध्यंस्पर्शसुखवरम् । । आनन्दरसमूलमेनान्यद्रतिसुखकिलेत्याहु ॥

स्पर्शक । पु • स्पर्श ॥ त्रि • सपर्शनकर्त्तरि ॥

स्पर्शज्ञानम् । न • त्वाचप्रत्यक्षे ॥

स्पर्शन । पुं • श्वसने । वायौ ॥ स्पृशति । स्पृश • । नन्द्यादिल्युट् ॥ न • दाने । स्पर्शे ॥ स्पृशेर्भावेल्युट् ॥

सपर्शमणि । पुं • सपर्श । पारस • द्र • प्र • मणौ ।

सपर्शमणिप्रभवम् • । न • काञ्चने । स्वर्णे ॥

सपर्शलज्जा । स्त्री • लज्जालुवृक्षे ॥

सपर्शशुद्धा । स्त्री • शतमूल्याम् ॥

सपर्शसपन्द । पु • भेके ॥

सपर्शा । स्त्री • कुटलायां ॥

सपर्शानन्दा । स्त्री • रतिमदायाम् ॥ अप्सर सु ॥ सपर्शेन • सपर्शेनवाआनन्दोऽस्या ॥

सपर्शित । त्रि • प्रतिपादिते ॥

सपश । पु • सम्पराये । युद्धे ॥ प्रणिधौ । चरे । हेरिके । अस्यपर्यायायथा । यथार्हवर्ण प्रणिधिरपसर्पश्चर सपश । चारश्च गूढपुरुषश्चेति ॥ सप

असपर्शनवस्थनयो । पचाद्य
च् ॥
सपष्ट । त्रि॰ स्फुटे । प्रव्यक्ते ।
उल्वणे । प्रकटे ॥ सपृष्यतेस्म
। स्पश॰ । अमनात्क्त । वा
दान्तेतिसाधु ॥
सपष्टीकृत । त्रि॰ व्यक्तीकृते ।
सपार्शन । पु॰ सपर्शे । सप
र्शनेनगच्छति शीघ्रद्रव्यत्वात् ॥
स्पाशित । त्रि॰ स्पष्टे । स्पश॰ ।
क्त । वाद्रान्तेतिसाधु ॥
स्पृक्का । स्त्री॰ सुगन्धिद्रव्यविशेषे ।
शाकभेदे पृक्कायाम् ॥ गुणास्तु ।
सपृक्कास्वादीहिमाश्यातिक्तानिलि
लदोषनुत् । कुष्ठकण्डूविषस्वेददा
हाश्मज्वररक्तहृत् ॥ स्पृश्यते । स्पृ
शस्पर्शने । बाहुलकात् कक् ॥
स्पृणा । स्त्री॰ भुजङ्गवालिनीछन्दे ।
कङ्कालिका॰ छ॰ गो॰ दे॰ भा॰
प्र॰ ॥
स्पृशी । स्त्री॰ कण्टकार्याम् । स्पृ
शति । स्पृश॰ । इगुपधेतिक
गौरादि ॥
स्पृश्य । त्रि॰ स्पर्शनीये ।
स्पृष्ट । त्रि॰ कृतस्पर्शे ॥
स्पृष्टास्पृष्टम् । न॰ परस्परस्पर्शने ॥
स्पृष्टस्पृष्टि । अ॰ परस्परस्पर्शने । छ॰
अभटी॰ छ्वाकृत॰ छ॰ भा॰ ॥
यथा । तीर्थविशेषेयात्रासङ्घा
भेदेषभिन्नवे । नगरग्रामदाहेषस्पृ
ष्टास्पृष्टिनदुष्यति ॥ आपद्यपिचक
ष्टायांवृगभयेषोहितेतथा । माता
पित्रोर्गुरोश्चैवनिदेशेवर्त्तनात्तथा
॥ स्पृष्टास्पृष्टि॰ छाव्यय क्रियाव्य
तीहारे । तथेतिनदुष्यतीत्यर्थः ॥
स्पृष्टि । स्त्री॰ सर्शे । पृक्ती ॥ सपर्श
नम् । सपृशि क्तिन् ॥
स्पृहणीय । त्रि॰ श्लाघ्ये ॥ कमनीये
। मनोहरे ॥
स्पृहयालु । त्रि॰ सस्पृहे । स्पृहाशी
ले । लोभिनि ॥ स्पृहयति॰ त
च्छील । स्पृहेरीसायाम् । स्पृहि
गृहीत्यालुच् ॥
स्पृहा । स्त्री॰ दोहदे । इच्छायाम् ।
काङ्क्षायाम् ॥ भिदादेराकृतिग
णत्वात्स्पृहेरङ् ॥ धर्माविरोधेन
प्राप्तीच्छायाम् ॥ उक्तञ्चवैष्णवध
र्मेषुद्वष्टमाध्येषु॰ येनकेनाप्युपाये
नोपादित्सायाम् ॥ इष्टाप्तिकाङ्क्षा
चित्तवृत्तौ ॥ सुखानुभवकाले॰ त
ज्जातीयसुखस्यकारण धर्ममनुष्ठा
यसुखैवतदाकाङ्क्षारूपायांतामस
चित्तवृत्तौ ॥ अाम्निरेवसा ॥
तथानिन्दाप्रशंसेयथा । नमोवन
श्वयाभातप अास्पतरस्तथा ।
तपस्याकामधेनुश्चसन्मप्तपसिस्पृ
हा ॥ ऐश्वर्यक्षियाणाञ्चराविच्छे
चतथाविशाम् । शूद्राणाविप्रसेवा

पूर्णेन्दुकरसस्पर्शाद्द्रुत स्रवति यज्जलम् । चन्द्रकान्त तदाख्यात दुर्लभं तत्कलौयुगे ॥ अशोकपल्लवे च्छाय दाडिमीबीजसन्निभम् । विन्ध्याटवितटे देशे जायते मन्दकान्तिकम् ॥ सिंहले जायते कृष्णमाकरे श्यनीलके । पद्मरागभवस्थाने द्विविध स्फटिक भवेत् ॥ अकलङ्कमनर्मल स्वच्छ स्रवतीश्ज्जल शुचि । ज्योतिर्ज्वलनमाश्लिष्ट सुताज्योतीरसद्विज ॥ तदेवलोहिताकाररागाबन्धं सुदृढतम् । आनील तत्तु पाषाण प्रोक्त राजमयशुभम् । ब्रह्मसूत्रमययत्त प्रोक्तंब्रह्ममयं हि ते ति स्फटिकपरीक्षा । इति भोजराजकृतयुक्तिकल्पतरु ॥

स्फटिका । स्त्री॰ स्फटिकायाम् । रङ्गदायाम् । स्फटिकायाम् । फटकरी॰ इ॰ भा॰ प्र॰ पाषाणे ॥

स्फटिकाचल । पु॰ स्फटिकोऽद्भि ति । कैलासे ॥

स्फटिकात्मा । पु॰ स्फटिके ॥

स्फटिकाभ । पु॰ कर्पूरे ॥

स्फटिकारि । स्त्री॰ स्फटिकायाम् ॥

स्फटिकारिका । ) स्त्री॰ स्फटिकायाम् ॥<br>
स्फटिकारी । )

स्फटी । स्त्री॰ स्फटिकायाम् ॥

स्फुरणम् । न॰ स्फुरणे ॥ स्फर स्फुरण

कृष्णकारीपथ केचित्पठन्ति॰ स्वार्थे यश्च्नादक्षादयः ॥

स्फटिकम् न॰ स्फटिकोपले ॥

स्फटिका । स्त्री॰ स्फटिकोपले । फटकरीतिख्याते पाषाणे । अस्या गुणा यथा । स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् । निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणीति ॥

स्फाटिकोपल । पु॰ स्फटिकायाम् ॥ स्फटिके ॥

स्फाटिकोऽद्भित । पु॰ कैलासे ॥

स्फाति । स्त्री॰ वृद्धौ । स्फायनम् । स्फायीवृद्धौ । क्तिन् ॥ * ॥

स्फायित । त्रि॰ वर्धिते ॥

स्फार । पु॰ विकटे ॥ करकादे बुद्बुदे ॥ त्रि॰ विपुले । विशाले ॥ यथा । तस्मि स्निग्धपर्णस्फारसम स्तावस्तुदृष्ट्य । इमास्ता प्रतिबिम्बनतिसरसीवतटद्रुमा ॥ स्फायते । स्फायी॰ । स्फायितञ्चीति रक । यद्वा । स्फुरणम् । स्फुरस ञ्चलने । घञ् । स्फुरतिस्फुलत्योर्घञीत्यैच्चात्वम् ॥

स्फिगघातनक । पु॰ कटफले ॥

स्फगदेश । पु॰ कालधिमूलप्रदेशे ॥

स्फिक । स्त्री॰ कटिप्रोथे । कटिदेशस्थमांसपिण्डे । स्फायते । स्फायी॰ । बाहुलकाड्डिक प्रत्यय ॥

स्फेटति । स्फिटहिंसायाम् । क्विप । सम्फिगपूतेतिनिपातनात् ०टस्य चट्टतिमुकुट ॥

स्फिर । वि० प्रचुरे ॥ स्फायते । स्फायी० । अजिरशिशिरेतिकि रच्टिलोपश्च ॥

स्फीत । त्रि० समृद्धे ॥ विकसिते ॥ स्फायतेश्च । स्फायी० । क्त । स्फाय स्फीनिष्ठायाम् ॥ अथ स्फोतिकामचूतिस्फोतमाच- ष्टे० चूतिश्च ताद्द्धं । अल्लोप यिलोपौ ॥

स्फुट । स्त्री० ईर्वारौ । पादस्फोटे । स्फुटति । स्फुट० । क्विप ॥

स्फुट । त्रि० व्यक्ते । स्पष्टे । स च घटादीनांविषयेन्द्रियसन्निकर्षज न्यहस्तिद्धायाप्रमाणमिदाह्वतीति प्रसिद्धमेव । प्रफुल्ले ॥ व्याप्ते ॥ सिते । शुक्ले । स्फुटति । स्फुटवि कसने । इगुपधेतिक ॥ स्फुटे । भिन्ने ॥

स्फुटता । स्त्री० विशदार्थतायाम् ॥

स्फुटनम् । न० विदरे । विदरणे ॥ स्फुट० । कुटादि० । ल्युट् । वि कसने ॥

स्फुटबन्धनी । स्त्री० ज्योतिष्मत्याम् । पारावताङ्घ्रयाम् ॥

स्फुटल । पु० तुम्बुरुवृक्षे । शू लघ्ने ॥

स्फुटा । स्त्री० फणायाम् ॥ स्फुट० का । टाप ॥

स्फुटि । स्त्री० पादस्फोटामये । विपादिकायाम ॥ निर्भिन्नकर्कटीफले । दूर्वांकशुक्तिकायाम् । फुट० दू० भा० प्र० ॥

स्फुटित । त्रि० विकचे । विकसिते । दीर्णे । भिन्ने ॥ अस्फुटत् । स्फुट० । क्त ॥

स्फुर । पु० फलके । स्फुरणे ॥

स्फुरणम् । न० स्फुरणे । फारकनार ० चूतिभाषा । यथा० अङ्गस्फुर णमेवस्फुरणम ॥ किञ्चिच्चलने ॥ भाने ॥ कम्पने ॥ स्फुरस्फुरणे सञ्चलनेच । कुटादि । ल्युट ॥

स्फुरन् । त्रि० कम्पनयुक्ते । दीप्य माने ॥

स्फुरितम् । न० स्फुरणे । त्रि० मन स कल्पनायाम । उल्लसिते ॥ उज्ज्वले । प्रतिफलिते ॥

स्फुर्क । पु० कालस्कन्धे । ति न्दुके ॥

स्फुर्थु । पु० वज्रपतनजनितध्व नौ । स्फूर्थी ॥

स्फुलम् । न० तम्बू० दू० प्र० वस्त्रवि श्मनि ॥

स्फुलिङ्ग । त्रि० अग्निकणे । चिन् गारी० दू० भा० ॥ स्फु० दृश्यनु करणशब्द । स्फुना० फूत्कारेण०

लिङ्गति । गच्छति । लिङ्गिगतौ । पचाद्यच् ॥

स्फुलिङ्गा । स्त्री० अग्निकणजातौ ॥ जातावपिनङीष् । अजादिषुपाठात् टाप् ॥

स्फुलिङ्गिनी । स्त्री० अग्नेर्जिह्वाविशेषे ॥

स्फूत्कार । पु० फूत्कारे ॥

स्फूर्ज्जक । पु० तिन्दुकवृक्षे । तेंदू० बू० भा० प्र० ॥ स्फूर्जति । टुओस्फूर्जावज्रनिर्घोषे ॥ ण्वुल् ॥

स्फूर्ज्जथु । पु० वज्रनिर्घोषे । वज्रपातजध्वनौ ॥ स्फूर्जनम् । टुओस्फूर्जा० । ट्वितोऽथुच् । मेघनादे । तडज्जौघे ॥

स्फूर्ज्जन । पु० तिन्दुके ॥

स्फूर्त्ति । स्त्री० स्फुरणे ॥

स्फूर्त्तिमान् । त्रि० पशुपतौ ॥ यथा । पाशुपतिक पाशुपतसिद्धप स्फूर्त्तिमानुमतः । इतित्रिकाण्डशेष । स्फूर्त्तिविशिष्टे ।

स्फेमा । पु० स्फिरत्वे । प्रचुरतायाम् ॥ स्फिरस्यभाव । पृथ्वादिभ्यइमनिच् । प्रियस्थिरेत्यादिनास्फादेश ॥

स्फेय । त्रि० प्रचुरतरे । स्फिरतरे ॥ द्वयोरनयोरतिशयेनस्फिरम् । ईयसुन् । प्रियस्थिरेतिस्फादेश ॥

स्फेरम । त्रि० भूयिष्ठे ॥

स्फेष्ठ । त्रि० अतिशये । भूयिष्ठे ॥ अयमेषामतिशयेनस्फिरः । इष्ठन् । प्रियस्थिरेतिसाधु ॥

स्फैयकृत । पु० स्फाकृतौपक्षे ॥ अण् ॥

स्फोट । पु० स्फोटके । विस्फोटे । पिडके । शब्दव्यापारे । स्फुट्यते० व्यज्यतेऽर्थः० स्फुटत्यर्थोयस्मादितिवा । स्फुटविकसने । घञ० अच्वा ॥

स्फोटक । पु० फोडाइतिख्याते० रोगे । पिडके ॥ स्फोटति स्फुटिर्विशरणे । ण्वुल् ॥

स्फोटनम् । न० विदारणे ॥

स्फोटनी । स्त्री० मणिशङ्खादिवेधोपकरणे । आस्फोटन्याम् ॥ स्फोट्यतेऽनया । स्फुटभेदनेचुरादि । करणेल्युट् ॥

स्फोटबीज । )
स्फोटबीजक । ) पु० वातारीभल्लातके ॥

स्फोटायन । पु० मुनिविशेषे । काशीवति । स्फोटप्रतिपादनपरे० वैयाकरणे । स्फोटोऽयनंपरायणंयस्यस ॥

स्फोटिका । स्त्री० खञ्जनिकायाम् । हापुत्रिकायाम् ॥

स्फ्य । पु० यज्ञाङ्गभूते० खड्गा

स्मरवीथिका । स्त्री॰ वेश्यायाम ॥

स्मरवृद्धि । स्त्री॰ कामवृद्ध्याख्यौषधौ । मदनायुषि ॥ स्मरस्यवृद्धिर्यया ॥

स्मरसख । पु॰ वसन्ते ॥ कामोद्दीपकत्वात् ॥ स्मरस्यसखा । टच ॥

स्मरसँह । त्रि॰ कामोद्दीपकी ॥ सहते । वह॰ । पचाद्यच् । स्मरस्य सह ।

स्मरस्तम्भ । पु॰ उपस्थे । मेढ्रे ॥ स्मरस्यस्तम्भइवस्तम्भ ॥

स्मरस्तम्भ्यं । पु॰ गर्द्दभे ॥

स्मरहर । पु॰ शिवे । स्मरंहरति । हरतेरनुद्यमनेऽच ॥

स्मरागारम् । न॰ भगे ॥

स्मराङ्कुश । पुं॰ कररुहे । नखे ॥

स्मराख । पु॰ राजाख्ये ॥

स्मरासव । पु॰ लालायाम् । मुखसुरे । मद्यप्रभेदे ॥

स्मरेष्ट । पुं॰ चर्म्म ॥

स्मर्त्तव्य । त्रि॰ स्मरणीये ॥ यथा । स्मर्त्तव्य सततं विष्णुर्विस्मर्त्तव्योनजातुचित् । सर्वेविधिनिषेधास्युरेतयोरेवकिङ्कराः ॥

स्माय । पु॰ गूढहसिते ॥

स्मारक । त्रि॰ स्मरणकारकी ॥

स्मार्त्त । त्रि॰ स्मृतिशास्त्रविदि ॥ स्मृतिविहिते ॥ स्मृतिसम्बन्धिनि ॥ न॰ स्मृतिशास्त्रोक्तकर्मणि ॥ यथा । श्रौतकर्मस्वयं कुर्यादन्योऽपि स्मार्तमाचरेत् । अशक्तौश्रौतमप्यन्य कुर्यादाचारमन्वत ॥

स्मार्त्तयज्ञ । पु॰ यज्ञविशेषे ॥ सचतुर्विधोयथा । देवयज्ञ पितृयज्ञो भूतयज्ञस्तथैवच । मनुष्ययज्ञइत्येव स्मार्त्तयज्ञश्चतुर्विधः ॥

स्मितम् । न॰ ईषद्धास्ये ॥ तल्लक्षणं यथा । ईषद्विकसितैर्द्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानांस्मितं भवेदिति ॥ स्मिङ् ईषद्धसने । भावेक्तः ॥ त्रि॰ विकसिते ॥

स्मितदृक् । त्रि॰ स्मेराक्षे ॥

स्मृत । त्रि॰ स्मृतिविषये । कृतस्मरणे ॥ यथा । श्राद्धेकेपितृकार्ये च मासस्यान्द्रमसः स्मृत । विवाहादौस्मृत सौरोयज्ञादौसावनोमतः ॥

स्मृति । स्त्री॰ धर्मसंहितायाम । मन्वादिप्रणीतेधर्मशास्त्रे ॥ स्मर्य्यतेअनुष्ठानप्रकारोऽनया । स्मृतिचिन्तायाम् । स्त्रियाम्क्तिन । वेदार्थस्मरणपूर्वकरचितत्वाद्वा ॥ मास्मराकै । स्मर्यतेवेदमनयाहुर्तिस्मृति ॥ महर्षिभिर्वेदार्थस्मरणा स्मृति । तद्योगादृग्न्योविस्मृति ॥ स्मर्ये । कर्त्तव्यानुसन्धा

मे ॥ धिषि । इच्छायाम् ॥ अनुभूतविषयज्ञाने । स्वाश्रयाश्रितक्रियाजन्यसंस्कारजन्यज्ञानं स्मृतिरिति तर्कमञ्जरी । ज्ञानाचार्योपदिष्टार्थानुसन्धाने । अनुभवजन्यसंस्कारजन्यज्ञाने । यथा । विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधेति भाषापरिच्छेदः ॥ सा स्मृतिर्द्विधा । यथार्था च अयथार्था च । तत्र प्रमाजन्या यथार्था अप्रमाजन्याऽयथार्था ॥ अनुभूतविषयाऽसम्प्रमोषप्रत्यये ॥ पूर्वानुभवसंस्कारजज्ञाने । चिरानुभूतार्थस्मरणशक्तौ । एतज्जन्मनि पूर्वानुभूतार्थविषयावृत्तौ ॥ योगिनां जन्मान्तरानुभूतार्थविषयापि स्मृतिर्भवति ॥ अनुभूतप्रियादीनामर्थानां चिन्तनं स्मृतिः । तच्च वाम्य क्रमेणाग्र्याणि ' उक्षितादय । तत्पर्यायाः ' । चिन्ता । आध्यानम् । चिन्तिया । ध्यानम् । स्मरणम् । अवेति । स्मरणम् स्मृ ध्यै । क्तिन् ॥

स्मृतिमान् । त्रि॰ पूर्वानुभूतार्थविस्मरणशीले । स्मृतिविशिष्टे । स्मृतिरस्त्यस्यास्मिन् वा । मतुप् ॥

स्मृतिविभ्रम । पुं॰ स्मृतेर्विभ्रमे ॥

स्मृतिविरुद्ध । त्रि॰ धर्मशास्त्रविपरीते ॥ यथा कूर्मपुराणे हिमालयप्रतिदेशीवाक्यम् । यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां तु तामसी ॥ करालभैरवञ्चैव यामलं वाममेव च । एवमादीनि चान्यानि मोहनार्थानि तानि वै ॥ मया सृष्टानि चान्यानि मोहायैषां भवार्णवे । इति । जीवप्रवृत्तिकारीणि कानि चित्कथितानि चैतानि मया निर्वाणतन्त्रम् ॥

स्मृतिशास्त्रम् । न॰ धर्मसंहितायाम् ॥

स्मृतिहेतु । पुं॰ स्मरणयोग्ये । वासनायाम् । संस्कारे । भावनायाम् ॥

स्मेर । पुं॰ प्रकाशे । त्रि॰ प्रकाशयुक्ते ॥ ईषद्धसनशीले ॥ स्मयते ईषद्धसति । नमिकम्पिस्म्यजसकमहिंसदीपो रः ।

स्मेराक्ष । त्रि॰ स्मितदृष्टि ॥

स्यद । पुं॰ जवे । वेगे ॥ सवेगगतिवचनेऽसत्यप्रयोगः स्यन्दतेऽनेन । स्यन्दनं वा स्यन्द् प्रस्रवणे । स्यदो जवइति घञन्तो निपातितः ॥ वेगाख्यगुणे ॥

स्यन्द । पुं॰ स्यन्दने ॥

स्यन्दन । पुं॰ तिनिशवृक्षे । नेमि

नि । रथद्रौ । पतिमुक्तके ॥ पतौ
तकल्पाऽवर्त्त्र्द्दे ॥ न० स्तुतौ । ष
र्षे ॥ नीरे । सलिले ॥ प० न०
रथे ॥ वि० स्रवणे ॥ स्यन्दते स्य
न्द० । बहुलमन्यत्रापीतियुच् ।
चलनशब्दार्थादकर्मकाद्युच्० इ
तिवायुच् ॥ यद्वा । स्यन्दते०
प्रद्रवति । स यन्द० । नन्द्यादि
त्वाल्लयु ॥

स्यन्दनद्रुम । पु० तिनिशवृक्षे ॥

स्यन्दनारोह । पु० रथिनि । रथा
रूढयोद्धरि ॥ स्यन्दनमारोहय
ति । वह० । कर्मण्यण् ॥

स्यन्दनाह्वय । पु० तिनिशे । ति
न्दके । स्यन्दनमाह्वयोयस्यस

स्यन्दनि । पु० तिनिशद्रुमे ॥

स्यन्दनिका । स्त्री० क्षुद्रनद्याम् ॥

स्यन्दनी । स्त्री० लालायाम् । मूत्र
नाड्याम् ॥

स्यन्दी । वि० स्रवणशीले ॥

स्यन्दनी । स्त्री० लालायाम् ॥ स्र
वर्य स्यन्दते । स्यन्द० । पावश्यकि
तिणिनि ॥

स्यन्न । वि० स्रुतेजलादौ ॥ स्यन्दते
स्म । स्यन्द० । क्त । रदाभ्यामि
तिवत्वम् ॥

स्यन्नम् । वि० स्रुते । रीणे ॥

स्यमन्तक । पु० श्रीकृष्णापहृतमणौ
। मणि स्यमन्तकोऽस्तं भुजमध्ये
तुकौस्तुभद्युतिदेमचन्द्र ॥ सौरभा
द्रपदीयचतुर्थ्यां चन्द्रदर्शनेस्यमन्त-
कोपाख्यानंश्रुत्वावक्ष्यमाणमन्त्रेणा
भिमन्त्रितजलंपिबेत् । मन्त्रस्तु ।
सिंहः प्रसेनमवधीत्सिंहोजाम्ब
वताहतः । सुकुमारकमारोदी
स्तवह्येषस्यमन्तकइति ॥

स्यमीक । पु० मुनिविशेषे ॥ पा
दपे । वर्षे ॥ नाके । वल्मीके
॥ स्यमति । स्यम् शब्दे । स्यमे
रीटचेतिकन् ॥

स्यमीका । स्त्री० नीलिकायाम् ॥

स्याद्वादी । पु० जिने ॥

स्याल । पु० पत्नीभ्रातरि । श्याले
॥ स्यामयति । स्यमवितर्के चुरा
दि । पृषोदरादि ॥

स्यूत । पु० प्रसेवे । वस्त्रमयादि
निर्मितेधान्याद्याधारे ॥ वि० ऊ
ते । प्रोते । कुन्ना० इ० भा० ॥
कृतसीवने । सीव्यतिस्म । षिव्
तन्तुसन्ताने । क्त च्छ्वोरिति ऊठ् । य
णादेश ॥

स्यूति । स्त्री० सूच्यादिनावस्त्रा
दिसीवने । सेवने । सीवना० इ०
भा० प्र० ॥ षिवे क्तिन् । ऊठ्
। सन्ततौ ॥

स्यून । पु० किरणे ॥ सूर्ये ॥
धौतकटे ॥ सीव्यतेऽनेनवा । षि
वु० । सिवेष्टयूचेतिनः । दैर्घ्यं

ऽपि पीतवासाहरेमूर्त्तिराव योर्यथोरसिस्रग्विणी ॥ माला याम् ॥

स्रग्वी । पु० भूततन्त्रात्यरूपार्वेज यन्त्यास्त्रासज विज्ञाणेहरी ॥ त्रि० कुसुममालाधारिणि ॥ स्रगविद्यतेऽस्य । भूमायामेधास्रजोविनि रितिविनि ॥

स्रज् । स्त्री० मूर्द्ध्न्यस्तपुष्पदामनि ॥ माल्ये ॥ सृज्यते० सृज्यतेवा । सृजविसर्गे । ऋत्विगित्यादिना० कर्मणि० कर्त्तरि वाक्विन्० धमागमश्च । कुत्वम् ॥ अतिजगतीच्छन्द १५ प्रभेदे । तल्लक्षणं यथा । सगियमपिचरसनवरचितयति । यथा । अ थिसखचरि० रुचिरतरगुणमयीम दिमकरतिरनपगतपरिमला । स गिवनिस्सविलसदनुगमरसासुमुखि मुदिततनुजद्दलनहृदयी ॥

स्रज्वा पु० प्रजापतौ ॥ पटसङ्केरज्जौ ॥

स्रव । पु० स्रवे ॥ स्रवणम् । सुगतौ । ऋदोरप् ॥ वारिप्रवाहे । यथा हरिमचन्द्र । निर्झरस्तुकार . स रि । उत्स . स्रव प्रस्रवण मिति ॥

स्रवणम् । न० सच्छिद्रदृतेः अग्ने । अन्तर्गमे । क्षरणे ॥ स्रु०

। ल्युट् ॥ मूत्रे ॥

स्रवत्तोया । स्त्री० रुदन्त्यां ॥

स्रवद्गर्भा । स्त्री० पतितगर्भायाङ्गवि । अवतोकायाम ॥ पतितगर्भाया म ॥ स्रवन्गर्भोयस्याः ॥

स्रवद्रङ्ग । पु० पण्यवीथ्यां । हाट० ब जार० इ० भा० प्र० ॥

स्रवन्ती । स्त्री० नद्याम् ।सिरिति । नि म्नगायाम् ॥ स्रवति । स्रु० । श ट शव । उगितश्चेतिङीप् । श प श्यनोर्नित्यमिनुम् ॥ नुमस्थाने ॥ औषधिभेदे ॥ कारन्त्याम् ॥

स्रवा । स्त्री० मूर्वायाम् । मुरहरा० इ० भा० प्र ॥ स्रवति । स्रु० । अच् । गुवादिभ्यो । टाप् । जी वन्त्यामोषधौ ॥ जीवन्त्याम् ॥

स्रष्टा । पु० प्रजापतौ । निर्मातरि । वेधसि । ब्रह्मणि । शिवे ॥ विष्णौ ॥ सृजति । सृजविसर्गे । तृच् । सृजिदृशोरित्यम ।

स्रस्त । त्रि० च्युते ॥ स्रस्तेस्म । स्रंसुध्वंसुसने । गत्यर्थाकर्मकेति कर्त्तरिक्त . ।

स्रस्तम् । न० च्युते ॥

स्रस्तर पु० न० वीरबाक टे । पत्र वादिशये ॥ पुं० कुशमुष्टी ॥

स्राक् । अ० द्रुते । झटित्यर्थे ॥ स्र पाकी । सम्पदादित्वात्क्विप् । स्रा मकति । अककुटिलायाम्गतौ ।

ति । दीपवत्याम् । स्रोतांसिसन्त्य
स्याः । तदस्यास्तीतिमतुप् । मा
दुपधायाश्चेतिवत्वम् । उगितश्चे
तिङीप ॥

स्रोतस्विनी । स्त्री० सरिति । स्रो
तांसिसन्त्यस्याः । अस्मायामेधा
स्रजोविनि । मान्तत्वान्ङीप् ॥

स्रोतोञ्जनम् । न० सौवीरे । कापो
ताञ्जने । यामुने । अथलक्ष
णाद्वयोर्यथा । तत्स्रोतोञ्जनंख्या
स्य सौवीरञ्चश्वेतमीरितम् । वल्मी
कशिखराकारभिन्नमञ्जनसन्निभम्
।। घृष्टन्तुगैरिकाकारमेतत्स्रोतो
ञ्जनमुत्तमम् । स्रोतोञ्जनसमंज्ञेय
सौवीरन्तुपाण्डुरम् । स्रोतो
ञ्जनंस्मृतंस्वादुचक्षुष्यंकफपित्तनुत्
। कषायलेखनंस्निग्धंग्राहिच्छर्दि
विषापहम् । हिध्मक्षयास्रहृच्छो
तसिञ्चनीयसदाबुधैः । स्रोतोञ्ज
नगुणाः सर्वेसौवीरेपिमताबुधैः
।। किन्तुद्वयोरञ्जनयोश्रेष्ठस्रोतोञ्ज
नस्मृतम् । इतिभावप्रकाश
स्रोतोञ्जनन्तुविज्ञादञ्जना-
भपदञ्जनमितिमदनपाल ॥ अपि
च । स्रोतोञ्जनमतश्रेष्ठंविशुद्धसि
न्धुसम्भवम् । दृष्टेः काण्डूमलघ्न
रदाहक्लेदरुजापहम् । अक्ष्णोः
पावकवसहतेमारुतातपौ । सेव
रोगानजायन्तेतस्मादञ्जनमाचरेत्

स्रोतोञ्जनंतत्रसुरमेतिप्रसिद्धम् ॥
अञ्ज्यतेनयनमनेनचक्षुष्यत्वात् ।
अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु । क
रणेल्युट् । स्रोतसोऽञ्जनं स्रोतो
ञ्जनम् ॥

स्रोतोभेदक । पु० प्रवहज्जलानांसे
तुभेदादिनादेशान्तरनेतरि ॥

स्रोतोवहा । स्त्री० नद्याम् ॥

स्व . सिन्धु । स्त्री० गङ्गायाम् ।

स्व । पु० आत्मनि ॥ ज्ञातौ । पुं०
न० धने ॥ न० द्वितीयभवने ।
त्रि० आत्मीये । स्वनति । स्वनश
ब्दे अन्येभ्योपीतिड ।।

स्वक । त्रि० स्वीये । आत्मीये ॥

स्वकम्पन । पु० वायौ ॥

स्वकर्म्मकृत् । त्रि० निजकार्य्यक
र्त्तरि ॥

स्वकीय । त्रि० आत्मसम्बन्धिनि ।
स्वीये । निजे । आत्मीये ।। स्वस्ये
दम् गहादित्वाच्छ्वेतिच्छ कु
गागमश्च ॥

स्वकुलक्षय । पु० मत्स्ये ।। निजकु
लनाशे ।। त्रि० तत्कर्त्तरि० तद्विशि
ष्टे च ॥

स्वगतम् । न० मनोगते ।। त्रि० आ
त्मप्राप्ते ।। आत्मनोगते ।।

स्वगुप्ता । स्त्री० आत्मगुप्तायाम् । शू
कशिम्ब्याम् । लज्जालौ ।

स्वगृह । पु० कलिङ्कारपक्षिणि ॥

षण्णामथयथाविभीतिभागशतम् ॥ पि
त्र्यदानमन्त्रे । देवहविर्दाने । यथा
स्वाहादेवहविर्दानेश्रौषट्वौषट्व
षट्स्वधेत्यमरः । अथपितरोदेवता
इतिश्रुतेस्त्रिपि देवा ॥ स्वमात्मा
नमशरीरंधीयतेतिस्वधा । स्वधा
पितृणामन्नमितिश्रुति ॥ देवपि
तृहविर्दाने । स्वद्यतेऽनेन । स्वद
आस्वादने । आप्रत्यय । पृषोद
रादित्वाद्दस्यध ॥

स्वधा । स्त्री पितृदाने ॥ स्वधाऽस्त्य
स्याम् । अच् । टाप । पितृपत्न्या
म् ॥ स्वामृधर्त्त इतिव्युत्पत्ते ।
नमः स्वधायैस्वाहायै० इतिप्रयो
गश्च ॥

स्वधाप्रिय । पु० कृष्णतिले ॥

स्वधाभुक । पु० पितृगणे । दिव्य
पितरि । देवे ॥

स्वधाम । न० स्वरूपविस्फुरणे ॥

स्वधायी पु० पितृषु ॥ स्वधागमन
शील । सुप्यजातौणिनिस्ताच्छी
ल्ये ॥

स्वधावाचनम् । न० श्राद्धेयोग्येकाल
विशेषे ॥ यथा । ऊर्द्ध्वं मुहूर्त्तात्
कुतपायन्मुहूर्त्तचतुष्टयम् । मु
हूर्त्तपञ्चकञ्चैवस्वधावाचनमिष्य
ते । कुतपादूर्ध्वंमुहूर्त्तचतुष्ट
यं० मुहूर्त्तपञ्चकञ्चकुतपात्पूर्वं
म्० अपराह्णमुहूर्त्तकुतपएव ।
स्वधावाच्यतेऽत्र । वच० । अधिक
रणेल्युट् ॥

स्वधिति । पु० स्त्री० कुठारे । य
था । द्वयोः कुठारः स्वधितिः
परशुश्चपरश्वधइत्यमरः ॥ स्वं धि
यति । धिधारणे । क्तिच् ॥ छेद
नीयमांसस्यशस्त्रविशेषे ॥

स्वन । पु० शब्दे । निनादे । निन
दे । ध्वनौ । स्वननम । स्वनश
ब्दे । स्वनहसोर्वेतिपक्षेऽप् ॥

स्वनचक्र । पुं० रतिबन्धविशेषे ।
यथा । धृत्वाबाहूतथाकण्ठपाद-
योर्विधिर श्रित । गूढस्वकाम
येत्कामीस्वनचक्र प्रकीर्त्तितइति
रतिमञ्जरी ॥

स्वनितम् । वि० ध्वनिते ॥ न० ग
र्जिते । मेघशब्दे ॥ स्वन्यतेस्म ।
स्वन० । क्त ॥

स्वनिताह्वय । पुं० तण्डुलीयशाके
। अल्पमारिषे ॥

स्वनुष्ठित । वि० सर्वाङ्गोपसंहारेण
सम्पादिते ॥

स्वभोक्ष । पुं० गण्डके ॥

स्वल । वि० अपवोलरक्ताक्षि । शुभो
दर्वो ॥

स्वपन । वि० निद्रामनुभवति ॥ स्वपि
ति । ञिष्वप० । शट अथा
देश ॥

स्वपति । पुं० आत्मनि । निजभर्त्तरि ॥

स्वपनम् । न॰ निद्रायाम् । ञिष्वप् शये । ल्युट् ॥

स्वपिण्डा । स्त्री॰ पिण्डखर्ज्जूर्य्याम् ॥

स्वप्न । पु॰ निद्रायाम् । शयने । स्वपे ॥ प्रसुप्तस्य विज्ञाने । वासनामये । जागरितसंस्कारज प्रत्यय सविषय स्वप्नदृष्टुतालक्ष यौं ऽन्त करणस्यार्द्रविकाशियथा । ऽजायदवस्थायांयद्दृष्टं यच्छ्रुत तज्ज नितवासनयानिद्रासमयेय प्रपञ्चो यः प्रतीयतेसास्वप्नावस्थेतिवासु देवसरस्वती ॥ तथाच । वार्त्ति पुकारणे प्रसुप्तेषुजागरितवासना नुसारेणमनसस्तदर्थाभासाकाराव भासन स्वप्नशब्दितम् ॥ यथाहु । इन्द्रियाणामुपरमेमनोऽनुपरत यदि । सेवतेविषयानेवतद्विद्यात्स्व प्नदर्शनमिति । सचसप्तविधोयथा । दृष्ट . श्रुतोऽनुभूतश्चप्रार्थित : कल्पितस्तथा । भाविकोदोषजश्चेतिस्वप्न सप्तविध . स्मृतइति ॥ स्वप्नजाग्रदादिकल्पनयातत्त्वं वि ध्यमाह । स्पष्टस्मृतिरथास्पष्टस्मृ तिरस्मृतिरित्यमी । स्वप्नभेदा . । स्वप्नमध्येजाग्रत्स्वप्नसुषुप्तयइति ॥ सन्ध्यं तृतीय स्वप्नस्थानमितिश्रुति : ॥ स्वपितवेन । ञिष्वप् शये । कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदिति नन् ॥ स्वप्नोऽन्यथाग्रहण सर्पइव

रज्जामितिभाष्यम् । यथा रज्जौ सर्पोऽग्रहमाणोऽन्यथागृह्यते॰ तथा त्मनिदेहादिग्रहणमन्यथाग्रहणम्॰ आत्मनोदेहादिवैलक्षण्यस्यश्रुति युक्तिसिद्धत्वात् ॥ अन्यथाग्रहणत स्वप्नोनिद्रातत्त्वमजानत । विपर्या सेतयो क्षीणे तुरीय पदमश्नुते ॥

स्वप्नकृत् । पु॰ सुनिषण्णके ॥ जीवे ॥

स्वप्नज् । त्रि॰ शयालौ । निद्रा शीले । स्वप्नशील । ञिष्वप॰ । स्वपितृषोर्नजिङ् ॥

स्वप्नदृक् । पुं॰ जीवे ॥ स्वप्नान्प श्यति । दृशिर॰ । क्विप् ॥

स्वप्नस्थान । पु॰ तैजसे । स्थूल प्रपञ्चलयस्थानस्वप्नव्युपहितचैत न्ये ॥ स्वप्न स्थानमस्य ॥

स्वप्नान्त । पु॰ स्वप्नमध्ये । स्व प्नविज्ञाने ॥ सुषुप्तिस्थाने । स्व प्नस्यान्तोऽवसान यस्मिन् ॥

स्वप्रकाश । पुं॰ अन्यानपेक्षप्रका शे । चन्द्रसूर्य्यादिप्रकाशनिरपेक्षे॰ स्वयमेवभासमानेद्रष्टरि । दृश्यानां जडानांबुद्ध्यादीनांदर्शनं स्वप्रका शद्रष्टारं विनानघटते ॥ यथोक्तंच श्रीधरस्वामिभि : । नप्रकाशितमित्यु क्तेयत्प्रकाशं नयंधना । स्वप्रका शंतमात्मानमप्रकाश : कथ स्पृशे दिति ॥ स्वेनात्मनैवप्रकाशते । काशृदीप्तौ । पचाद्यच् ॥

स्वप्रमाणक:। त्रि॰ स्वतःसिद्धे॥

स्वभाव। पु॰ सहजधर्मविशेषे। संसिद्धौ। प्रकृतौ। स्वरूपे। निसर्गे। स्वभाववादार कश्चिद्योनसहाऽसहासदसहाकर्म निष्पद्यते। जन्मान्तरकृतधर्माधर्मादिशुभाशुभसंस्कारे। इदानीन्तनजन्मारम्भे प्राक्तनसंस्कारे॥ स च सात्त्विकादिभेदात् त्रिविध अनाद्यविद्यायाम्॥ अतएवाविर्भावे॥ यथा। वह्निहेंस्वनपिच्चोतुस्वभावोयमकोर्त्तित। निसर्गसुस्वरूपश्चत्यं भोपि भवतिद्विधा। निसर्ग सुदृढाभ्यासजन्य संस्कारउच्यते। अन्यस्तु लत सिद्धस स्वरूपभाव भूष्यतद्भयुज्ज्वलनीनमणि। स्वभाव सत्तायश्चसस्वभाव. अनन्याधीनसत्ता॥

स्वभावोक्ति। स्त्री॰ अर्थालङ्कारविशेषे। यथा। स्वभावोक्तिस्तुडिम्भादे स्वक्रियारूपवर्णनम्। अयोस्तदेकाश्रययो रूपवर्णं सत्यनस्य। उदाहरणम्। पश्चादङ्घ्रीप्रसार्य्यत्रिकनतिविततद्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठोमुखमुरसिसटांधूलिधूम्रांविधूय। घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गोमन्दशब्दायमानोविलिखतिशयनादुत्थित. क्ष्माखुरेणेति॥ स्वभावो स्थिरलङ्कारोयथावद्वस्तुवर्णनमितिसर्वथान्तरम्।

स्वभू। पु॰ विष्णौ। हरौ॥ ब्रह्मणि। प्रजापतौ। परमेष्ठिनि। स्वतोभवति। भुवङ्क्लितिक्विप्॥

स्वमेक। पु॰ संवत्सरे॥ यथा। स्वमेकामेकं वरदावत्साभवतिस्वष्टिका। रुधिरेणौरयाश्च हतपिंतावि धिवद्बपेतिपुराणम॥ स्वमेक संवत्सरीयव्योमाद्भूतिस्मृति॥

स्वयंहारिका। स्त्री॰ स्त्रीविशेषे॥

स्वयङ्कृत। त्रि॰ आत्मनाकृते॥ स्वयङ्कृतेतितत्पुरुष॥

स्वयङ्ग्रुप्ता। स्त्री॰ शूकशिम्ब्याम्।

स्वयंवर। पु॰ प्रार्थनाभिनायकर्षे॥

स्वयन्दत्त। पु॰ द्वादशविधपुत्रान्तर्गतपुत्रविशेषे॥ यथाह मनु। मातापितृविहीनोयस्त्यक्तोवास्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तुसस्मृतइति। आत्मानं स्वयं ददाति॰ तवाहं पुत्रोभवामीति॰ स्वयन्दत्त उपनत स्वयं प्राप्तइतियावत्॥

स्वयम्। अ॰ आत्मनेत्यर्थे। आप॰ कृ॰ भा॰ प्र॰॥ सुष्ठु अयते। अय गतौ। अम्॥

स्वयमुपस्थित। त्रि॰ स्वयमागते॥

स्वयम्प्रकाश। त्रि॰ स्वतः साधना

चतुर्थं प्रथमो नीलोत्पली सोछान्द
स स्मृतइति ॥ उदात्तादिभि स्व
यं राजन्तइति नागोज्झितं च ॥ स्व
रइति कण्ठगत माधुर्यमिति भरत
तपूज्यपादा ॥ श्रुत्यारब्धेऽनुरण
नि ॥ तदुक्तम् । श्रुत्यनन्तरभावी
य स्निग्धोऽनुरणनात्मक । स्व
तोरञ्जयति श्रोतृचित्त सस्वरउच्यत
इति ॥ शब्देध्वनौ ॥ यथा । कवि
हमरथोघभेरीमृदङ्गसि हाब्दनिस्व
नाभ्रूपा । गर्दभजर्जरतरस्वरा
खचनशीव्यस लनाइति ॥ नासा
समीरणे ॥ निषादादिसप्तसु ॥ ते
यथा । निषादर्षभगान्धारषड्जम
ध्यमधैवता । पञ्चमश्चेत्यमीसप्त
तन्त्रीकण्ठोत्थिता स्वरा ॥ ष
ड्जमारउ । वद ऋषभं रौतिमयूर
स्तुगावोनदन्त्यृषभम् । अजा
विकौचगान्धारं क्रौञ्चोनदतिमध्य
मम । पुष्पसाधारणे कालेकोकि
लोरौतिपञ्चमम् । अश्वस्तुधैवतंरौ
तिनिषादं रौतिकुञ्जरइति ॥ स्व
रोदय श्रुतिस्थानेसनन्दहृदयाञ्जन
मृत्युच्य ॥

स्वरत । अ० स्वरेणेत्यर्थे ॥ आद्या
दिभ्यस्तसि ॥ यथा । दुष्ट श
ब्द स्वरतोवर्णतोवेति ॥

स्वरपत्तनम । न० सामवेदे ॥ इ०
चि० शेष ॥

स्वरभङ्ग । पुं० गलरोगविशेषे ॥

स्वरभङ्गी । पुं० पक्षिविशेषे ॥

स्वरभेद । पुं० स्वरभङ्गरोगे ॥

स्वरमण्डलिका । स्त्री० वीणाविशेषे ॥

स्वरनासिका । स्त्री० वक्त्राम ॥

स्वरस । पुं० वस्त्रनिष्पीडितरसे ॥
यथा । अहतात्तत्क्षणाकृष्टाद्द्रव्या
त्क्षुण्णात्समुद्भवेत् । वस्त्रनिष्पीडि
तोयश्चस्वरसोरसउच्यते ॥ अश्मन :
कीटानिष्ठीनादिभिरनुपहत ॥
शिलापिष्टकल्के ॥ यथा । स्वोर
स स्वरस प्रोक्त कल्कोहपदि
पेषितइति ॥ कषायविशेषे ॥ य
था । सद्य च्छुन्नादाद्रं द्रव्यादस्वय
न्नादिपीडनात् । योरसस्त्वभिनि
र्यातिस्वरस सप्रकीर्तितइति ॥
अपिच । पिष्ट कल्कोविनीयश्च
रस पीडितोरस । क्वाथ क
षायोनियूहो नियसिं वैष्टकस्तथेति
रत्नमाला ॥

स्वरा । स्त्री० ब्रह्मणोज्येष्ठपत्न्याम् ।
गायत्रीसपत्न्याम् ॥

स्वरांश : । पुं० सङ्गीतेस्वरस्यार्द्धपा
देवा ॥

स्वराट् । पुं० स्वतोभासमानेसवित
रि ॥ इन्द्रियानपेक्षत : सिद्धज्ञा
नेपरमेश्वरे ॥ स्वेनैवराजते । रा
जृदीप्तौ ॥ सत्सूद्विषेत्यादिनाक्वि
प् ॥

त्रि॰ सुवर्णसदृशवर्णयुक्ते ॥
सवर्णकाल्लाल पुं॰ श्योनाके ॥
सवर्णवल्ली । स्त्री॰ लताविशेषे ।
रक्तफलायाम । काकवल्लाम् ॥
सवर्णवल्लीशिर पीडाचिदोषान्
कृन्तिदुग्धदा ॥
सुवर्णबिन्दु । पुं॰ विष्णौ । हरौ ॥
बिन्दवोऽथवा सवर्णसदृशाय
स्वस ॥ शोभनवर्णवर बिन्दुर
यस्मिन्मन्त्रे तदात्मकोवा ॥
स्वर्णशेफालिका । ) स्त्री॰ राजवृक्षे ॥
स्वर्णशेफाली । )
स्वर्णाङ्ग । पुं॰ कृतमाले । आरग
वधे ॥
स्वर्णारि । न॰ गन्धके ॥
स्वर्णाह्वय । पुं॰ नागकेशरे ॥
स्वर्णाह्वा । स्त्री॰ स्वर्णक्षीर्याम् ॥
स्वर्णुली । स्त्री॰ क्षुपान्तरे । हेमपु
ष्प्याम् ।
स्वर्भानव । पुं॰ गोमेदमणौ । पिङ्ग
स्फटिके ॥
स्वर्भानु । पुं॰ राहौ । स्वर आका
शोविपरीतलक्षणयाभाति । भा॰ ।
द॰भाभ्यानु । ऋभ्वादि ॥
सुर्भानुसूदन । पुं॰ सूर्ये ॥
सूर्यात । त्रि॰ मृते ॥
सूर्वीक । पुं॰ सुर्गे । हटूनकोटि
सुर्वीक सुर्गवर्यसमाप्य ॥
पष्ठाभीतिसालोक्यय सुर्गिवर्याणां

सुर्वासिमुख्यानामास्पद सुर्वीकइ-
त्यत्र ॥
सुर्वधू । स्त्री सुर्वेश्याया ॥
सुर्वापी । स्त्री॰ गङ्गायाम् ॥
सुर्वेश्या । स्त्री॰ उर्वशीप्रधानास्वप्सर
सु ॥ तायथा । घृताचीमेनकार
म्भाउर्वशीचतिलोत्तमा । सुकेशी
मञ्जुघोषाद्या कथ्यन्तेऽप्सरसोबु
धैरिति । स्व, स्वर्गस्यवेश्या ॥
सुर्वैद्यौ । पुं॰ २ अश्विनीसुतयोः
। नासत्ययोः । स्व स्वर्गस्यवै
द्यौ एतयोः सर्वपर्यायाणिच
द्विवचनान्ता । एकस्यविवक्षाया
मेकवचनान्तास्र । तयोश्च मार्कण्डे
यपुराणे । नासत्यश्चैवदस्रश्चस्मृतौ
द्वौनासतोश्विनाविति ॥
स्वलीन । पुं॰ दानवविशेषे ॥
स्वलोला । स्त्री॰ स्वाचारे ॥
स्वल्प । त्रि॰ अत्यल्पे ॥
स्वल्पकेशरी । पुं॰ कोविदारे ॥
स्वल्पकेशी । पुं॰ भूतकेशे ॥
स्वल्पतपा । पुं॰ तीर्थस्नानादिमा
त्रे तपोवुधौ ॥
स्वल्पपत्र । ) पुं॰ गौरसाके । म
स्वल्पपत्रक । )
धूलि । गिरिची ॥
स्वल्पपर्णिका । स्त्री॰ मेदायाम् ॥
स्वल्पफला । स्त्री॰ क्षुपप्रभेदे । का
कडून्याम् । क्षोद्रफले ॥

स्ववान् । त्रि॰ धनिनि । स्वमस्यास्ति मतुप् ॥

स्ववश । त्रि॰ अपराधीने । तन्त्रे ॥ स्वस्मिन् वशः आयत्तः ॥

स्ववासिनी । स्त्री॰ सुवासिन्याम् । चिरण्ट्याम् । स्वे पितृपित्रादिगृहवस्तु शीलमस्याः । सुप्यजाताविति णिनि ॥

स्ववीज । पु॰ आत्मनि । न॰ निजकारणे । स्वीयवीर्ये ॥

स्वसंवित् । स्त्री॰ स्वस्वरूपसम्यग्ज्ञाने ॥

स्वसा । स्त्री॰ भगिन्याम् । सुष्ठु अस्यति॰ अस्यतेर्वा । असु क्षेपणे । सावसेर्ऋन् ॥

स्वसुखम । न॰ स्वस्वरूपभूतेपरमानन्दे ॥

स्वस्तन वि स्वर्गभावे ॥

स्वस्ति अ॰ मङ्गलसमीहितसाधने । समीहितस्यापत्तौ । पुण्ये ॥ आशंसायाम् ॥ आशीर्वादे ॥ दानस्वीकारमन्त्रे । यथा । स्वस्तिदेवीवायुपत्नीप्रतिविश्वे सुपूजिता । आदानस्य प्रदानस्य निष्फलस्य ययाक्षिणीतिदेशीभागस्तम् ॥ अस्यति॰ असतिवा । असदीप्तौ॰ असु क्षेपणे वा । सुपूर्वकात्॰ क्तिच् । बाहुलकात्तिर्वा ॥ यद्वा । अस्ति । अ सभुवि । सावसेरिति ति । बहुल वचनात्मभूभाव ॥

स्वस्तिक । पु॰ मङ्गलद्रव्ये । तण्डुलचूर्णनिर्मितत्रिकोणाकाराविष्कारद्रव्ये ॥ चतुष्के ॥ दिष्टकप्रकारे ॥ रतताशिके । जिनानाञ्चतुर्विंशतिचिह्नान्तर्गतचिह्नविशेषे । रसोनके ॥ राजादीश्वरसद्मविशेषे ॥ चतुष्पथे ॥ सर्पाणां फणास्थनीलरेखाविशेषे ॥ पु॰ न॰ राजादीश्वराणां सद्मविशेषे । तल्लक्षणं यथा । प्रागुत्तरद्वाररहितं स्वस्तिकाख्यं धनप्रदमिति ॥ अपिच । स्वस्तिकं प्राङ्मुखं यत्स्यादलिन्दानुगतं भवेत् । तत्पार्श्वानुगतौ चान्यौ तत्पर्यन्तगतोऽपरः ॥ इति । सितावरणके ॥ अभिप्रेतार्थस्याविनाशे । अष्टाङ्गयोगस्य तृतीयाङ्गविशेषे ॥ तद्यथा । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत्प्रचक्षते इति ॥ स्वस्तिं क्षेमं कायति । कै शब्दे । आतोऽनुपसर्गे कः । मूलविभुजादित्वात् ॥

स्वस्तिमुख । पु॰ ब्राह्मणे ॥ लेखे । पत्रे ॥ त्रि॰ वन्दिनि ॥ स्वस्तिमुखेयस्य ॥

स्वस्तिवाचनम् । न॰ विहितमङ्गलकर्मारम्भे मन्त्रविशेषाणां पाठे । मन्त्रोच्चारणपूर्वकतण्डुलविकिरणे ।

न्दर्परूपप्रभयासमेत कान्त्यानन प्रीतिरतिप्रसन्न। स्वाति प्रसूतौ यदिमानवश्च भवामति प्राप्त विभूतियोग॥ त्रि॰ स्वाख्याता ते॥ अविद्याफल्गुनीष्वपोलुक॥

स्वाती। स्त्री॰ पञ्चदशर्क्षे॥

स्वातीपथ। पु॰ छायापथे। स्वातीवीथ्याम्॥

स्वातीवीथी। स्त्री॰ सूर्यादीनां मध्य मार्गे मध्यमवीथ्याम्॥ यथा। सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्य माख्य पञ्चम्य॰ तथार्द्धा पिपासा न्त्यो मघाद्यै वर्षि भिन्न ता। हस्त चित्रातथा स्वातिमध्यवीथ्याभिवि श्रुता। सत्रयोद्दशभि ज्ञानु राधाव यिराजगमीमता। एतास्वतीय स्त्रिषोमध्यमे मार्ग उच्यते बुद्धिमा युपपूजाम्॥

स्वात्मा। पु॰ स्वकीयात्मनि॥

स्वात्मामृतरसास्वाद। पु॰ स्वात्मैवामृतरस अमृतद्रवस्तस्यास्वाद्के॥

स्वाद। पुं॰। रसग्रहणे। स्वादनम्। स्वाद॰। घञ्॥

स्वादनम्। न॰ चर्वणे॥ स्वादनमशन भक्षणमाहारो भोजन स्वदनमितिष्व स्वायुच। प्रीतिकरणे॥

स्वादित। त्रि॰ आस्वादिते॥

स्वादिमा। पु॰ स्वादुतायाम्। स्वादो र्भावः। इमनिच्॥



स्वादु। पु॰ मधुररसे॥ यथा। मधुरस्तु रसश्चैवोऽम्लश्च। दुर्मधू लकर्कटिकिमवन्तू॥ गुडौले। गुडे॥ जीवकौषधौ॥ सुगन्धिद्र व्यभेदे। अगुरुसारे॥ स्त्री॰ द्राक्षा याम॥ त्रि॰ मिष्टे। रसनाकर्षि णि॥ मधुरे। मनोज्ञे। सुन्दरे॥ रुच्ये। स्वादुस्वादिनि। क्षपापि स्यु ण्॥

स्वादुकण्टक पु॰ विकङ्कते। गोक्षु रके॥ कण्टकोऽस्यास्ति। अर्श आद्यच। स्वादुश्चासौ कण्टकश्च। स्वादु कण्टकोऽस्य वा॥

स्वादुकन्द। स्त्री॰ विदार्याम॥

स्वादुका। स्त्री॰ नागदन्त्याम्॥

स्वादुखण्ड। पु॰ गुडे॥ मधुरभा गे।

स्वादुगन्धा। स्त्री॰ विदार्याम्॥

स्वादुङ्कारम्। अ॰ स्वादूकृत्येत्यर्थे॥ स्वादुमिणमुल्॥

स्वादुपर्णी। स्त्री॰ दुग्धिकायाम्॥

स्वादुपाका। स्त्री॰ काकमाच्याम॥ स्वादु पाकोऽस्या॥

स्वादुपिण्डा। स्त्री॰ पिण्डखर्जूर्या म्॥

स्वादुपुष्प। पुं॰ कटभ्याम।

स्वादुफलम। न॰ बदरीफले॥

स्वादुफला। स्त्री॰ द्राक्षायाम। कोली॥

वेनैवस्वभावोऽसाध्यो नित्यनिष्पन्न रूपत्वात् ॥
स्वामिजङ्घी । पुं॰ परशुरामे ॥
स्वामिता । स्त्री॰ स्वामित्वे ॥ स्वामिनोभाव । तस्यभावस्त्वतलौ ॥
स्वामी पु॰ कार्त्तिकेये । विशाखे । शिखिवाहने ॥ पत्यौ । भर्त्तरि । गुरौ । श्रीनाथे ॥ यथा । गुरु माम्नानभावितजपकालाहुतेशिवे । श्रीनाथदेवस्वामीतथिवादेवोधनीव देत् ॥ हरे ॥ हरौ ॥ परम हंसे ॥ वात्स्यायनमुनौ ॥ प्राक् स्वीयाहङ्कारे ॥ नृपे । भूपे ॥ त्रि॰ अधिपतौ । अस्यपर्यायास्तु । स्वामीत्वीश्वर पतिरोशिता । अधिभूर्नायकोनेताप्रभु परिवृढोधिपइति ॥ स्वमैश्वर्यमस्यास्तिस्वामि ऐश्वर्यंस्वामिनच् ॰ निपात्यते ॥
स्वाम्यम् । न॰ आधिपत्ये ॥
स्वायम्भुवः । पु॰ प्रथममनौ । ब्रह्मण ॰ पौत्रे ॥ स्वयम्भुवोऽपत्यम् । अण् । सञ्ज्ञापूर्वकस्यवि धेरनित्यत्वान्नगुण ॥
स्वायम्भुवी । स्त्री॰ ब्राह्मीमोषधौ ॥
स्वार । पु॰ उपतापरि ॥ स्वरति । स्वृशब्दोपतापयो । अच । स्वरएव । प्रज्ञाद्यण् ॥ भावेघञ् ॥
स्वारस्यम् । न॰ स्वभावे ॥ स्वर सस्यभाव । ष्यञ् ॥
स्वाराट् । पु॰ इन्द्रे । नमुचिसूदने ॥ स्व स्वर्गराजते । स्वेषुदेवेषु॰ स्वेनधनेनवा॰ आराजते । सत्सूद्विषितिक्विप । राजोतिलोपे॰ ढ्रलोपदूतिदीर्घ । जान्त ॥
स्वाराज्यम् । न॰ स्वर्गतन्त्रे । स्वराड्भावे ॥ ष्यञ् ॥
स्वारामगुच्छकम । न॰ ग्रन्थिपर्णे ॥ ऐन्द्रेपदे ॥
स्वारोचिष । पु॰ द्वितीयमनौ । स्वरोचिषोऽपत्यम । अण् ॥
स्वार्थ । पु॰ स्वप्रयोजने ॥ स्वी याभिधेये ॥ स्वकीयधने । स्वीयवस्तुनि ॥
स्वार्थदर्शन । त्रि॰ निजार्थावलोकने ॥ स्वस्यात्मनोर्थपश्यतीतितथा ॥
स्वार्थानुमानम । न॰ स्वानुमितिहेतौ ॥ तथाहि । स्वयमेवभूयोदर्शनेनयत्रधूमस्तत्राग्निरितिमहानसादौव्याप्तिंगृहीत्वा॰ पर्वतसमीपङ्गत ॰ तद्गतेचाग्नौसन्दिहान , पर्वतेधूमंपश्यन्व्याप्तिंस्मरतियत्रधूमस्तत्राग्निरिति । तदनन्तरवह्निव्याप्यधूमवानयपर्वतइतिज्ञानमुत्पद्यते । अयमेवलिङ्गपरामर्शइत्युच्यते । तस्मात्प

र्त्तैरवह्निमान् । इतिज्ञानमनुमि तिरुत्पद्यते । तदेतत्स्वार्थानुमा नम ॥

स्वाश्रय । त्रि० अनन्याश्रये ॥

स्वास्थ्य । न० आरोग्ये ॥ स्वस्थेऽवस्थाने ॥ सन्तोषे ॥ स्वस्थभाव । ष्यञ् ॥

स्वाहा । अ० देवहविर्दानमन्त्रे ॥ स्वाहते । स्वादयत्यदने । आप्रत्यय । पृषोदरादित्वाद्दस्यहः ॥ सुष्टु आहूयतेऽनेनवा । डाप्रत्यय ॥

स्वाहा । स्त्री० अग्ने पत्न्याम् । अ ग्नायाम् ॥ यथा । स्वाहादेवीवह्नि पत्नीप्रतिविश्वेषु पूजिता । ययावि नाहविर्दानं नशक्ताः सुराः समाह र्तुं देवीभागवतम् ॥ सुष्टु आहूयन्तेदेवाअनया । अन्येष्वपीतिड । टाप् ॥ स्वाहाऽस्त्यस्याः । अर्श आद्यच् ॥ स्वान्त्याजिह्वेतिवा ॥ वृत्तिविशेषे । तारिण्याम् ॥

स्वाहापति । पु० अग्नौ ॥ द्र० ध रणौ ॥ *

स्वाहाप्रिय । पुं० वैश्वानरे । वह्नौ ॥ स्वाहाप्रियायस्य । अपूर्वप्रिया द्विप्रत्ययविधानात्पुंवद्भाव ॥

स्वाहाभुज् । पु० विहुधे । देवता- याम् ॥

स्वित् । अ० प्रश्ने ॥ वितर्के । नानाप क्षावमर्शे ॥ पादपूरणे ॥ सुष्ठुएति

० अयतिवा । इण् गतौ । इगतौ वा । क्विप् । तुक् ॥

स्विदित । त्रि० स्वेदिते ॥

स्विन्न । त्रि० प्रस्विन्ने । स्वेदान्विते । घर्मयुक्ते ॥ स्विन्नोघर्मपिपीडितजनद् तिहला युध ॥ पक्वे ॥ यथा । अ स्वर्णेनगतप्राङ् सतुषधान्यमु च्यते । आम वितुषमित्युक्त स्विन्न मन्नमुदाहृतमितिवह्नि ॥

स्विष्टम् । न० सम्यग्यजने ॥ त्रि० स म्यक् पूजिते ॥

स्विष्टकृत । पुं० पूर्वाहुत्यन्तेक्रियमा णे होमविशेषे । सु० सुष्ठुशोभन दृष्ट सर्वमपिकरोति । कृञ् । क्विप् तुक् ॥

स्विष्टिकृत् । पुं० होमविशेषे ॥ शोभ नाइष्टि स्विष्ट । तांकरोति । कृञ् क्विपतुक् ॥

स्वीकार । पु० अङ्गीकारे । स्वीकर णम । भूयस्त्वमवृद्धपूर्वात्कृञो भावेघञ् ॥ यावतास्यात्सनिर्वा ह स्वीकुर्यात्तावदर्थवित् । आ धिक्येन्यूनतायाञ्चच्यवतेपरमार्थ त ॥

स्वीकृत । त्रि० अङ्गीकृते ।

स्वीय । त्रि० आत्मीये ॥ प्राक्‍क्री तोक्त ॥

स्वीया । स्त्री० स्वदारेष्वेवानुरक्ता यांनायिकायाम् ॥

हम्वा । स्त्री॰ हम्भायाम् ॥

हम्भा । स्त्री॰ गोध्वनौ । रम्भायाम् ॥

हय । पु॰ घोटके । तुरगे । अश्वे । वाजिनि । तत्सङ्ख्यितासङ्ख्या सप्तियश्रीलमाहया । हयति । हयगतौ । अच ॥ हिनोति वा । अच् ॥ शरीररथस्याकर्षणादिन्द्रियेषु ॥ धनूराशौ ॥

हयकातरा ।
हयकातरिका । ) स्त्री॰ अश्वकातरायाम् ॥ यथा । कातराहयपर्याये कातरान्ते प्रकीर्त्तिता । अश्वकातरिकातिक्ताबातघ्नीदीपनीपरा ॥ हू रा॰ नि॰ घट ॥

हयगन्धम । न॰ काचलवणे ॥

हयगन्धा । स्त्री॰ अश्वगन्धायाम् ॥ अजमोदायाम् ॥

हयग्रीव । पु॰ वेदोद्धारार्थं विष्णोरवतारविशेषे । असुरप्रभेदे ॥

हयग्रीवहा । पु॰ विष्णौ ॥

हयङ्कष । पु॰ मातलौ ॥

हयद्वीप । पु॰ लङ्कादिद्वीपवत्समुद्रान्तर्वर्त्तिद्वीपविशेषे ॥

हयनम् । न॰ पुरुषस्कन्धवाह्यं चौडोलाख्ययानविशेषे । कर्णीरथे ॥ हयगतौ । ल्युट् ॥

हयपुच्छी । स्त्री॰ माषपर्ण्यामोषधौ ॥ हयपुच्छमिवपर्णान्यस्याः । गौरादि ॥

हयप्रिय । पु॰ यवे ॥ हूतिहेमचन्द्र ॥

हयप्रिया । स्त्री॰ अश्वगन्धायाम् ॥ खर्जूर्याम ॥ हूतिराजनिर्घण्ट ॥

हयमार । पु॰ करवीरे ॥

हयमारक । पु॰ करवीरे ॥ हयानां मारक ॥

हयमारण । पु॰ अश्वत्थवृक्षे ॥

हयवाहन । पु॰ सूर्यपुत्रे । रेवन्ते ॥ त्रि॰ हयारोहे ॥ हयोवाहनमस्य ॥

हयवाहनशङ्कर । पु॰ रक्ताकाञ्चने ॥

हयशाला । स्त्री॰ मन्दुरायाम् । अश्वालये ॥

हयशीर्ष । पु॰ विष्णौ ॥

हया । स्त्री॰ अश्वगन्धाया ।

हयाध्यक्ष । पु॰ अश्वाध्यक्षे ॥ स तु लक्षणन्तु । हयशिक्षाविधानज्ञश्चिकित्सितपारग । अश्वाध्यक्षोमहीभर्त्तु स्वासनश्चप्रशस्यते ॥ हूति ॥

हयानन्द । पु॰ मुद्गे ॥

हयायुर्वेद । पु॰ अश्वचिकित्साशास्त्रे ॥

हयारि । पु॰ करवीरे ॥ महिषे ॥

हयाशना । स्त्री॰ शल्लकीवृक्षे ॥

हयाह्वया । स्त्री॰ अश्वगन्धायाम् ॥

हयी । स्त्री॰ वाम्याम् । अश्वायाम् । वडवायां । घोडी॰ हु॰भा॰प्र॰ ॥

हरिणनर्त्तक । पु० किन्नरे । मृगनर्त्तके ॥

हरिणप्लुता । स्त्री० अर्द्धसमवृत्तप्रभेदे ॥ विषमे सगणत्रितय लगावथ समे न गणौ भगणौ च र । यथ कामम्मदोद्धता कविकुञ्जरसत्ता हरिणप्लुता ॥

हरिणहृदय । त्रि० भीरौ ॥

हरिणाक्षी । स्त्री० रमण्याम् । मृगलोचनायाम् । हट्टविलासिनीनामगन्धद्रव्ये ॥

हरिणाङ्क । पुं० चन्द्रे । शशिनि ॥

हरिणी । स्त्री० मृग्याम् । पद्मायाम् ॥ हरिणाक्षी । पुंयोगादित्यङीष् । हरितायाम् ॥ वर्णादनुदात्तादितिङीष्नौ ॥ नारीभेदे । चा कथोदिति ॥ सुवर्णप्रतिमायाम् स्वर्णयूथ्याम् ॥ मञ्जिष्ठायाम ॥ सूर्वेश्यायाम् ॥ अत्यष्टिच्छन्द १७ प्रभेदे । तल्लक्षणं यथा । नसमरसलागः षड्वेदैर्हयैर्हरिणी मता । उदाहरणं । भवति हरिणीनृत्यैर्नृत्यैर्स लीलारसाम्बुधिविष्टपैरिति ॥ यथा । व्यधित स विधिर्नेत्रे नीत्वा ध्रुवं हरिणीगणात् । ब्रजमृगदृशां सन्दोहश्चोत्सवनश्रियाम् । यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे व्यकिरदधिकां बद्धाकाङ्क्षो विलोलविलोचनम ॥

हरित् । पु० अश्वविशेषे । नीलपीतमिश्रितवर्णे । पालाशे । हरिते । हराङ्कितिभाषाप्रसिद्धे ॥ मुद्गे । स्त्री० दिशि । हरिद्रायाम ॥ पु० न० तृणे ॥ त्रि० हरिद्वर्णविशिष्टे ॥ हरति० हरन्ति विनयन्त्यन्धकारम् । हृञ्० । हृसृरुहियुषिभ्य इतिरिती ति ॥

हरित । पु० हरिद्वर्णे । पालाशे । हरा० कू० भो० प्र० ॥ सन्यानक तृणे ॥ न० स्थौणेयके । त्रि० हरिद्वर्णयुक्ते ॥ हरति । श्याश्यामितन्निती तन् ॥

हरितकम् । न० शाके ॥ शिग्रौ ॥ हरितो वर्णोऽस्यास्ति । अर्श आद्यच् । स्वार्थे कन । हरति । क्रियतेवा । हृञ्० । हृश्याभ्यामितन् । कन ॥

हरितपत्रिका । स्त्री० पाठ्याम् ॥

हरितशाक । पु० शिग्रौ ॥

हरिता । स्त्री० दूर्वायाम् । जयन्त्याम । जाह्नी० कू० प्र० पुष्पदन्ते ॥ हरिद्रायाम् ॥ पाठ्याम् ॥ कपिलद्राक्षायाम् ॥ नीलदूर्वायाम ॥ वर्णादनुदात्तात्तोपधात्तो न इति पक्षे ङीपनकारादेशयोरभाव ॥

हरितालम् । न० धातुविशेषे । पिञ्जरे । पीतके । तालके । आले । हरितालके ॥ तत् हरेर्वीर्यम् ।

हृतिषु ।

हरिद्वारम् । न॰ तीर्थविशेषे । गङ्गाद्वारे । मायापुर्याम् ॥

हरिधामा । पु॰ मुङ्गे ॥

हरिनाम । न॰ श्रीहरेराख्याने ॥

हरिनेत्रम् । न॰ श्रीहरेश्चक्षुसि । श्वेतपद्मे ॥

हरिनेत्र । पु॰ पेचके । घूके ॥

हरिमणि । पु॰ गारुत्मते । मरकतमणौ ॥ हरिद्वर्णोमणिः । आप्यपार्थिवादिः ॥

हरिमृङ्ग । पु॰ शारदमुङ्गे ॥

हरिपदम् । न॰ विष्णुपदे ॥ रवेः सङ्क्रान्तिविशेषे ॥ यथा । धनुर्मिथुनसङ्क्रमतोऽयनमेभवेद्धरिपदमिति । २ । ५ । ८ ११ ॥

हरिपर्णम् । न॰ मूलके ॥

हरिप्रस्थ । पुं॰इन्द्रप्रस्थे ॥

हरिप्रिय । पु॰ कदम्बवृक्षे ॥ विष्णुक्रान्दे ॥ पीतभृङ्गराजे ॥ बन्धूके ॥ शङ्खे ॥ करवीरे ॥ न॰ उशीरे ॥ कृष्णचन्दने । कालीयके ॥

हरिप्रिया । स्त्री॰ लक्ष्म्याम् । पद्मालयायाम् ॥ हरेः प्रिया ॥ तुलस्याम् ॥ वनखर्जूरे ॥ गङ्गादिचतस्रषु ॥ यथा । गङ्गासरस्वतीलक्ष्मीश्चेतास्तिस्रः प्रियाहरेः । तुलसीसहितास्ताश्च चतस्रः कीर्त्तिताः शुभा इतिदेवीभागवतम् ॥

हरिवालुकम् । न॰ एलवालुके । ऐलेये ॥ हरिवर्णवालुकम् ॥ पु॰ हारीतपक्षिणि ॥

हरिभक्त । पु॰ हरिसेवके ॥ तल्लक्षणं यथा । सर्वजीवेषुयोविष्णुभावयीत्समताधिया । हरौकरोतिभक्तिञ्च हरिभक्तः सचस्मृतः ॥

हरिभद्रम् । न॰ हरिवालुके ॥

हरिभुक् । पु॰ मयूरे ॥ सर्पे ॥

हरिमा । पु॰ काले ॥ हरति । हृञ् ॰ । हृभृधृसृस्तृशृभ्यइमनिच् ॥

हरिमन्थ । पु॰ अग्निमन्थे । गणिकारिकायाम् ॥ चणके ॥ हरिभिर्मथ्यते । मन्थविलोडने ॥ कर्मणि घञ् ॥

हरिमन्थक । पु॰ चणके ॥ स्वार्थे कः ॥

हरिमन्थज । पु॰॰ चणके ॥ हरीन् अश्वान् मन्थजनयति । अमो॰ अन्येष्वपीतिडः ॥

हरिमन्दिरम् । न॰ विष्णोरालये ॥ तिलकविशेषे ॥ यथा । तिलकान्तर्ईपुण्ड्रस्य मध्यछिद्रं विचारद । यद्विष्णुशिलाटेष्टद्विद्धि वहरिमन्दिरम ॥ हरेः सर्वाबतारायामश्लादी नामिदिशिवत । ऊर्ध्वनामितिलकमेव हरिमन्दिरमितिपद्मपुराणम ॥ अपिच । नासिकायास्त्रिभागेषोभागोमामेषसोभवेत् । नुवोर्मध्य ।

यथा हरिहरमनुसरसाधीयारप
यातुमिच्छसिचेच्छनुजलधे रूपत
भयउवदसिवस्तुतएक नजानासि ।
हरिहरक्षेत्रम् । न० हरिक्षेत्रे ॥
हरिहरात्मक । पु० शिववृषभे ॥
गरुडे ॥
हरीतकी । स्त्री० स्वनामख्यातप्रसिद्धे पथ्या
वृक्षे । तत फले ॥ तत्पर्य्यायायथा
अभयाव्यथापथ्याकायस्थापूतनाऽ
मृता । हरीतकीहैमवतीचेतकीश्रे
यसीशिवेति ॥ अस्या प्रभेदागु
णाश्चयथा । हरीतक्यमृतोत्पन्नासप्त
भेदैरुदीरिता । तस्यानमानिवर्णाश्च
लक्ष्माण्यथयथाक्रमात् ॥ विजयारो
हिणीचैवपूतनाचामृताऽभया । जी
वन्तीचेतकीचेतिनाम्नासप्तविधास्मृ
ता ॥ अलाबुवृत्ताविजयावृत्तारो
हिणीमता । स्वल्पत्वकपूतनाज्ञे
यास्थूलमांसाऽमृतास्मृता पञ्च
रेखाभयाप्रोक्ताजीवन्तीस्वर्णवर्ण
भाक त्र्यस्रा तु चेतकीविज्ञाद्दिष्या
सांरूपलक्षणम् ॥ विन्ध्याद्रौविजया
हिमाचलभवाश्चान्तकीपूतना
सिन्धौस्याद्रथरोहिणीतुविजयाजा
ताप्रतिष्ठानके । चम्पायाममृता
ऽभयाचजनितादेशेसुराष्ट्राह्वयेजी
वन्तीतिहरीतकीनिगदितासासप्त
भेदाबुधैः ॥ सर्वप्रयोगेविजयाप्र
रोहिणीक्षतेषुलेपेषुचपूतनोदिता
। विरेचनेस्यादमृतागुणाधिकाजी
वन्तिकास्याद्दिहजीर्णरोगजित् ॥
त्र्यस्रातकीसर्वरुजापहारिकानेत्रा
मयघ्नीमभयांवदन्तिताम् । तुल्य य
थारोगमियप्रयोजिताज्ञेयागुणा
ढ्यानकदाचिदन्यथा ॥ चेतकीचद्वि
ताहस्तेयावत्तिष्ठतिदेहिन । ता
वद्विरिच्यतेवेगात्तत्प्रभावान्नसंश
य ॥ सप्तानामपिजातीनाप्रधान
विजयास्मृता । सुखप्रयोगसुलभा
सर्वव्याधिषुशस्यते ॥ स्निग्धाप्सु नि
मज्जतियासाश्चैवगुणवतीभिषक
प्रवरे । यस्यायस्याभूयोनिमज्जन
सागुणाढ्यास्यात् ॥ हरतेप्रसभंव्या
धीन्भूयस्तरतियद्वपु । हरीतकी
तुसाप्रोक्तातकीतिदीप्तार्थका ॥
हरीतकीतुकषायानुलोम्यं गवाग्र
हे । शिशिरज्वरजीर्णगुर्वीगरेव
शस्यते ॥ इतिराजनिघण्ट ॥
अपिचभावप्रकाशे । नवास्निग्धाघ
नावृत्तागुर्वीक्षिप्तचयाम्भसि । नि
मज्जेत्सासुप्रशस्ताकथितातिगुणाप्र
दा ॥ नवादिगुणयुक्तत्वं तथैकत्रवि
कर्षता । हरीतक्याःप्रशस्तत्वम्
च्छ्रेष्ठमुच्यते ॥ चर्विताबर्द्धयत्यग्नि
पेषितामलशोधिनी । स्विन्नासङ
ग्राहिणीपथ्या भृष्टाप्रोक्तात्रिदोषनु
त् ॥ उन्मीलिनीबुद्धिबलेन्द्रियाणां
निर्मूलिनीपित्तकफानिलानाम् ।

प्रान्तपतत्पतङ्गपवनव्यालोलदीपा
ङ्कुरच्छायाचञ्चलमाकलय्यसकल-
सन्तोषनान्तं गता ॥ हरतिमन ।
हृञ्० । अन्नादित्वादसुन्०सुटच् ॥
हर्य्यक्ष । पु० सिंहे ॥ हरिणीपिङ्ग
लेअक्षिणीयस्य । बहुव्रीहावि
तिषच् ॥ कुबेरे ॥
हर्य्यत । पु० वाजी ॥ अश्वे ॥ ह
र्यति । हर्य गतिकान्त्योः । भृमृ
दृशियजिपर्विपच्यमितमिनमिहर्षि
भ्योऽतच् ॥ हर्य्यत सर्वैः स्पृह
णीयइतिवेदभाष्यम् ॥
हर्य्यश्व । पु० इन्द्रे । हरिहये ॥
कृ० कपित् ॥
हर्ष । पु० मुदि । प्रीतौ । धर्मवि
। मुखे ॥ इष्टप्रियलाभेष्टागमाद्यु
पातादिहेतुरानन्दाभिव्यञ्जकचित्त
वृत्तिविशेषो हर्षः स्मृतः ॥ हृ
षतुष्टौ ॥ घञ् ॥
हर्षक । पु० पर्वतविशेषे ॥ त्रि०
हर्षकारके ॥
हर्षक्षय । पु० धातुक्षये ॥
हर्षण । पु० अर्थदृग्भेदे ॥ श्राद्ध
देवे ॥ योगविशेषे ॥ तत्रजातस्तु
सुभगाङ्ग स्फुटपद्मने
त्र आत्मप्रवलेविनयोपपन्न ।
प्रसूतिकालेयदिहर्षणश्च ध्यादमर्ष
णोजनवर्जनकदाचित ॥ न० ह
र्षे ॥ त्रि० हर्षके । हर्षकारके ॥

हर्षमाण । त्रि० विकुर्वाणे । प्रमन
सि । हृष्टमानसे । हर्षति । हृषु
अलीके । ताच्छील्ये चानश् ॥
हर्षयित्नु । पु० पुत्रे । सुते ॥ न०
काञ्चने । स्वर्णे ॥ हर्षयति । हृष
तुष्टौ । तनिवृषीभ्यामित्नुच् ॥ त्रि०
हर्षवाहि ॥
हर्षस्वन । पु० किलकिलायाम् ॥
बू० त्रि० श्रेष ॥
हर्षणी । स्त्री० विजयायाम् ॥
हर्षित । त्रि० हृष्टे । सञ्जातहर्षे
॥ इषु० । ता । हर्षः सञ्जातोस्य
वा । इतच् ॥
हर्षुल । पु० मृगे ॥ कामिनि । का
मुके ॥ हृष्यति । हृषतुष्टौ । हृषे
रुलच् ॥
हलम् । न० लाङ्गले । गोदारणे । सी
रे ॥ हलति । हल विलेखने । अ
च् ॥ अथगोदानमेदोषादेशीय
था । अष्टागवधर्म्यहलं षड्गवजीवि
तार्थिनाम । चतुर्गवंनृशंसाना
द्विगवब्रह्मघातिनामितिवारीत ॥
हलदण्ड । पु० ईषायाम् । हलयु
गयोर्मध्यकाष्ठे ॥
हलदी । स्त्री० हरिद्रायाम् । इ०
र० वट ॥
हलधर । )
हलभृत् । ) पु० बलदेवे ॥ हा
लिकि ॥

हलपद्धति । स्त्री० लाङ्गलपद्ध तौ । सीतायाम् । हलरेखायाम् । हलस्यपद्धति ॥

हलप्रवाह । पु० सीरकर्षणे ॥

हलभूति । स्त्री० कृषिकर्मणि ॥

हलभृति । पु० मुनिविशेषे । उपव र्षे । कृषिकर्मणि ॥

हलराख्यम् । न० आकुल्ये । का स्फगपुष्पकी । तरवट० इ० भास्मो रभाष प्र० ॥

हलरेखा । स्त्री० सीतायाम् ॥ हल स्यरेखा ॥

हला । अ० नाव्योक्त्यासख्यामन्त्रणे ॥ समानाभिस्तथासख्यो हलाभाष्या० परस्परमितिभरत ॥ हल० । वा बहुलकादाप्रत्यय० ॥

हला । स्त्री० सख्याम् ॥ । वायस्म लाद्धलाट्टाप ॥ मद्ये । क्षी ॥ भूमौ ॥

हलायुध । पु० बलदेवे ॥ हलमायु धयस्य ॥ हलस्यबलभद्रस्यगगनादा गत त्वलदितिपुराणस्य युद्धेष्वो गेविष्णुपुराणम् ॥

हला,ह । पु० चित्रिताश्वे ॥

हलाहल । पु० अञ्जनसर्पे ॥ हयभा शे ॥ पुनि । बुद्धभेदे ॥ पु० न० विषप्रभेदे ॥ हलतिकठरम् । हल० । अच । नञर्ति० आहलतिवा । अच् । अहलम्० आहल वा । लत कर्मधारय ॥ स्त्री० अञ्ज नायाम ॥ हल्याम् ॥

हलि । पु० महहले । लाङ्गल्याम् । कृष्टसमीकरणार्थेस्थूलकाष्ठे ॥

हली । पु० बलभद्रे ॥ हलोस्त्यस्य । सुखादिभ्यश्चेतीनि ॥ कर्षके ॥

हलिनी । स्त्री० लाङ्गलिकायाम् ॥ हलसमूहे ॥

हलि प्रिय । पु० कदम्बवृक्षे । हलि नोबलदेवस्यप्रिय० सुरायाअधि वासनत्वात् ॥

हलिप्रिया । स्त्री० सुरायाम । मदि रायाम् ॥ हलिन० संकर्षणस्य प्रिया ॥

हली । स्त्री० कलिकारीयाम् ॥

हलीन : । पु० शीतकाम् । शाक वृक्षे ॥

हलीमक । पु० पाण्डुरोगप्रभेदे ॥ यदातुपाण्डोर्वर्ण स्याद्धरित श्यावपीतक । बलोत्साहक्षयस्त न्द्रामन्दाग्नित्वं मृदुज्वर ॥ स्त्री ष्वहर्षोऽङ्गमर्दश्चदाहस्तृष्णारुचिभ्र मा । हलीमकंतदातस्यविद्याद् निलपित्ततद्वतिभावमिश्र ॥ पा ण्डौ पाण्डुरोगिणे ॥

हलीषा । स्त्री० लाङ्गलदण्डे ॥

हल्यम । त्रि० हलकृष्टक्षेत्रे । कृष्टे ॥ हलेनकृष्टम्० हलस्यकर्ष० । मतजनहलादितियत् ॥

हल्या । स्त्री० हलसमूहे ॥ हलानां समूहः । पाशादिभ्यो यः ॥

हल्लकम् । न० रक्तसन्ध्यके । रक्तसौगन्धिकाख्याते । हेला० इ० गौ० भा० प्र० पुष्पे ॥ रक्तवर्णविकालविकाशिपुष्पविशेषे० कुञ्जन्ये ॥ हल्लति । हल्लविकसने । ण्वुल् ॥ यद्वा । हल्लनम् । सम्पदादित्वात् क्विप् । हल्लं लाति । लादाने । आतोऽनुपसर्गे कः । संज्ञायां कन् ॥

हल्लनम् । त्रि० प्रचलायिते । इ० ज० धर ॥

हल्लीषम् । न० गोपीनां मण्डलीनृत्ये ॥ स्त्रीणां हल्लीष सहनर्त्तनमिति त्रिकाण्डशेष ॥

हल्लीषकम् । न० स्त्रीणां मण्डलिकानृत्ये । मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तदिति हेमचन्द्रः ॥ एकस्य पुंसो बह्वीभिः स्त्रीभिः सह क्रीडने । तत्तु रासक्रीडा । यथा । गोपीनां मण्डलीनृत्यबन्धे हल्लीषकं विदुरिति केशवात् । तल्लक्षणं रासशब्दाद्द्रष्टव्यम् ॥

हव । पु० आह्वाने । निदेशे ॥ आह्वाने । हूतौ ॥ अध्वरे । समतक्रौ ॥ ह्वानम् । ह्वेञ् स्पर्द्धायाम् शब्दे च । भावेऽनुपसर्गस्य अप् सम्प्रसारणञ्च ॥ हूयतेऽनेनेति वा ॥ आहवे० इ० तवेदविद । आहूयन्ते परस्परं युद्धार्थं योद्धारोऽत्र ॥

हवङ्ग । पु० कांस्यपात्रे दधिमिश्रितान्नभक्षणे । इति कश्चित् ॥

हवनम् । न० होमे ॥

हवनायु । पु० अग्नौ ॥

हवनी । स्त्री० हवनकुण्डे ॥

हवनीयम् । त्रि० हविषि । होमीयद्रव्ये ॥ हूयते इ० अनीयर् ॥

हविषी । स्त्री० होमकुण्डे ॥

हविरशन । पु० अग्नौ ।

हविर्गन्धा । स्त्री० शम्या ॥

हविर्गृहम् । हविर्गेहम् । न० हवनगृहे । होचीये ॥

हविर्भुक् । पु० अङ्गिरस पुत्रे पितरि ॥ अग्नौ ॥ हवींषि । भुङ्क्ते । भुज० । क्विप् ।

हविर्भूः । स्त्री० पुलस्त्यस्य पत्न्याम् ॥

हविर्मन्थ । पु० अग्निमन्थे । श्रीपर्णे ॥

हविष्कृत् । स्त्री० देवानामर्थाय हविः सम्पादयति तस्याम् ॥

हविष्मत् । पु० हविर्भुजि । त्रि० आज्यादिमति ॥ ध्यानभावनावति ॥

हविष्यम् । न० हवनीये ॥ भोज्यभेदे ॥ मुन्यन्नादिषु ॥ घृते ॥ हविषे हितम् । उगवादिभ्यो यत् ॥

हविष्यान्नम् । न० हविष्ये । व्रतादा

वह्नौयद्द्रव्यंविशेषि ॥ हविष्यघृत द्वन्द्व ॥

हवि । न॰ होतव्यद्रव्ये । सान्नाय्ये । देवतोद्देशेनाग्नौत्यज्यमानद्रव्ये । त्यागप्रत्ययक्रियायाः साक्षात् कर्मकारके ॥ तद्द्विविधम् । पुरोडाशरूपमाज्यरूपञ्च ॥ घृते । सर्पिष ॥ हविषापरिणामोय यदेतद् खिल जगत् ॥ हूयते । हुदानाद नयोः अर्चिशुचिहुसृपीत्यादिनेसि ॥ मुन्यन्नानिपय सोमोमांसंयच्चानुपस्कृतम् । अक्षारलवण ञ्चैवप्रकृत्याहविरुच्यतइतिमनु ॥

हवुषा । स्त्री॰ हपुषायाम् ॥

हवै । अ॰ हन्तार्थस्मरणार्थौनिपातौ ॥ प्रसिद्धार्थद्योतकौवैदेनिपातौ ॥

हव्यम् । न॰ दैवेऽन्ने । हवनीये । हूयन्तेप्रीयन्तेदेवायेन॰ हूयते॰ प्रक्षिप्यतेवा । हु॰ । अचोयत् । गुणावादेशौ ॥

हव्यपाक । पु॰ चरौ ॥ पच्यते । पचे कर्मणिघञ् । हव्यञ्चतत्॰ पाकश्च कर्म॰ । भावेघञ् । पचनम्॰ पाक । हव्यस्यपाक॰ पाकोऽधिकरणम् ॥

हव्यवाह: । पु॰ अग्नौ ॥

हव्यवाहन । पुं॰ अग्नौ ॥ हव्यं वाहयति । ल्युन्नाद्यादिल्यु: ॥

हव्याश ।)
हव्याशन ।) पु॰ अग्नौ ॥
हव्येश ।)

हस । पु॰ हास्ये ॥ हसनम् । हसेर्हसनो । लनहसोर्वाप् ॥

हसन् । त्रि॰ हास्यं कुर्वति ॥ हसेर्लट् शतृ ॥

हसनम् । न॰ हास्ये ॥ हसै॰ । ल्युट् ॥

हसनी । स्त्री॰ अङ्गारधान्याम् ॥ हसति । हसै॰ । कृत्यल्युटइतिल्युट् । टिड्ढेतिङीप् ॥

हसनीमणि । पु॰ पर्यंशे । अग्नौ ॥

हसन्तिका । स्त्री॰ हसन्त्याम् । अङ्गारधान्याम् ॥

हसन्ती । स्त्री॰ अङ्गारधान्याम् ॥ मल्लिकाप्रभेदे ॥ शाकिनीविशेषि ॥ हसति । हसै॰ । लट शतृ । उगितश्चेतिङीप् । शप्श्यनोर्नित्यमितिनुम् ॥

हसितम् । न॰ अट्टहास्ये ॥ हास्ये ॥ त्रि॰ विकसिते । फुल्ले ॥ हसै॰ । नपुंसकेभावेक्तः ॥

हस्त । पु॰ करे । पञ्चशाखे । भये । पाणौ । शब्द॰ क॰ भा॰ प्र॰ ॥ करिकरे शुण्डायाम् । स॰ कु॰ भा॰ प्र॰ ॥ मानभेदे । चतुर्विंशत्यङ्गुलमितेसप्तकोष्ठकरे ॥ यथा । यथानातषड्जमैरेकमङ्गुलवाहभिर्मंत्स । अदीर्घंशोजितैर्हस्त

चतुर्विंशद्भिरङ्गुलैरिति। शिश्नो पुराणम। द्रुमेदे। चयोदशर्क्षे। हस्तायाम्॥ यथा। पुष्योहस्तोभि चमघ्याश्विनस्यचस्वार्योह, सर्वदि गहारक्षाणीति॥ वैश्यात्परोऽन्नातै॥ यथावैश्यहस्त॰ कामसमुद्रस्य र्थं। हसति॰ हस्यतेवा। हसि॰। हसिमृधिणिञितनू॥ चि॰हस्ता यांजातै॥ अविह्याफल्गुनौस्यणीलुक। न॰ चर्मप्रवीशिकायां॥

हस्तधारणम्। न॰ परित्राणे॥ प्राक्स्तु मुद्यतस्यहस्तस्यधारणरोध। रक्ष कास्यपृष्ठेहस्तस्थापनवा॥ भुक्यहर्षं॥

हस्तपृच्छम्। न॰ कन्युषि। कलमषि। इार्थौका॰ हृ॰ भा॰ प्र॰॥

हस्तवारणम्। न॰ परित्राणे। मारणोद्यतस्यनिवारणे॥ हस्तेन॰-हस्तस्यवा॰ वारणम्॥ करेणनिषेधे॥

हस्तबिम्बम। न॰ चन्दनादिनादेह विलेपनविशेषे। स्थासकी॥

हस्तसिद्धि। स्त्री॰ भृतौ। वेतने॥ हस्ताभ्यांसाध्यासिद्धि॥

हस्तसूत्रम्। न॰ करसूत्रे। कगणा॰ कृतिविवाहेप्रसिद्धे॥

हस्ता। स्त्री॰ अश्विन्यादौत्रयोदशर्क्षे॥ तच्चजातकफलंयथा। दातायश स्वीसुतरामनस्वीभूदेवदेवार्चनस्य न नयज्ञ। प्रसूतिकालेकिलयस्यहस्ताहस्तस्थितातस्यसमस्तसम्पत्॥

हस्ताङ्गुलि। स्त्री॰ करशाखायां॥

हस्तामलकम। न॰ करस्थितामलकीफले। करस्थितस्वच्छजले। वेदान्तग्रन्थविशेषे। पुं॰ शङ्कराचार्यशिष्यविशेषे॥

हस्तावलम्बनम्। न॰ उत्तरापोशाने॥

हस्तास्त्रम्। न॰ प्रहरणे। हथियार हृ॰ भा॰ प्र॰॥

हस्तकन्द। पु॰ वृहत्कन्दविशेषे। कुष्ठहन्तरि॰ गजकन्दे॥

हस्तिकन्दक। पु॰ हस्तिकन्दे। स्वार्थेक॥

हस्तिकरञ्ज। पु॰ महाकरञ्जे॥

हस्तिकर्ण। पु॰ उरुबूके। एरण्डे। रक्तैरण्डे। स्वनामख्यातेपलाशप्रभेदे॥ हस्तिकर्णं परत्वध्नौ मेधायुर्बलवर्द्धन॥ हस्तिकन्दे॥ गणदेवताप्रभेदे॥

हस्तिकर्णक। ) पु॰ हस्तिकर्णाभिधपलाशे। किंशुके॥
हस्तिकर्णदल। )

हस्तिकारवी। स्त्री॰ अजमोदायां।

हस्तिशौलि। गोमघोरटायाम्॥

हस्तिगिरि। पुं॰ काञ्चीदेशे॥

हस्तिघोषा। स्त्री॰ कोशातकीप्रभेदे। महाकोशातक्याम्। तुनिया॰ घोयातोरजो॰ हृ॰ भा॰॥

हस्तिपारिणी । स्त्री० मद्याकरङ्कं ॥
हस्तिचेष्टितम् । न० गजेङ्गिते ॥ त
द्यथा । तत्रादौ दन्तकल्पनविधान
म । दन्तस्य मूलपरिधिं द्विरायत
प्रोज्झ्य कल्पयेच्छेषम् । अधिकम
नूपचराणां न्यून गिरिचारिणां कि
ञ्चित ॥ कल्पितदन्तच्छेदलक्षणान्तु
। श्रीवत्सवर्द्धमानच्छत्रध्वजचामरा
नुरूपेषु । छेदे दृष्टे व्यारोग्यविज
यधनवृद्धिसौख्यानि ॥ प्रहरणस
दृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्ति
। लोष्टे तु लब्धपूर्वस्य भवति देशस्य
सम्प्राप्ति ॥ स्त्रीरूपे स्वविनाशो भृ
ङ्गारेऽभ्युत्पत्तिः सुते स्यात् । कुम्भे
न निधिप्राप्तिर्यात्राविघ्नं च दण्डेन ॥
४ ॥ कृकलासकपिभुजङ्गेष्वसुभिक्ष
व्याधयो रिपुवशित्वम् । गृध्रोलूका
ध्वाङ्क्षश्येनाकारेषु जनमरकः ॥
५ ॥ पाशेऽथवा कबन्धे नृपमृत्युर्ज
नविपत्स्रुतेऽरक्ते । कृष्णे श्यावे रूक्षे
दुर्गन्धे चाशुभं भवति ॥ शुभच्छेदल
क्षणन्तु । शुक्लः समः सुगन्धिः
स्निग्धश्च शुभावहो भवेच्छेदः । ग
लनस्रवणानि च दन्तस्य समानि
भङ्गेन । अथ शुभाशुभमाह । मू
लमध्यदशनाग्रसंस्थिता देवदैत्यमनु
जाः क्रमात्ततः । स्फीतमध्यप
रिपेलवं फलं शीघ्रमध्यचिरकालस
म्भवम् ॥ अतः विशेषफलमाह ।
दन्तभङ्गफलमत्र दक्षिणे भूपदेशबल
विद्रवप्रदम् । वामतः सुतपुरोहित
भयान् हन्ति साटविकदारनायकान्
॥ पुनरपि । आदिशेदुभयभङ्गदर्शना
न्नृपार्थिवस्य सकलं कुलक्षयम् । सौ
म्यलग्नतिथिभादिभिः शुभैर्वर्द्धते
शुभमथोऽन्यथा भवेत् । दन्तभङ्गस्य
विशेषफलमाह । क्षीरमिष्टफलपुष्प
पादपेष्वापगातटविघट्टनेन वा । वा
ममध्यरदभङ्गखण्डने शत्रुनाशकृद
तोऽन्यथा परम् ॥ ११ ॥ अधुना गजे
ङ्गितमाह । स्खलितगतिरकस्मात् त्रस्त
कर्णोऽतिदीनः श्वसिति मृदु दीर्घं
न्यस्तहस्तः पृथिव्याम् । द्रुतमुकुलि
तदृष्टिः स्वप्नशीलो विलोमोऽभयकृ
द्विहितभक्षी नैकशोऽसृक्शकृत्कृत्-
॥ १२ ॥ शुभचेष्टितमाह । वल्मी
कस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छ
या हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरि
तपदगतिर्वक्त्रमुन्नम्य चोच्चैः । क
क्ष्यासन्नाहकाले जनयति च मुहुः शी
त्करं बृंहितं वा तत्कालं वा मदाप्तिर्ज
यकृदथ रदं वेष्टयेद्दक्षिणं च । प्रविश
न वारिणि शारणहृदयाहितनाशाय-
भवेन्नृपस्य । याहगृहीत्वोत्तरथाहि
पश्यतीयात्स्यल तस्मिन्नरभम्
॥ १४ ॥ इति वाराही ९३ अध्यायः ।
हस्तिच्छाया । स्त्री० गजच्छायायाम्
। कुञ्जरच्छायायाम् ॥

हस्तिजिह्वा । स्त्री॰ नाडीविशेषे यथा । हस्तिजिह्वोत्पलप्रख्यानाडी तस्याः पुरः स्थिता । तस्याइडा या । सव्यभागस्तम् ऊर्द्ध्वादिपादाङ्गुष्ठान्तमाश्रिता । हस्तिजिह्वाख्या नाडी दक्षिणे चक्षुषि स्थितेति ॥

हस्तिदन्त । पु॰ मूलकी । मूली॰ इ॰ प्र॰ मूली ॥ नागदन्ते । खूंटी॰ इ॰ भा॰ प्र॰ ॥ हस्तिनो रदे ॥

हस्तिदन्तकम् न॰ मूलकी ॥

हस्तिदन्तफला स्त्री॰ एर्वारौ । ककडी॰ इ॰ भा॰ प्र॰ ॥ हस्तिदन्तवत् फलान्यस्याः ॥

हस्ती । पु॰ महामृगे । पीलो । तस्य पर्य्यायास्तु दन्ती दन्तावलो हस्ती॰ द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी । इभः स्तम्बेरमः पद्मीति । हस्तः शुण्डोऽस्यास्ति । हस्त+इनि ॥ हस्तिनापुरस्य निर्माणकर्त्तरि सुहोत्रराजपुत्रे ॥ यथा । बृहत्क्षत्रस्य सुहोत्र॰ पुत्रः सुहोत्राद्धस्तीति विष्णुपुराणम् । नारी हेतु कामुकोन्मत्त गजराजाद्दावनया तद्वशमुक्त तन्तुपरले हविषोद्दतीति कालिकापुराणम् ॥

हस्तिनख । पु॰ नगरीपाणौ । पूर्द्वारिमृत्कूटे । पुरद्वाराऽऽवरणार्थं कृतेऽस्मिन्मृत्कूटे ॥ दुर्गपुरद्वारसमीपे युद्धार्थं यद्दूरतटमन्तःसोपानयुतमृत्कूटं स्थाप्यते॰ विपक्षे सुखारोहादिकं छिद्यते तत् हस्तिनखशब्दार्थः ॥ कूटपूर्द्वारि यद् हस्तिनखस्तस्मिन्नमरः । हस्तिनो नख इव । हस्तिनो नखस्य तद्वृत्तिवा । खनुचवद्वारत्वे । अन्ये त्वपीतिञ ॥

हस्तिनपुरम् । )
हस्तिनापुरम् । ) न॰ गजाह्वयेहास्तिनपुरे ॥ हस्तीनामराजा॰ तेन निर्मितत्वात् ॥

हस्तिनी । स्त्री॰ गजयोषायाम् । करिण्याम् ॥ धेनुकायाम् । वशायाम् ॥ भाद्रपदाद्यौ हस्तिनीप्रसूतेत ह्यनमाहकालिदासः । भावीतदापिकरभेकलभ करिण्याश्च प्रसूयतद्वृतियुविभीनभश्चे । चक्रव्ये नरपतेर्य्यदिभूमिदेवे तद्दानमस्ति तदुपक्रमपान्तयेत॰ इति ॥ नारी जातिविशेषे ॥ तल्लक्षणं यथा । स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुधीला । कामोत्सुका गाढरतिप्रिया च नितम्बखर्व्वा खलु हस्तिनी सेति ॥ हट्टविलासिन्याम् ॥ हस्तिशुण्डयाम ॥

हस्तिनीदुग्धम् । न॰ हस्तिक्षीरे ॥ तद्गुणा यथा । वृष्य हस्तिनीदुग्ध मधुरं तुवरं गुरु । वृष्यं बल्यं हिमं स्निग्धं चक्षुष्यं स्थिरताकरमिति ॥

कहीनमखाङ्गान् कुब्जवामनकानपि
विषाणान् । हस्वकोषफलपुष्कर
हीनान् श्यावनीलनखासिततालू
न ॥ स्वल्पवक्त्रकृतमत्कुणवण्ढा
न हस्तिनीसुगजलक्षयुक्ताम् । ग
र्भिणीश्च नृपति परदेशप्रापयेद्य
विरूपफलास्ते ॥ १० ॥ अथकुब्जा
दीनांलक्षणानितु । सच विषमवर्णो
जघन पृष्ठमध्यसमुन्नत । प्रमा
णहीनस्तथाभि सकुब्जीदारका
धम ॥ आनाहायामसम्पूर्णो
तिक्ष्णोभवेद्गज । वामन सम
माख्यातोभर्तुर्नाशाय प्रद ॥
सर्वलक्षणसम्पूर्णोदन्ती सुपरिकीर्त्ति
त । मत्कुण समभाख्यात
सच यासिप्राणघातक ॥ पादयो स
न्निकर्ष । आयत्यभागश्चगच्छत
। स स्टोऽस्थिनियुक्ते षण्डश्चाद्गैन
पूजित ॥ अनन्ताध्यधिक यश्चजि
स्तारैयस्तनान्तरम् । विशाट सधि
निर्दिष्टोदुर्गतिर्निन्दितोगज ।
इतिवाराहा ६२ अध्याय ॥

हस्तिलोध्र ।)
हस्तिलोध्रक ।) पु॰ लोध्रे ॥ इति
राजनिर्घण्ट ॥

हस्तिवाह । पु॰ अङ्कुशे ॥

हस्तिविषाणी । स्त्री॰ कदल्याम् ॥

हस्तिशाला । स्त्री॰ चतुरे । गजगृहे
पीलुस्थाने ॥

हस्तिशुण्डा ।)
हस्तिशुण्डी ।) स्त्री॰ क्षुपविशेषे । ह
स्तिश्याम् । भूरुण्डथाम् । हाती
शुंडा॰ हु॰ गौ॰ भा॰ प्र॰ । अ
स्थिसहारे ॥ यथा । स्वस्थिसहारी
सहारीहस्तिशुण्डीनगालिकेतिश्रा
रावली ॥

हस्तिश्यामाक । पुं॰ शालिश्यामाको
इतिगौडप्रसिद्धशस्ये ॥

हस्ते । अ॰ पाणौ ॥

हस्तेकरणम । न॰ पाणिग्रहणे । वि
वाहे ॥

हस्त्यध्यक्ष । पु॰ गजाध्यक्षे ॥ तल्ल
क्षण यथा । हस्तिशिक्षाविधानज्ञो
वन्यजातिविशारद । क्लेशक्षमस्त
थाराज्ञोहस्त्यध्यक्ष । प्रशस्यते ॥ इ
तिमात्स्ये १८९ अध्याय ॥

हस्त्यायुर्वेद । पु॰ हस्तिचिकित्सा
शास्त्रे । गजायुर्वेदे ॥

हस्त्यारोह । पु॰ हस्तिपके । निषा
दिनि ॥ तल्लक्षणन्तु । एतैरेवगु
णैर्युक्त स्नानकवचविशेषत । ह
स्त्यारोहीनरेन्द्रस्यसर्वकर्मविशस्य
तेइतिमात्स्ये १८९ अध्याय । ए
तैर्हस्त्यध्यक्षगुणै ॥ हस्तिनमा
रोहति । कर्त्ते माकशयण् ॥

हस्त्यलुकम । न॰ कुष्ठारालुके । दी
र्घतायुक्ते महाशरीरेकदविशेषे ।

हस्न । त्रि॰ मूर्खे । हसति । हसि॰

ति ॥ हारमित ॥

हारितकम् । न० शाकि ॥

हारिद्र । पु० कदम्बवृक्षे । नीपे ॥ विषविशेषे ॥ यथा । हरिद्रातुल्य मूलोयोहारिद्र । समुदाहृत ॥ हरिद्रावर्णे ॥ त्रि० हरिद्रारञ्जिते ॥ हरिद्रयारक्तम् । हरिद्रामहारजना भ्यमञ् ॥

हारिद्रव । पु० मैत्रायणीयानांशाखा प्रभेदे ॥

हारिद्रुमत पुं० गौतमगोत्रेमुनिवि शेषे ॥ हरिद्रुमतोऽपत्यम् । अण् ॥

हारी । त्रि० हारविशिष्टे ॥ हारोस्य स्य । इनि ॥ हर्त्तरि ॥ अवश्य ह रति । हृञ् । णिनि ॥

हारो । स्त्री० मौक्तिके । यथा । मुक्ता मुक्ताफलशुक्तिवीज हारोचमौक्तिक मितिशब्दरत्नावली ॥

हारीत : । पुं० धर्मशास्त्रप्रवर्त्तकमु निविशेषे ॥ कैतवे । छद्मनि ॥ पक्षि विशेषे । हरितालहारीतलइतिलो कप्रसिद्धे ॥ अस्यमांसगुणायथा । हारीतोरूक्षउष्ण ' स्याद्रक्तपित्तक फापह । स्वेदस्वरकर प्रोक्तईष द्वातकरश्च : ॥ हारीतोरक्तपीत' स्याद्वृधाद्भिरोऽपिसकथ्यते ॥ हारी मोत ॥ हारोस्यक्षिम वा । इ नि । हारिमनोहरमितंगमनम स्य ॥ यद्वा । हारयति । क्षिप । ए तिस्म । ईंगतौ । गत्यर्थेतिक्त ' । हारयासावीतश्च ॥

हारीतक । पु० हारीतखगे ॥ स्वा र्थेक ॥

हार्द्दम् । न० प्रेमणि । स्नेहे ॥ अ भिप्राये ॥ हृदयस्यकर्म । युवादि त्वात् । हायनान्तयुवादिभ्योऽणित्य ण् । हृदयस्यहृल्लेखितिहृदादेश ' ॥ हृदमर्थेण्वा ॥

हार्द्दी । त्रि० स्नेहवति ॥

हार्य्य ' । पु० कलिद्रुमे । विभीतके हरणीयाङ्के । भाव्ये ॥ अर्थे ॥ त्रि० हर्त्तव्ये ॥ हर्त्तुंयोग्य ' । हृ ञ् । ऋहलोर्ण्यत् ॥

हाल ' । पु० बलदेवे ॥ शालिवाह नभूपतौ ॥ हलौ ॥ हलति । ह लविलेखने । ज्वलतिकसन्तेभ्यो ण ॥

हालक : । पुं० पीतहरितवर्णाश्वे ॥

हालहलम् । न० पुं० हालाहलेविषे ॥ हालिवहलति० जठरम् । हल० । पचाद्यच । हलमिवहलतिवा । अच् । प्रज्ञाद्यण् ॥ मधुतिष्ठति वाचियोषितांहृदयेहालहलमहवि षम् । अतएवनिपीयतेऽधरोहृदय मुष्टिभिरेवताड्यते ॥

हालहाल । पु० न० हालाहले ॥

हाला । स्त्री० सुरायाम् । बलदेवप्रि यायाम् । वरुणात्मजायाम ॥ ह

लाङ्गलम् । हल• । ज्वलतीतिच ह्यलतेऽनयावा । हलमितिच ञ ॥ हालाहलं हन्तिचैव हालातु सामपीतकम् । तालमद्यं ॥

हालाखखानम । न• चिदम्बराभिधेदेश्या खानि ॥

हालाहल । पुं• न• विषप्रभेदे ॥ तत्स्वरूपन्तु । गोस्तनाभफलोगुच्छस्तालपत्रच्छदस्तथा । तेजसायस्यदह्यन्ते समीपस्थाद्रुमादथ विच्छिन्नायाहिमालये । दक्षिणाब्धितटे देशेकोङ्कणेपिचजायते ॥ हालेव आहलति । हल• पचाद्यच् ॥ हालाहलोनैवविषं विषं रमा दरज नाव्ययमेवमन्वती । येनैनमागत्ति निपीयसखिव स्वपनूरमासुद्यतिनिद्रयाहरिः ॥

हालाहल । पु• कीटविशेषे । अञ्जनिकायाम् । कुटिलकीटके ॥

हालाहलधर । पुं• सर्प्पे । हालाहलस्यधरोधारकः ॥

हालाहला । स्त्री• अञ्जनिकायाम् । गिरिकायाम् । बालमूषिकायाम् ॥

हालाहली । स्त्री• मदिरायाम ॥

हालिक । पु• कर्षकषे । सैरिके । हलिनखनति । तेनदीव्यतिच जतीतिठक् । हलवहति• हलस्यायवा । हलसीराट्ठक ॥

हालिनी । स्त्री• स्थूलपललयाम् ॥

हाली । स्त्री• कनिष्ठशालिकायाम । यथा । कनिष्ठाश्यालिकाहालीयन्तिकाशिलिकुच्छिकेतिहेमचन्द्र ॥ मदिरायाम् ॥

हालु । पुं• दन्ते ॥

हाव । पु• आह्वाने ॥ लीलाविलासादौ । नारीणांशृङ्गारभावसुक्रियासु ॥ यथा । लीलाविलासोविच्छित्तिविभ्रमोललित तथा । हेलालीलेत्यमीहावा क्रियाशृङ्गारभावजा ॥ शृङ्गारात्• रत्यादे• भावान्मनोविकाराञ्जाता• क्रियास्त्रैष्टाअङ्कराख्याविलासादिकाहावशब्दवाच्याइत्यर्थं ॥ इयमम् । इदानादनयी । क्वचिदपवादविषयेप्युत्सर्गोऽभिनिविशते• इत्यब्विषयेघञ् । इतिशब्द प्रकारे । तेनान्येपिबोध्य लीलाविलासोविच्छित्तिर्विभ्रम किलकिञ्चितम् । मोट्टायितकुट्टमितविब्बोकोललिततथा । विहृतञ्चेतिमन्तव्यादशस्त्रीणांस्वभावजाइति ॥ हूयन्तेरागिणोऽनेनेतिहाव• । यद्वाहूयन्तेरागिण• कामाअनेनेतिहाव• । अभिकरणेकरणे वाघञ् ॥ यथोक्तम् । युवानोऽनेनहूयन्ते नारीभिर्मदमानसैः । अतोनिरुच्यतेहावस्तेविलासादयोमताइति ॥ हाक

ष्टवायतिशेषयति वैशेषिके ।
छ ॥

हास । पु० हास्ये ॥ हसनम् । हसे हसने । स्वनहसोर्वेतिपक्षे घञ् ॥ प्रकाशे ॥

हासिका । स्त्री० हासे । हासौ० हू० भा० ॥ हसि० । धात्वर्थनिर्देशे ण्वुल् । प्रकाशे ॥

हास्तिकम् । न० गजतायाम् । करिसमूहे ॥ हस्तिनां समूहः । अचित्तहस्तिधेनोष्ठक् ॥ हस्तिनीनां समूहो वा ॥ भस्य ढेतद्धिते पुंवद्भावः ॥ त्रि० हस्त्यारोहे ॥ हस्तिना चरति० गच्छति । चरतीति ठक् ॥

हास्तिनम् । न० हस्तिनापुरे ॥ हस्तिदघ्ने । गजपरिमाणे ॥ हस्तिप्रमाणमस्य । पुरुषहस्तिभ्यामण् चेत्यण् । इनण्यनपत्ये इति प्रकृतिभावः ॥

हास्तिनपुरम् । न० हस्तिनापुरे ॥

हास्तिनायन । पु० हस्तिनो गोत्रापत्ये ॥ नडादित्वात् फक् । हास्तिनायन इति टिलोपाभावः ॥

हास्यम् । न० रसविशेषे । हसे हासे । यथा । विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥ विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ अनुभावोऽक्षिसंकोचवदनस्मेरतादिकः ॥ निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । नीचानामपहसितं तथातिहसितं तदेष षड्भेदाः ॥ ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥ मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् । अपहसितं सास्राक्षं विक्षिप्ताङ्गं च भवत्यतिहसितम् ॥ हसि० । कर्तरि ण्यत् ॥ त्रि० परिहसनीये ॥

हाहलम् । न० हालाहले ॥

हाहा । अ० विस्मये । शोके ॥

हाहा । पु० गन्धर्वविशेषे ॥ हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकस इत्यमरः ॥ हा इति शब्दं जहाति । ओहाक् त्यागे । विच् । शसि हाहः । अव्युत्पत्तिपक्षे० शसि० हाहाम् । आतो धातोरित्यस्याप्रवृत्तेः ॥

हाहाकार । पु० शोकध्वनौ ॥ हाहाशब्दे । हाहाकरणम् । भावे घञ् ॥

हाहालम् । न० हालाहले ॥

हूहू । पु० देवगन्धर्वे ॥ सान्तोयम् । गन्धर्वौ हाहाहूहूर्गन्धर्वौ गायनौ पिकेति साहसाङ्कः । गन्धर्वप्रभेदे हाहा हूहूरिति वाचस्पतिः ॥

हिंसाकर्म्म । न० अथर्व्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिक्रियायाम् । अभिचारे ॥ हिंसाफलकर्म्म । श्राद्धपार्थिवादि ॥

हिंसात्मक । त्रि० हिंसास्वभावे ॥

हिंसारु । पु० व्याघ्रे ॥

हिंसालुक । पु० खादुकेशुनि । वाटखना० खावया० कुत्ताइ० भा० ॥

हिंसितः । त्रि० प्राप्तहिंसे । हिंसां प्राप्ते ॥ यथा । यस्तु कन्यां पिता दत्त्वा न प्रयच्छति तां पुनः । सहोपि हगवास्तेनहिंसितामावसथम . । इ० वाराहपु० ॥

हिंसीर । पु० व्याघ्रे ॥ त्रि० खले । दुष्टे ॥ हिनस्ति हिंसि० । हिंसीरश्चीरच्ची । खरेभेद ॥

हिंस्र । पु० शिवे ॥ भीमसेने ॥ हरे ॥ त्रि० हिंसाशीले । घातके ॥ हिंस्राहिंसनेदोषाभावीयथा । कृपाकार्यसतामश्वद हिंस्रेषु जन्तुषु । हिंसायामपि दोषश्च हिंस्राणामश्वनीश्वर । इ० ब्र० वै० कृ० जन्मखण्डे ८५ अध्यायः ॥ हिनस्ति । हिंसि० । नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥

हिंस्रक । पुं० हिंस्रपशौ । व्याघ्रे ॥ स्वार्थे क ॥

हिंस्रपशु । पुं० हिंस्रजन्तौ । व्याघ्रे । हिंसके ॥

हिंस्रा । स्त्री० कीस० इ० भा० प्र० छष्वे । काकादन्याम् ॥ जटामांस्याम ॥ वसायाम् ॥ हिनस्ति । हिंसि० । र । टाप् ॥ गवेडुकायाम ॥ नाड्याम ॥

हिक्का । स्त्री० ऊर्द्ध्ववातप्रवृत्तशब्दविशेषे ॥ रोगोपसर्गविशेषे ॥ रोगविशेषे ॥ अस्याविप्रकृष्टनिदानमाह । विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्थानरजोधूमैस्तथानिलैः ॥ व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः । हिक्काश्वासश्च कासश्च तृष्णा समुपजायते ॥ अपतर्पणम् अनशनादि ॥ सम्प्राप्तिमाह । वायुः कफेनानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥ सामान्यलक्षणमाह । मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केत्यभिधीयते बुधैरिति ॥ हिनस्तीति हिक्का । पृषोदरादित्वाद्रूपसिद्धिः । हिगिति कायति शब्दं करोतीति वा ॥ हिक्कनम् । हिक्क अव्यक्ते शब्दे । गुरोश्च हलः इत्य टाप् ॥ यथा । हिक्कयते । हिक्कहि साम् । पचाद्यच् ॥

हिक्कार । पु० सामभक्त्यन्तरे । पाञ्च

भक्तिकस्यसाम्न प्रथमायामभक्तौ ॥

हिङ्गु । न॰ मूलविशेषस्यनिर्यासेधूपने ॥ अस्यपर्यायागुणाश्चयथा । सहस्रवेधिजतुकं बाल्हीकं हिङ्गु रामठम ॥ हिङ्गूष्णं पाचनंरुच्यंतीक्ष्णंवातबलासहृत् । रसेपाकेचकटुकं स्निग्धमस्वर्गदीपनम् ॥ शूलगुल्मोदरानाहकृमिघ्नपित्तवर्द्धनमिति ॥ हिनोति, हिंगतीङ्ग्वीवा । हिमगच्छतिवा । मृगय्वादि ॥ वंशपत्र्याम् ।

हिङ्गुनाडिका । स्त्री॰ नाडीहिङ्गुनि । रामठ्याम ॥

हिङ्गुनिर्य्यास पु॰ निम्बवृक्षे ॥ हिङ्ग्वाकारो॰ हिङ्गुगन्धोवानिर्य्यासोऽस्य ॥ हिङ्गुरसे ॥

हिङ्गुपत्र । पु॰ इङ्गुदीवृक्षे । हिङ्गोटाख॰ भा॰ प्र॰ ॥ हिङ्गुनः पत्रमिवपत्रं यस्य ॥

हिङ्गुपत्री । स्त्री॰ कारव्याम् । पृथुकायाम् । वंशपत्र्याम् ॥ अस्यागुणायथा । हिङ्गुपत्रीभवेद्रुच्यातीक्ष्णोष्णापाचनीकटु । हृद्वस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा ॥ हिङ्गुपत्रमिवपत्रमस्या ॥ हिङ्गुनः पत्रे ॥

हिङ्गुपर्णी । स्त्री । वंशपत्र्याम् ॥

हिङ्गुल । पु॰ न॰ कुरुविन्दे । हंसपादे ॥ अस्यनामानि॰ लक्षणानि॰ गुणाश्चयथा । हिङ्गुलंदरदंम्लेच्छंचित्रासंचूर्णपारदम् ॥ दरदस्त्रिविधःप्रोक्तश्चर्मारःशुकतुण्डकः । हंसपादस्तृतीयःस्याद्गुणवानुत्तरोत्तरः ॥ चर्मारःशुक्लवर्णःस्यात्सपीतःशुकतुण्डकः । जपाकुसुमसङ्काशोहंसपादोमहोत्तमः ॥ तिक्तंकषायंकटुहिङ्गुलंस्यान्नेत्रामयघ्नंकफपित्तहारि । हृल्लासकुष्ठज्वरकामलाश्चप्लीहामवातौचगरंनिहन्ति ॥ ऊर्द्ध्वपातनयुक्त्यातुडमरुयन्त्रपाचितम् । हिङ्गुलंतस्यसूतन्तुशुद्धमेवनशोधयेत् ॥ शोधनविधिस्तु । मेषीक्षीरेणदरदमम्लवर्गैश्चभावितम् । सप्तवारान्प्रयत्नेनशुद्धिमायातिनिश्चितम् ॥ शोधितस्यगुणाःसूक्ष्मास्तिक्तकषायमिश्राह्वा ॥ हिङ्गुलाद्रसाकर्षणविधिर्यथा । निम्बूरसैर्निम्बपत्ररसैर्वायाममात्रकम् । घृष्ट्वादरदमूर्ध्वन्तुपातयेत्सूतयुक्तिवत् । ततोऽधःपठरीलग्नंग्राह्यंयद्रसमुत्तमम् । शुद्धमेवहितत्सूतंसर्वकर्मसुयोजयेत् ॥ इ॰ भा॰ प्र॰ ॥ सिन्दूरे ॥

हिङ्गुला । स्त्री॰ देशविशेषे । यथा । ब्रह्मरन्ध्रेहिङ्गुलायांभैरवोभीमलोचनः । कोट्टवीसामहामायात्रिगुणायादिगम्बरी ॥ इतिमन्त्रचूडा

मणीपीठमाला ॥ वामनपुराण मपियथा । कन्याचैतुःखेदसङ्का तासान्त्वलिलिखिता । ततस्ता माङ्गलार्थं प्रभाभिरेवमूर्तिमान शङ्करोवरदोबिकश्यैर्थायंचाम इत त्वांपूजयिष्यन्तिसुराश्चय पितरस्तथा ॥ यच्चविद्याधराश्चैव मानवांश्चशुभङ्करि। त्वांसोष्यन्तिस दादेविवलिपुष्पोत्करैः बरै श्च मैं वेतिशुभ नामयस्माद्रुधिरच र्चिता । त्वंवैवसुधावरदेनचर्चि ताभूतानुयाताहरिचमवासिनी मही समस्ताविचचारसुन्दरीत्वत ग ता हिङ्गुलमाचसुत्तमर्मिति ॥

हिगुंल । पु॰ हिगुलि ॥

हिगुनिका । स्त्री॰ कण्टकार्याम् । भण्टक्याम् ॥

हिगुली । स्त्री॰ वार्ताक्याम् । सि ह्याम । भण्टाक्याम् ॥ हिगुला ति । ला॰ । बातोनुपेतिक । गौरादित्वान्ङीष ॥ बृहत्याम् । कण्टकार्याम् ॥

हिगुलु पु॰ न॰ रक्तगद्रव्यविशेषे ॥ यथा । दारदन्तुहिगुलु स्वाद्धि ङ्गुल रक्तपारदमितिविकाण्डशे ष. ।

हिगुंपत्राटिका । स्त्री॰ वश्याल्याम् ॥

हिगूलम् । न॰ चालुविशेषे । मधुमू ले । मौचालु॰ ब्रू॰ गौ॰ दे॰

भा॰ प्र॰ ॥

हिज्ज । पु॰ हिज्जले ॥

हिज्जल । पु॰ हिज्जले । निचुले । जलवेतसविशेषे ॥ यथा । हिज्जलो हिज्जलश्चापिनिचुलश्चाम्बुजस्तथा । जलवेतसवद्वेद्योहिज्जलोयविषाप ह. । इतिभावप्रकाश ॥ हिनो ति । हिगतौवृद्धौच । क्विप् । हितुजलमध्ये । स्वनवेतसइत्यन्ये ॥ समुद्रफलेतिख्यातवृक्षपरे ॥

हिण्डीर । पु॰ डिण्डिपादवर्षे । नि गडे । चन्दुके ॥ इतिहेमचन्द्र. ॥

हिडम्ब । ) पु॰ असुरविशेषे ॥
हिडिम्ब । )

हिडिम्बजित् । )
हिडिम्बनिसूदन । ) पु॰ भीमसेने ॥
हिडिम्बभित् । )

हिडिम्बा । स्त्री॰ हिडिम्बासुरभगि न्याम ॥

हिडिम्बापति । ) पु॰ हनुमति ।
हिडिम्बारमण । )

रामदूते । अर्जुनध्वजे ॥

हिण्डनम् । न॰ भ्रमणे । रते ॥ या ने ॥ क्रीडायाम ॥

हिडिगत्यनादरयो । ल्युट् ।

हिण्डक । पु॰ लग्नाचार्ये ॥

हिण्डिर । पुं॰ हरवोरे ॥

हिण्डी । स्त्री॰ शिखरवासिन्याम् । दुर्गायाम ॥ ब्रू॰ विc शेष ॥

हिन्दोल । पुं॰ श्रावणशुक्लपक्षविहि तभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे षड्रागान्तर्गतरागविशे षे । यथा । भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मे घरागश्च षडेते पुरुषाह्वयाइति ॥

हिन्दोलक । पु॰ यानविशेषे । दो लायाम् । प्रेङ्खायाम् ॥

हिन्दोलनम् । न॰ दोलने ॥

हिन्दोला । स्त्री॰ दोलिकायाम् ॥

हिबुकम् । न॰ लग्नाच्चतुर्थभवने ॥

हिम । पुं॰ चन्दनवृक्षे ॥ कर्पूरे ॥ चन्द्रे । हिमन्तर्तौ ॥ हिमालयप र्वते ॥ न॰ तुषारे । रजनीजले ॥ तत्पर्यायायथा । अवश्यायस्तुनीहा रस्तुषारस्तुहिनं हिमम् । प्रालेय म हिकेति ॥ चन्दने ॥ नवनीते ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शी ते ॥ त्रि॰ शीतले ॥ हन्ति । हन॰ । हन्तेर्हिचेतिमक् ।

हिमक । पुं॰ विकङ्कतवृक्षे ॥

हिमकर । ) हिमकिरण । ) पु॰ चन्द्रे । कर्पूरे । हिमा कराः किरणायस्य ॥

हिमकूट । पु॰ शिशिरर्त्तौ ॥ हिम कदम्बे ॥

हिमगिरि । पु॰ हिमालयपर्वते ॥

हिमज । पु॰ मैनाकाचले । मे नकापुत्रे । हिमात् जात । ज नी॰ । पञ्चम्यामितिड ॥ न॰ हिमोद्भवे ॥

हिमजा । स्त्री॰ गौर्याम् । पार्वत्या म् ॥ हिमात् हिमालयात् जाता । जनी॰ । ड । टाप् ॥ शच्याम् । इन्द्राण्याम् । क्षी रिण्याम् ॥

हिमझटि । पु॰ भूमिकायाम् । कुहेलिकायाम् ॥

हिमतैलम् । न॰ कर्पूरतैले ॥

हिमदुग्धा । ) हिमदुग्धिका । ) स्त्री॰ क्षीरिण्याम् ॥

हिमदुर्दिनम् । न॰ पक्षहिमे । हिमनिपातितेनदुःखदायकदिने ॥

हिमद्युति । पु॰ इन्द्रौ । चन्द्रे ॥ हिमाद्युतिर्यस्य ॥

हिमद्रुम: । पु॰ महानिम्बे ॥

हिमनामा । पु॰ कर्पूरे ॥ हिम स्यनामान्येवनामान्यस्य ॥

हिमप्रस्थ । पु॰ हिमगिरौ ॥

हिमवान् । पु॰ उमागुरौ । नगा धिराजे । हिमालये ॥ शतद्रु चन्द्रभागाद्या: हिमवत्प्रभवानि : सृता । सतांनिधिर्योहिमवान् भोगिनामलयाऽचल: ॥ हिमम स्त्यस्मिन् । मतुप् । वत्वम् ॥

हिमवत्सुत । पुं॰ हिरण्यनाभे । मैनाकाचले ॥

हिमवत्सुता । स्त्री॰ उमायाम् ।

गौर्य्याम्। हिमवत: सुता ॥ ग ङ्गायाम् ॥ इ० ध० य ॥

हिमवत्सुतावध । पु० । भौमि तीर्थविशेषे ॥

हिमबालुक । पु० कर्पूरे ॥ इ० राजनिघण्टे ॥

हिमबालुका । स्त्री० कर्पूरे ॥ हि माबासौबलुकाच ॥

हिमशर्करा । स्त्री० यावनाल्याम् ॥

हिमशैल । पु० हिमवति । मे नाधवे ॥ हिमप्रधान शैल ॥

हिमशैलजा । स्त्री० पार्वत्याम् ॥

हिमसहति । स्त्री० महाहिमे । हिमान्याम् ॥ हिमानांस हति ॥

हिमह । पु० आदित्ये ॥ वह्नौ ॥ हिम जाड्यं हन्तीति हिमह । ड

हिमह्रासक । पु० हिन्तालवृक्षे ॥

हिमा । स्त्री० नागरमुस्तके ॥ सू क्ष्मैलायाम् ॥ रेणुकायाम् ॥ पृ क्कायाम् । भद्रमुस्तायाम् ॥ च णिकायां ॥

हिमांशु । पु० चन्द्रमसि ॥ हि मांशवोयस्य ॥ कर्पूरे ॥

हिमांशुभिख्य: । पु० कर्पूरे । न० रौप्ये ॥

हिमाग । पु० हिमालये ॥ हि मप्रधानोग ॥

हिमागम । पु० हेमन्ते ॥ हि मस्यागमोयस्मिन् ।

हिमाचल । पुं० हिमालये ॥

हिमात्यय । पुं० वसन्तर्त्तौ । हि मस्यात्ययोयस्मिन् ॥

हिमाद्रि । पु० हिमशैले ॥

हिमाद्रिजा । स्त्री० पार्वत्याम ॥ हिमाद्रेर्जाता । जनी० । ड । टाप् ॥ क्षीरिण्याम् ॥

हिमाद्रितनया । स्त्री० पार्वत्याम ॥

हिमाद्रितनयापति । पु० शिवे ॥

हिमानी । स्त्री० हिमसहतौ ॥ मह हिमम । हिमारण्ययोर्महत्त्वइति ङीषानुकौ ॥ यथा । आगतावत रैवहिमानीसेव्यताम सुरतरङ्गिणीसदा । कुप्यतस्मिन्निगुणान्नकलयन्तौजौवनेपुलवयन्त्यनुरागम् ॥ यावनालशर्करायाम् ॥

हिमाराति । पु० चौतिहीत्रे । ध नञ्जये ॥ किरणमालिनि । सूर्ये ॥ हिमस्यआराति ॥

हिमाल । पु० हिमशैले ॥ हिमेन अलति । अलभूषणादौ ॥ अच् ॥

हिमालय । पु० भारतवर्षस्यसौ मावर्त्तते । उदग्गद्रौ । नगपतौ । मेनाधवे । उमागुरौ ॥ त्वाशौर्या मध्ये ॰भगवतौविभूतिरयम् ॥ हि मस्यालय ॥ शुक्लखदिरे ॥

हिमालयसुता । स्त्री० पार्वत्याम् ॥

हिमालया । स्त्री० भूम्यामलक्याम ॥

हिमाह्नम् । न० त्वचे ॥

हिरण्यस्तूप । पु० ऋषिविशेषे । अङ्गिरस पुत्रे ॥

हिरण्याक्ष । पु० काश्यपाद्दित्यांसमुत्पन्ने० आद्यदैत्यविशेषे ॥

हिरण्याश्व । पु० तुलापुरुषादिषोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्याश्वरथ । पु० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरुक् । अ० विनार्थे ॥ हिरुक्कामपि मे स्त ॥ मध्यार्थे ॥ हिनोति । हिगतौ । रुक् प्रत्ययः । सामीप्ये ॥ अधमार्थे ॥

हिलमोचि । स्त्री० हिलमोचिकायाम् ॥

हिलमोचिका । स्त्री० ब्राह्म्याम् । आचार्याम् । चक्राङ्ग्याम् । हिलञ्चा० हु० गौ० भा० प्र० हिलसाक्व्यशाके । यथा । शोथ कुष्ठ वातपित्त हरतिहिलमोचिका । हिलति । हिलभावकरणे । इगुपधेतिक । मोचयति । मुचिवर्त्तुल् । हिलाचासौमोचिका । उपापेरितिकस्य ॥ चुत्वं ॥

हिलमोची । स्त्री० हिलमोचिकायाम् ॥

हिल्ल । पु० शरारिपक्षिणि ॥

हिल्लोल । पु० तरङ्गे । नद्यादिजलस्य वायुनातिर्यग्भ्रमणे । रतिबन्धविशेषे ॥ यथा । हृदिकृत्वाङ्घ्रिं पादौकराभ्यांधरयेत्कुचौ । यथेष्टताडयेद्योनिं बन्धोहिल्लोलसञ्ज्ञक ॥

हिल्वला । स्त्री० मृगशीर्षस्थ तारायाम् ॥

हिबुक्म । न० लग्नाच्चतुर्थभवने ॥

ही । अ० दु खहेतौ ॥ विषादे ॥ विस्मये ॥ यथा । हन्तविधिलुलितानाहीविचित्रोविपाक ॥ हिनोति । हि० विच । सम्पापूर्वकत्वात्गुणः । क्विपितुगभावोवा । भावेवाप्रत्ययौ । पृषोदरादित्वात्दीर्घं ॥ हननम्वाहुतवाक्कोर्वी ॥ शोके ॥

हीन । त्रि० गर्ह्ये ॥ ऊने । प्रतिवाद्विशेषे ॥ यथाहनारद । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तर । आहूतप्रपलायीचहीन पञ्चविध स्मृतइति ॥ ओहाक्० हीयतेस्मवा॥ओहाक्त्यागे । आदिकर्मणिक्त० कर्म्मणिवा । ओदितश्चेतिनत्वम् । घुमास्थेतीत्वम् ॥

हीनक्रिय । त्रि० जातकर्मादिक्रियावर्जिते ॥

हीनवर्ण । त्रि० नीचजातौ ॥ यथा । हीनवर्णोपभुक्तायात्याज्यावध्यापिवाभवेदिति ॥

हीनवादी । त्रि० विरुद्धार्थवादिनि ॥ यथाहनारद । पूर्ववादम्परित्यज्ययोन्यमालम्बतेपुन । वादसङ्क्रमणाज्ज्ञेयोहीनवादीसवैनरइति ॥ वाक्यवर्जिते । अधरे ॥

हीनाङ्ग : । त्रि० स्वभावतोन्यूनाधि

हांगी । विकलाङ्गी । अपोगण्डे ॥ तेनसहपरिहासनिषेधोयथा । जातिहीनविद्याहीन रूपहीनमद्धनम् । हीनाङ्गमतिरिक्ताङ्गं तेनदोषित्वनाक्षिपे ॥ इतिब्रह्मपुराणाद्वे दोवार्थविनिश्चयमितिकालिका पुराणे ४४८ध्याय ॥

हीनाङ्गी । स्त्री॰ क्षुद्रपिपीलिकायाम् ॥

हीर । पु॰ शङ्करे । शिवे । हरे ॥ प्रलयेकृतस्नं हरति । हृञ॰ । पचाद्यच । पृषोदरादित्वादीत्वम ॥ वज्रे ॥ सर्पे ॥ श्रीहर्षकवे पितरि ॥ हारे । लगणे॰ ऽऽ।॰ ॥

हीरक । पु॰ रत्नमुख्ये । सूचीमखि । दधीच्यस्थि । हीरे । वज्रे हीरा॰ इ॰ भा॰ प्र॰ रत्ने ॥ पलयस्तेषितु योग्य तदर्थे लिखित म या । तत्रैवतस्माद्रष्टव्य गुणनामादिवर्णनम् । मालावृत्तान्तरे ॥ यथा । वज्रिटगणमन्त्ररागणैश्चरणाशोभितम्॰पश्चसुद्दतिनागन्तपति रत्नद्दतिर्नेशितम् । राजभवनकाळपठनपयरटनरन्नरीख्याकृतिमाममवतिकाममवतिसञ्जनम् ॥ यथ । ध्यानमटतसाममठतनामरटतरै श्रवधमर्मयतमर्म भजतर्कम सुजतशैभवम । दृपारभवनद्वारममणसारवधमवासनातावद्दयति मावतरति॰ कालन्दपति शासनात्मार्थक ॥

हीरा । स्त्री॰ लक्ष्म्याम् । श्रियि ॥ तैलपायिकायाम् ॥ पिपीलिकायाम् ॥ काश्मर्याम ॥

हीराङ्ग । पु॰ इन्द्रवज्रे । वज्रे कुलिशे ॥

हीलम् । न॰ रेतसि । इतिकश्चित ॥

हीलुकम् । न॰ मद्यविशेषे । गौडाम ॥

हीहो । अ॰ विस्मये ॥ हास्ये ॥ यथा । कस्त्वलोहितलोचनास्यचरणोहस कुतोमामसात्कित कास्मिसुवर्णपङ्कजवन नीर सद्राशिमर्लम् । रत्नानानिचय प्रवाललतिकाश्चेदूर्वरीह क्वचिन्मशाडुकाक्षिप्तसम्मितवक्त्ररात्रयं हीही कृतम ॥

हुङ्कृतम् । न॰ हुङ्कारे । वन्यवराहशब्दे ॥

हुङ्कृति । स्त्री॰ दर्पोरध्वनौ ॥

हुड । पु॰ । मेषे ॥ पालिकाकाटा इ॰ गौ॰ दे॰ भा॰ प्र॰ । चौरादिनिवारणार्थं भूमिनिहितलौहमयतीक्ष्णाग्रशङ्कुविशेषे ॥ लगुडे ॥ इ॰ महाभारतम् । भासयाचुरजइतिख्यातैर्योधगणाश्रयस्थाम ॥ विशमूत्रोत्सर्जनगृहे ॥

हुडच्च । पु॰ हुडुक्के ॥

हुडु । पु॰ मेषे

हुडका । पु॰ दात्यूहे ॥

हुडुक्क । पु॰ वाद्यभेदे मदमत्ते ॥ दात्यूहपक्षिणि ॥ हुडकी । हुडका इ॰ गौ॰ दे॰ भा॰ प्र॰ वाद्यविशेषे ॥

हुडम् । न॰ कृपणत्वे ॥

हुडुक्क । पु॰ क्रपिविटे । हुडु म॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुडु । पु॰ वृद्ध ग्रामशूकरे ॥ मूर्खे ॥ राक्षसे ॥

हुत । पु॰ देवदत्ताग्निहोमे ॥ त्रि॰ वषट्कृते । मन्त्रेणाग्नौप्रक्षिप्तघृतादौ । हूयते स्म । हु दानादनयोः । क्त ॥ न॰ हवने । शिवे । अग्नौहवि प्रक्षेपक्रियायाम् । नपुंसकेभावे क्त ॥

हुतभुक्प्रिया । स्त्री॰ अग्निपत्न्याम ॥ स्वाहायाम् ॥ हुतभुज प्रिया ॥

हुतभुक् । पु॰ वैश्वानरे । वह्नौ ॥ हुत सुक्क । भुज॰ । क्विप् ॥ चित्रौ ॥ हुतं हविः भुनक्ति पालयति त्रिगुणमपि सगुणं करोति तस्मात् तापादिति हुतभुक् ॥

हुतवह । पु॰ अग्नौ ॥ हुतस्य वह ॥



हुताश । पु॰ अग्नौ ॥ हुतम् अश्नाति । अश॰ । कर्मण्यण् ॥

हुताशन । पु॰ अग्नौ ॥ हुत अशनमस्य ॥ यथा । लक्षहोमे तु कर्त्तव्ये लक्षकोटिहोमे हुताशन । पूर्णाहुत्यां मृडो नाम शान्तिके वरद स्मृतः ॥ शिवे ॥

हुताशनी । स्त्री॰ होलिकायाम ॥

हुति । स्त्री॰ हवने हु॰ क्तिन्॰ ॥

हुम् । अ॰ स्मृतौ ॥ अपाकृतौ ॥ अयप्रश्ने ॥ अभ्यनुज्ञायाम् ॥ वितर्के ॥ भगे । भर्त्सने । कोपे । हूयते । हु॰ । बाहुल कान्मुम ॥

हुलहुली । स्त्री॰ मुखघण्टायाम् । स्त्रीणाममङ्गलजनकमुखध्वनिविशेषे । हुलहुलु इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

हुहु । ⎫
हूहू । ⎭ पु॰ गन्धर्वविशेषे ॥ यथा । हूहूर्हुहुश्च इति विधी हुहूर्हूहुश्च कुत्रचिदिति शब्दरत्नावली ॥

हू अ॰ आह्वाने । अवज्ञायाम् । अहङ्कारे ॥ शोके ॥

हूङ्कार । पु॰ हूमिति भयजनकध्वनिकरणे ॥

हूड । पु॰ मेषे ॥

हूण । पु॰ । म्लेच्छजातिविशेषे ॥ यथा । श्वपाकश्च पुल्कश

हृच्छयोयवनहृत्यपि । सिकताद्यास्तु
ये।चःशिग।छ्याच।र।श्लिंत ॥
म्लेच्छ किरातशबरपुलिन्दाद्यास्तु
तद्विदेतिजटाधर ॥ देशविशेषे ॥
यथा । कोमगिरेर्द्धभागेमरुदेशा
त्पश्चिमे । हूणदेश समाख्यात
शूरास्तत्रमहावल ॥

हूतम् । न॰ आह्वाने ॥ नाम्नि ॥ त्रि॰
आहूते ॥

हूति । स्त्री॰ आकारणायाम । आ
ह्वाने ॥ ह्वानम् । ह्वेञ क्तिन् ।
वचिस्वपीतिसम्प्रसारणम ॥

हूम । अ॰ प्रश्ने ॥ वितर्के ॥ रुषो
क्तौ ॥ अनुनये।स्मृतौ सम्भाव्ये ॥
अभ्युपगमे। कुत्सने ॥ प्राकाश्ये ।
हूयते । हु॰ । बाहुलकात् ।
पृषोदरादि ॥ यद्वा । ह्वयनम् ।
॰ डूम प्रत्यय ॥

हूरव । पु॰ शृगाले ॥

हूर्छनम् । न॰ कौटिल्ये ।

हूहू । पु॰ गन्धर्वविशेषे ॥

हूहू । पु॰ देवगन्धर्वे ॥ हूहूतिश
ब्दाह्वयति । ह्वेञ स्पर्धायांशब्देच
। क्विप् । वचिस्वपीतिसम्प्रसारणम्
। हलइतिदीर्घं । अजादौ॰ हूहु
वौ॰ हूहुवश्चेत्यादिरूपाणि । अन्यत्र
त्विपक्षेवण् हूहौ॰हूहूश्चेत्यादि ॥

हृच्छय । पु॰ मदने । मन्मथे । का
मदेवे । हृदिवस्तुविवेकिनांचेतसि
शेते । शीङ् स्वप्ने । अधिकरणेशे
तेरित्यच् ॥

हृच्छयालु । पु॰ कामदेवे ॥

हृच्छूलम् । न॰ हृदयशूले ॥ यथा ।
कफपित्तवरुद्धस्तुमारुतोरसमूर्छि
त । हृदिस्थ कुरुतेशूलमुच्छ्वा
सरोधकम । सहृच्छूलइति
ख्यातोरसमारुतकोपज ॥

हृणिया । स्त्री॰ जुगुप्सने ।

हृणीया । स्त्री॰ भर्त्सने । जुगुप्सने ॥
हृणीङ् कण्ड्वादि । यक् । अप्रत्य
यात् ।

हृत । त्रि॰ मुषिते । आकृष्टे ॥ आ
हारि । हृञ॰ । क्त । उपात्ते ॥

हृति । स्त्री॰ हरणे । देशाद्देशान्त
रप्रापणाया

हृत्कम्प । पु॰ हृदयकम्पने ॥

हृत्पति । पु॰ अन्तर्यामिणि ॥

हृतस्थ । त्रि॰ बुद्धिस्थे ॥

हृत् । न॰ बुक्के ॥ चित्ते । बुक्को । मा
नसे । अन्त करणे । हृदयकम
ले ॥ नवमभवने ॥ हृदयस्य॰पद्दन्
हृल्लेखदिश॰ ॥इतिहृदयस्य॰प्र
कारादृश्यात क्वचित ह्वादापि ॥
यद्वा । हरति॰ क्रियतेश हृञ॰
। हृञो वुक्क्दुकौचेति॰ बाहुल
कात्कीवलादृविदुक् । यथा । अ
त्र पृथुत्वक्षन्नपार्श्वहृदयशून्त
म् विपरीत सिरालशरीरमत्र दु

स्वभागिनामिति ॥

हृदयम । न० उरसि । वक्षसि ॥ बु क्कायाम् । हृदयान्तर्गतमांसविशे षे । अग्रमांसे । मानसे । स्वान्ते ॥ हृतिप्रख्ययास्यदेशान्ते ॥ हरति० आहरतिविषयान्० क्रियतेविषये र्वा । हृञो सुखदुःखेचेतिकयन् दुगागमश्च ॥ परमात्मनि ॥ हृदि अ यम ॥ हृदयकमले ॥ यथा 'पद्म कोषप्रतीकाशं सुषिरंचाप्यधोमुख म् । हृदयं तद्विजानीयाद्विश्वस्या यतनं महत् ॥ अपिच । हृदयं पु ण्डरीकाख्यसदृशं स्यादधोमुखम् । जाग्रतस्तद्विकसतिस्वपतस्तुनिमील ति । आशयस्तत्तुजीवस्यचेतनस्या नमुत्तमम । अतस्तस्मिन्समेतत्स्या त्प्राणिनः स्वपयन्तिहि ॥

हृदयग्रन्थि । पु० अहङ्कारे । चि ज्जडयंथनरूपेऽहङ्कारेचिदहङ्कारता द्रत्यरूपे ॥ चिज्जडात्मकत्वात्० ग्रन्थिरिवग्रन्थि' ॥ हृदयेग्रन्थि र्वा ॥ हृदन्ते ॥

हृदयङ्गम । चि० सुखजनकोक्तौ । युक्तियुक्तवाक्ये । सङ्गते ॥ हृदय गच्छति । गमश्चेतिखच् ॥

हृदयज । पु० पुत्रे ॥ चि० हृदयउ त्पन्ने ॥

हृदयज्ञ । चि० हृदयविदि ॥ हृदया भिज्ञे ॥

हृदयदौर्बल्यम् । न० मनसोभ्रमणा दिरूपेऽधैर्ये ॥ हृदयस्यदौर्बल्य म् ॥

हृदयवान् । चि० हृदयालौ । म तुप् ॥

हृदयशल्य । पु० । सन्देहे ॥

हृदयशुद्धि । स्त्री० मनःशोधे । हृ दयस्यशुद्धि ।

हृदयस्थ । चि० सर्वान्तर्यामिणि ।

हृदयस्थानम् । न० भुजान्तरे । क्रो डे । उरसि ।

हृदयस्पृश । चि० मनोज्ञे । हृद यस्पृशति । स्पृश० । स्पृशोऽनु दकेक्विन् ॥

हृदयात्मक । ) पु० कङ्कपक्षी ॥
हृदयात्मा । )

हृदयालु । पु० प्रसन्नचेतसि । सुहृदये । प्रशस्तहृदयमस्यास्ति । हृदयाच्चा लुरन्यतरस्यामित्यालु ॥

हृदयाविध् । चि० पिशुने ॥ हृदय माविध्यति । क्विप ॥

हृदयिक । चि० प्रसन्नचेतसि । हृद यिनि ॥ हृदयंप्रशस्तमस्यास्ति । ठन् ।

हृदयी । चि० प्रशस्तचेतसि । हृद यालौ ॥ हृदयप्रशस्तमस्य । इनि ॥

हृदयेश । पु० धवे । भर्त्तरि । पत्यौ ॥

हृदयेशा । स्त्री० प्रेयस्याम् । भा र्यायाम । कान्तायाम् ॥

हृदामय । पु॰ हृद्रोगे ॥

हृदावर्त्त । पु॰ अश्वहृदयावर्त्ते । श्रीवत्सके ॥ इ॰ त्रि॰ शेष ।

हृदिस्पृश । त्रि॰ मनोज्ञे । हृद्ये ॥ हृदिस्पृशति । क्विप् ॥

हृदीक्षत । त्रि॰ हृदयेप्रवेशिते ॥

हृद्गत । त्रि॰ । वागतत्वावच्छिन्नप्रकाशिते । अन्तर्गते ॥

हृद्गोल । पु॰ पर्वतविशेषे ।

हृद्गोलीय । पु॰ आयुधजीविविशेषे । हृद्गोलोऽभिजनोऽस्य । आयुधजीविभ्यश्छ । पर्वते ॥

हृद्ग्रन्थि । पु॰ हृद्व्रणे ॥

हृद्य । पु॰ वशकादिमन्त्रे । हृदयस्य बन्धन । बन्धने चर्षाविति यत् ॥ न॰ धवलजीरके ॥ गुडत्वचि ॥

हृद्य । त्रि॰ हृज्जे । हृदिते । हृत्प्रिये ॥ हृदयङ्गमे । मनोज्ञे ॥ मनोहरे ॥ दुर्गन्धाशुचित्वादिदृष्टादृष्टदोषशून्ये ॥ हृदयस्यप्रियम् । हृदयस्यप्रियमितियत् । हृदयस्य हृल्लेखेतिहृदादेश ।

हृद्यगन्ध । पु॰ बिल्वे ॥ न॰ सौवर्चले ॥ स्थूलजीरके । त्री॰ सुगन्धे । सुरभौ ॥ हृद्योमनोहरोगन्धोऽस्य ॥ हृद्यश्वासौगन्धश्च ॥

हृद्यगन्धा । स्त्री॰ माल्यायाम् । जात्याम् ।

हृद्यगन्धि । न॰ स्थूलजीरके । हृद्योगन्धोऽस्य ॥

हृद्या । स्त्री॰ वृद्धिनामौषधौ ॥

हृद्रोग । पु॰ व्याधिप्रभेदे । हृदयपीडायाम । हृदयरोगे । अस्य विप्रकृष्टनिदानन्तु । अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः । सचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ सम्प्राप्तिपूर्वकं लक्षणन्तु । दूषयित्वारसं दोषाविगुणाहृदयं गताः । हृदिबाधांप्रकुर्वन्तिहृद्रोगं तं प्रचक्षते॰ इति । शुण्ठीसौवर्चलं हिङ्गु पीतं हृदयरोगनुत ॥ कामि । यथा ॥ हृद्रोगमाशुवहिर्नाशयिरेणधीरइति ॥ हृदयस्यरोग । वाशोकाध्यअरोगेष्वितिहृदादेश । कुमारार्थौ ॥

हृद्रोगवैरी । )
हृद्रोगारि । ) पु॰ अर्जुनवृक्षे ॥

हृल्लटक । पु॰ अठरे । इ॰ श॰ च॰ का ॥

हृल्लाटुक । पु॰ कोष्ठरोगे ॥

हृल्लास । पु॰ हिक्कायाम् ॥ हिक्काहिक्काचहृल्लासइतिहेमचन्द्र ॥ हिक्काभिधरोगे ॥ हृदयोत्कट्क्लेशिगर्भे ॥ हृदयादोषद्व्यथासहितापचपाजीविभिरपां हृल्लास इतितहृद ॥ हृदयस्यहृल्लेखयदण्लासेष्विति॰

१२८अ

हृल्लेख । पु० तर्के ॥ ज्ञाने ॥ हृदयलिखते । लिख० । कर्म्मण्यण् । हृदयस्य लेखः इति हृल्लेखः ॥

हृल्लेखा । स्त्री० मायाबीजे ॥ ओंकारे ॥ भुवनेश्वर्याम् ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरी इति देवीगीता । हृदि लेखा आगमिप्रा चाश्रितिरियपरा हृल्लेखा कथ्यते तस्मात् इति भुवनेश्वरी रहस्यम् ॥

हृषित । त्रि० विस्मिते ॥ प्रीते ॥ प्रहते ॥ हृष्टरोमणि ॥ प्रणते ॥ वर्मिते ॥ हर्षति स्म० हृष्यति स्म वा ॥ हृ तुष्टौ० हृषतुष्टौ वा ॥ हषेर्लोमसु विस्मितप्रतिघातेषु इति वा इट ॥

हृषी । पु० अग्नौ मिमयो ॥

हृषीकम । न० श्रोत्रादीन्द्रिये ॥ हृष्यत्यनेन । हृष् ० । अनिहृषिभ्यां कित् ईकन् ॥

हृषीकेश । पु० विष्णौ ॥ सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामित्वात् । सर्वांत्म कारणत्वेन । सर्वनिगूढाभिप्रायज्ञत्वात् ॥ हृषीकाणामिन्द्रियाणामीशोऽधिष्ठाता ॥ हृषीकाणि नियम्याऽहं यतः प्रत्यक्षतां गतः । हृषीकेशस्ततो नाम्ना ख्यातोऽहं सम्भवामि ।

हृषु । पुं० हर्षे ॥ सूर्ये ॥ चन्द्रे ॥ अग्नौ । राहौ । हृष्यति । हृषतुष्टौ । हर्षति वा हृषु अलीके । पृभिदिव्यधिगृधिधृषिहृषिभ्यः कु । शिष्टत्वात् । एष्वर्थेषु कुप्रत्ययः हृषुरिति कोविदितिमनोरमा ॥

हृष्ट । त्रि० जातहर्षे । पर्यायायथा । हृष्टमत्तस्तृप्त प्रह्लन्न प्रमुदित प्रीतइति । रोमाञ्चिते । अप्रतिहते । विस्मिते ॥ हर्षति स्म० हृष्यति स्म वा । हृषु० वा । क्त । हृषेर्लोमसु विस्मितप्रतिघातेषु इति वा इट् कत्वात् । यस्य विभाषेति नेट् ॥

हृष्टमानस । त्रि० सहर्षमानसे । हर्षमाणे । विकुर्वाणे । प्रमनसि ॥ हृष्टमानसं यस्य स ॥

हृष्टरोमा । त्रि० रोमाञ्चिते ॥ हृष्टानि रोमाणि यस्य स ॥

हृष्टि । स्त्री० आनन्दे । माने ॥

हृष्यत् । त्रि० रोमाञ्चिते ॥

हे । अ० सम्बोधने ॥ आह्वाने असूयादौ ॥ हिनोति । हिगतौ । विच् ॥ पादपूरणे ॥

हेका । स्त्री० हिक्कायाम् ॥ ड० चि० ॥

हेठ । पु० बाधायाम् । विहेठे ॥

हेडावुक्क । पु० अश्वविक्रयिणि । घोटकविक्रयकारिणि ॥

हेति । स्त्री० रवेरर्चिषि ॥ अस्त्रे ॥ वह्निज्वालायाम ॥ हिनोति

कृतस्ततोगच्छति हि० । जतियू तिजूतिसातिहेतिकीर्त्तयश्चेति क्तिन्नन्तानिपातिता । हन्ति० ह न्यतेऽनयावा । क्तिन् । जतियूती तिसाधु ॥

हेतु । पु० कारणे । बीजे । निमि त्ते । नियतपूर्वभाविनि । येन विनाय न्नभवतितत्स्मृतम् ॥ हिनो तिव्याप्नोतिकार्यम् । हिगतौ कमिमनिजनिगाभायाहिभ्यश्चेति तु ॥ फलसाधनयोग्ये पदार्थे ॥ हेतुलक्षणंतिगौतम उदाहरणसा धर्म्यात्साध्यसाधनहेतुस्तथावैधर्म्या त् ॥ ३४ ॥ पक्षसाध्यसाधनहेतुरि तिसामान्यलक्षणम् । साध्यसाध नसाध्यसिद्ध्यनुकूलज्ञापकत्वबो धकत्वार्थं तथापक्षसाध्यतावच्छे दकावच्छिन्नसाध्यान्वितज्ञापकत्वबो धक साध्यान्वितस्वार्थबोधकोऽव यवइतिफलितार्थः । तद्द्वैविध्य माह उदाहरणसाधर्म्यात् तथा वैधर्म्यादिति । साधर्म्यमन्वय० वैधर्म्यं व्यतिरेक । ताहशव्या प्तिरितिफलितार्थः । उदाहरण साधर्म्यम० उदाहरणबोध्यान्वय व्याप्तिस्तेऽन्वयीहेतुरितित्य उ दाहरणेतिष्ठार्थम् । तथाच ज्ञातान्वयव्याप्तिकहेतुबोधकोहेत्व वयव । अज्ञातव्यतिरेकव्याप्तिक हेतुबोधकोहेत्ववयव इतिफलि तार्थः । एवमप्रतीतान्वयव्याप्ति कहेतुबोधकोहेत्ववयवोव्यतिरेकी हेतु इत्यमेवप्रतीतान्वयव्यतिरेक व्याप्तिकहेतुबोधकोहेत्ववयवोऽन्व- यव्यतिरेकीत्यपिसूचितमितिवद्- न्ति । साधनं ॥

हेतुक । पु० कारणे ॥ सार्थेक ॥ त्रि० तत्सम्बन्धिनि ।

हेतुता । स्त्री० कारणतायाम् । हेतु त्वे ॥ सङ्गतिविशेषे । प्रत्यक्षप्रमा णं हेतुतासङ्गत ॥ हेतोर्भाव । तस्यभावस्त्वतलाविति तल् ॥

हेतुमान् । त्रि० व्यक्ते ॥ कारणवति युक्तियुक्ते । हेतुरस्त्यस्मिन्नस्यवामतु प फले ॥

हेतुशास्त्रम् । न० तर्कशास्त्र ।

हेतो । अ० निमित्तार्थे ।

हेत्वाभास । पु० हेतुदोषे ॥ सव्यभ विध । सव्यभिचारविरुद्धसत्प्रति पक्षासिद्धबाधितभेदात् । यथो क्त भाषापरिच्छेदे । अनैकान्तोवि रुद्धश्चाप्यसिद्ध प्रतिपक्षित । कालात्ययापदिष्टश्चहेत्वाभासास्तुप ञ्चधा । आद्य साधारणस्तुस्यात् असाधारणोऽपर । तथैवानु पसंहारीत्रिधानैकान्तिकोभवेत् । य. सपक्षेविपक्षेचभवेत्साधारणस्तु स । यस्तूभयस्माद्व्यावृत्त. सचा

साधारणोमत । तथैवानुपसंहारो केवलान्वयिपक्षक । स साध्यम तिनैवास्ति सविरुद्धउदाहृत ॥ आश्रयासिद्धिराद्यास्यात्स्वरूपासिद्धिरप्यथ । व्याप्यत्वासिद्धिरपराऽसिद्धिरतस्त्रिधा । पक्षाऽसिद्धिर्यत्रपक्षोभवेन्मणिमयोगिरिः कृदोद्भूव धूमत्वादत्रासिद्धिरथापरा ॥ व्याप्यत्वासिद्धिरपरानीलधूमादिकेभवेत् । विरुद्धयोः परामर्शहेत्वोः सत्प्रतिपक्षता ॥ साध्यशून्योयत्रपक्षस्त्वसौबाधउदाहृत । उत्पत्तिकालीनघटेगन्धादिर्यत्रसाध्यते । इति । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाहेत्वाभासइतिगौतमीयसूत्रम ॥ हेतुलक्षणरहिताहेतुवदाभासमानाहेत्वाभास ॥

हेम । पु० माषकपरिमाणे । हूवैदूर्य्यपरिभाषण ।

[हे]मकन्दल । पु० प्रवाले ॥

हेमकान्ति । स्त्री० दारुहरिद्रायाम् । त्रि० सुवर्णद्युतिमति ॥

हेमकार । पु० स्वर्णकारे । हेमकर्त्तरि ॥

हेमकिञ्जल्क । पु० नागकेसरे ॥

हेमकूट । पु हिमालयादुत्तरे० कुलाचलस्यदक्षिणे किम्पुरुषवर्षसीमापर्वते । दीर्घेकिम्पुरुषवर्षस्यमेर्यादागिरौ ॥ हेम कूटोऽद्रि ॥

हेमकेतकी । स्त्री०सुवर्णकेतक्याम् ॥ उष्णातिक्तरसाकफे या चक्षुष्या हेमकेतकी ॥

हेमकेलि । पु० वह्नौ । हृ० म० माला ॥

हेमकेश । पु० शिवे ।

हेमक्षीरी । स्त्री० सुवर्णक्षीर्य्याम् ॥ मधुवर्णरसक्षा । गौरादि ॥

हेमगन्धिनी । स्त्री० रेणुकाख्यगन्धद्रव्ये । इतिरत्नमाला ॥

हेमगौर । पु० । अशोकवृक्षे । किङ्किराते । त्रि० स्वर्णवद्गौरवर्णयुक्ते ॥

हेमज्वाल पु० वह्नौ । अग्नौ ।

हेमतारम् । न० अञ्जनविशेषे । नीलतुत्थे । मूषातुत्थे ।

हेमदुग्ध । पु० उदुम्बरवृक्षे ।

हेमदुग्धक । पु० उदुम्बरवृक्षे । यज्ञाङ्गे । हेमवर्णदुग्धमस्य । क ॥

हेमदुग्धा । स्त्री० स्वर्णक्षीर्य्याम् ।

हेमदुग्धी । पु० यज्ञाङ्गे । उदुम्बरे ॥

हेमदुग्धी । स्त्री० स्वर्णक्षीर्य्याम् ।

हेमा । पु० बुधग्रहे ॥

हेम । न० काञ्चने । स्वर्णे । अरुणोत्पलादिक यथा । पुरानिलाश्रमस्थानामसर्पीर्यानितानाम । पक्षीविशीक्यतामप्यलक्ष्मीसम्पन्नशोभना । कन्दर्पदर्पविध्वस्तचेतसा

जातवेदस । पतित यदरापृष्ठे रे
तस्तद्धेमतामगात् । कृतिमच्चापि
भवतितद्रसेन्द्रव्यधित । स्वर्णं सु
वर्णं कनकं हिरण्यं हेमहाटकं ॥
तपनीयं कलधौतमाङ्गेयगर्भं कास्ञ
नम् । चामीकरं शातकुम्भं तथाका
र्त्तस्वरत्नत्‌ ॥ जाम्बूनदं जातरू
पमहारजतमप्यपि । दाहेरक्तसित
छेदेनिकषेकुङ्कुमप्रभम ॥ तारशुल्वो
ज्झितंस्निग्धंकोमलंगुरुहेमसत् ॥ त
च्छ्वेतंकठिनंरूक्षंविवर्णंसमलंदलम्
॥ दाहेछेदेऽसितंश्वेतंकषेत्याज्यंल
घुस्फुटम् । इत्यादि । दल० देशतद्भृतिले.के
। स्फुटयद्घनाहृत ॥ स्फुटतिहि
शीतस्पर्शेपतेवा । हिमतीक्ष्णीव ।
अग्निन् ॥ धत्तूरे ॥ नागकेसरे ॥
हेमन्त । पु० ऋतुविशेषे । सह स
हस्ययोः । आग्रहायणपौषयोः ।
हन्तिवाकान्‌ ग्रेआन । हन्तेर्मुट्‌चे
तिभच्प्रत्यय । हन्तेर्हिं चेतिहि
रादेशेमुडागमेगुणश्च ॥
हेमन्तनाथ । पु० कपित्थे ॥
हेमपर्वत पु० सुमेरुगिरौ ॥
हेमपुष्पम् । न० चाम्पेये ॥ जपापुष्पे
॥ पु० चम्पकवृक्ष ॥ हेमवर्णपुष्प
यस्य ॥ राजवृक्षे ॥
हेमपुष्पक । पु० चम्पकवृक्षे । हेम
वर्णपुष्पमस्य ॥ लोध्रे ॥ अशोके ॥
हेमपुष्पिका । स्त्री० स्वर्णयूथिकाया
म् । पीतयूथिकायाम ॥ गणिका
यूथिकाम्बष्ठासापीताहेमपुष्पिका ॥
हेमवर्णपुष्पमस्याः । पाककर्णेति
ङीष । स्वार्थेकन । ह्रस्व ॥
हेमपुष्पी । स्त्री० स्वर्णयूथ्याम । सु
शल्याम ॥ स्वर्णुल्याम् ॥ कण्ट
कार्याम् ॥ इन्द्रवारुण्याम ॥ स्व
र्णजीवन्त्याम् ॥ माञ्जिष्ठायाम् ॥ हे
मवर्णपुष्पमस्याः । पाककर्णेतिङीष् ॥
हेमफला । स्त्री० स्वर्णकदल्याम ॥
हेममाला । स्त्री० यमपत्न्याम् ॥ स्वर्ण
स्रज ॥
हेममाली । पु० सूर्ये ॥ कार्त्तवीर्ये ॥
त्रि० हेममालायुक्ते ॥
हेमयूथिका । हेमयूथी । स्त्री० स्वर्णयूथिकायाम् ॥
हेमरागिणी । स्त्री० घर्षण्याम । ह
रिद्रायाम् ॥
हेमल । पुं० कलादे । स्वर्णकारे ॥
कृकलासे । सरटे ॥ शिलान्तरे ।
कषपाषाणे । कसौटी० इ० भा०
प्र० ॥
हेमलता । स्त्री० स्वर्णजीवन्त्याम ॥
हेमलम्ब । पु० वत्सरविशेषे ॥ त
त्फलं यथा । पीडान्ते सर्वशस्यानि
देशेदेशेषुचिन्तितै । हेमलम्बे प्रजा
सर्वा चौयर्भावसमाश्रय ॥ २१ ।
हेमवलस । न० मौक्तिके ॥
हेमशङ्ख । पु० विष्णौ ॥

हेमशिखा । स्त्री० स्वर्णक्षीर्य्याम् ॥

हेमसारम । न० तुत्थे । हृ० रसच न्द्रिका ॥

हेमसूत्रकम् । न० हारविशेषे ॥

हेमहस्तिरथ । पु० महादानविशेषे ॥

हेमा । स्त्री० अप्सरसांभेदे ॥ सुन्दर्यां नार्याम् ॥

हेमाङ्ग । पु० गरुडे ॥ परमेष्ठिनि ॥ सुमेरौ ॥ सिंहे ॥ चम्पके विष्णौ ॥ न० हेमवर्णशरीरे ॥ त्रि० तद्वति ॥ हैमेवाङ्गवपुर्यस्य ॥

हेमाद्रि । पु० सुरपर्वते । मेरौ ॥ हेम्नोऽद्रिः ॥ चिन्तामणिकामधेनु कल्पद्रुमनामकस्मृतिसङ्ग्रहकारकेच वियैराजविशेषे ॥

हेमाद्रिकरण । पु० स्वर्णक्षीर्याम ॥

हेमाह्व । ) पु० वनचम्पके ॥ चम्प
हेमाह्वय । )

के ॥ धत्तूरे ॥

हेमाह्वया । स्त्री० स्वर्णजीवन्त्याम् ॥ हेमचाह्वयोयस्या ॥

हेमाह्वा । स्त्री० हेमक्षीर्याम् । चोक्ते ॥ गुणायथा । हेमाह्व रोचनौतिक्ता मादिन्युत्क्लेदकारिणी । क्रमिकण्डूविषानाहकफपित्तास्रकुष्ठनुदिति ॥ स्वर्णजीवन्त्याम ॥

हेय । त्रि० त्याज्ये । हातव्ये ॥ पुरुषोऽईप्सितद्वयेयदुपयुक्तमविरोधितदुपादेयविपरीतन्तुहेयम् हा

तु शक्य । योहाक्० । अचोयत् ईद्यति । गुण ॥

हेर । त्रि० मुकुटप्रभेदे ॥ हरिद्रायाम् ॥ आसुर्यामायायाम ॥ हृ० कथित ॥

हेरम्ब । पु० विनायके एकदन्ते । लम्बोदरे । विघ्नराजे । गणेशे ॥ हे भक्तरे० रवेर्वाम्बिवसमीपेआरम्बते । रविशब्दे । योङ्गोपध । पृषो दरा । तत्पुरुषेकृतीत्यलुक । हेउ परिरम्बते० कृतिरामो ॥ महिषे ॥ शौर्यगर्विते । बुद्धविशेषे । हेरुके । त्रिकाण्डशेषे ।

हेरम्बजननी । स्त्री० दुर्गायाम् ।

हेरम्बहट्ट । पु० देशविशेषे ॥

हेरिक । पु० चरे ॥

हेरुक । पु० कामाख्यायांप्रसिद्धेशि वलिङ्गविशेषे । महाकालगणे ॥ बुद्धभेदे । त्रिकाण्डशेषे ।

हेलञ्जी । स्त्री० हिलमोचिकायाम् ॥

हेलनम । न० अवज्ञायाम । अवहेलने ॥ हेडृअनादरे । ल्युट् । खडयो रैक्यम ॥

हेला । स्त्री० अवज्ञायाम ॥ वरयोषितांविलासे । स्त्रीणांशृङ्गारभावजेक्रियाविशेषे ॥ आद्यावसूचकोहावोहेला ऽस्यैवानुभावनम् । अपिच । हाव एवभवेद्धेलाव्यक्त , शृङ्गारसूचका कृति ॥ सुरतेप्रौढिच्छायाम् ॥ यथा

स्य मधुरावद्धवर्चसद्दति ॥ वि० हेमन्तसम्बन्धिनि । हेमन्ते त्ये । हेमन्ते जात • भव • साधुर्वा । सर्वत्राण्चतलोपश्चेत्यण् ॥

हैमन्तम् । न० । पु० हेमन्तर्तौ ॥ वि० हेमन्तसम्बन्धिनि ॥ हेमन्तभवे ॥ सन्धिवेलेति० ऋतण् ॥

हैमन्तिकम । न० शालिधान्ये । षा मनधान० ष० गौ० भा० प्र० ॥

हैमवत । पु० विषप्रभेदे ॥ न० भारतवर्षे ॥ यथा । नाभ्नस्तु भारतवर्षं हिमाद्रेस्तद्दक्षिणं । तेन हैमवतनामपरिच्छिन्नं वसुमयेत् ॥ इलावृतसौमेरवसुमेरोः परितो स्थितम्ति ॥ त्रि० हिमवति जाते ॥

हैमवतवर्षम् । न० हैमवते । भारतवर्षे । यथा । एतद्धैमवतवर्षं भारतीयवसन्तति : । हेमकूटपरयन्नाम्नाकिम्पुरुषामतद्दति ॥

हैमवती । स्त्री० उमायाम् । काल्याम् । पार्वत्याम् । हिमवतोपत्यं स्त्री । हिमवतोभवा वा । अण् । ङीप् ॥ गङ्गायाम् ॥ हिमवत प्रभवतिप्रकाशते • तत्रप्रथम दृश्यतद्दतियावत् । प्रभवतीत्यण् ॥ स्वर्णक्षीर्याम् । पटुपर्ण्याम् । हिमावत्याम ॥ इय पीतक्षीरानागजिह्वाकाराभवति । यथा । हैमवर्णपयस्तस्याहिमवद्भूमिसम्भवा । सानागजिह्वाकारात

न्मूलेवाग्निजौषधमिति ॥ हरीतक्याम् । श्वेतवचायाम् । हिमवतिजाता • भवावा । तत्रजातइति • तत्रभवद्दति वा । अण् । क्षीरिण्याम् । रेणुकायाम् ॥ अतस्याम् ॥ कपिलद्राक्षायाम् ॥

हैमा । स्त्री० पीतयूथिकायाम् ॥

हैमी । स्त्री० पीतयूथिकायाम ॥ हैमम्याम् । स्वर्णकेतक्याम् । क्षीरिण्याम् । काञ्चनक्षीर्याम् । हिमाद्रिजायाम् ॥

हैयङ्गवीनम । न० एकाराभिपर्युषिता ह्युत्पन्ने • गोदोहविहुते । तस्य हैयङ्गवीनयत् • गोदोहव घृतमित्यमर । यथा । हविर्स्तसद्गृह्य तत्स्याद्धैयङ्गवीनकम । हैयङ्गवीनचक्षुष्यदीपनरुचिकृत्परम् । बलकारहृष्यशुष्क विशेषात्कफनाशनम् ॥ ह्यागोदोहविकार । हैयङ्गवीनसञ्ज्ञायामितिह्योगोदोहस्य हियङ्गुरादेशोविकारार्थेखश्चनिपात्यते ॥ सवनीते ॥

हैरण्यगर्भ । पु० स्वायम्भुवमनौ ॥ हिरण्यगर्भस्यापत्यम । अण् हिरण्यगर्भोपासके ॥

हैरिक । पु० चौरे ॥

हैहय । पु० कार्तवीर्ये एकवीरन्नृपे । हय्यापत्यम । स्त्रीभ्योढक् । पृषोदरादि । यथा । हेमत्वं नहेवा • नामैकदेशेननामग्रहणात् । हेमा सर्द्दकुर्वनहयतिगच्छतीतिहैहयोऽ

ह्रदालयेश्वर । पुं० ह्रदालयेश्वरम्रि वे ॥

ह्रदिनी । स्त्री० नद्याम् । सरिति ॥ ह्रदाः सन्त्यस्याम् । अतइनि । ङीप् ॥

ह्रसिमा । पु० ह्रस्वत्वे ॥ ह्रस्वभाव । पृथ्वादिभ्यइमनिच । स्थूलदू रेतिसाधु ॥

ह्रसिष्ठ । त्रि० अतिह्रस्वे । ह्रस्वतमे ॥ अयमेषामतिशयेनह्रस्व । इष्ठनि स्थूलदूरेतिसाधु ॥

ह्रसीयान् । त्रि० ह्रस्वतरे ॥ अयमन योरतिशयेनह्रस्व । ईयसुनिस्थूल दूरेतिसाधु ॥

ह्रस्व । पु० ह्रस्वके ॥ एकमात्रवर्णे ॥ न० परिमाणविशेषे ॥ यथा । अणुदीर्घंमहद्ध्रस्वमितितद्विशेषाः इति ॥ गौरसुवर्णशाके । पुष्प कासीसे ॥ त्रि० प्रकृतपुरुषपरिमा णात्० न्यूनमनुष्ये । खर्वे । वाम ने । मीना० कू० भा० प्र० ॥ क्षुद्र वस्तुमात्रे । वामने । न्यचे । नीचे । खर्वे ॥ ह्रसति० ह्रसतेर्वा । ह्र सशब्दे । बाहुलकात् । उल्वादि वा ।

ह्रस्वकुश । पु० श्वेतकुशे ॥

ह्रस्वगर्भ । पु० कुशे ॥

ह्रस्वगवेधुका । स्त्री० नागवलायाम् । काँगहीतिख्यातायाम ॥ गविभू मौएधते । एध० । बाहुलकादु । सज्ञायांकन् । ह्रस्वाचासौगवेधु काच ॥

ह्रस्वजम्बु । स्त्री० क्षुद्रजम्ब्वाम् ॥

ह्रस्वतण्डुल । पु० राजान्ने ॥

ह्रस्वदर्भ । पु० श्वेतकुशे ॥

ह्रस्वदा । स्त्री० शल्लक्याम् ॥ ह्रस्वत्वं जनिचयर्ता ॥

ह्रस्वपत्र । पु० गिरिजमधूकवृक्षे ॥

ह्रस्वपत्रिका । स्त्री० अश्वत्थ्याम ॥

ह्रस्वमूल । पुं० क्षुद्रमूलकर्ये । मुण्डी । ह्रस्वपर्णे । पीपरी ॥ गुणास्तु । मधु कटु कषायवस्थिमिरोरक्त देवजित् । मूर्च्छाभ्रमप्रलापघ्नोह्रस्व मूलोविशेषतइति ॥

ह्रस्वफल । पु० मधुनारिकेरे ॥

ह्रस्वफला । स्त्री० भूमिजम्ब्वाम् ॥

ह्रस्वमूल । पुं० रक्तेक्षौ ॥

ह्रस्वशाखाशिफ । पु० ह्रस्वशाखामूले । क्षुपे ॥ शाखाच० शिफामूलश्चतेशा खाशिफे । ह्रस्वेशाखाशिफेयस्य ॥

ह्रस्वा । स्त्री० खर्वायाम । वामन्याम् ॥ नागबलायाम । सूक्ष्मपर्ण्याम् ॥ भूमिजम्ब्वाम् ॥

ह्रस्वाग्नि । पुं० चित्रके । ह्रस्वाग्नौ ॥

ह्रस्वाङ्ग । पु० अष्टवर्गगतजीवकौष धौ । कूर्चशीर्षे ॥ ह्रस्वान्यङ्गान्यस्य ॥

ह्रस्वैरण्ड । पु० रक्तैरण्डे ॥

ह्राद । पुं० ध्वनितौ । शब्दितौ ॥ ह

न्दे ॥ हिरण्यकशिपो क्षमीर्यसि पुर्षे ॥

ह्रादनि । पु॰ गर्जितशब्दे ॥

ह्रादो । त्रि॰ सशब्दे ॥

ह्रादिनी । स्त्री॰ वज्रे ॥ ह्रादस्यवज्र म् । ह्रादअव्यक्तशब्दे । आवश्यकी णिनि । ह्राद स्फूर्जथुरस्यस्या हृतिवा । ह्रनि ॥ तडिति । विद्यु ति । ह्रादोऽव्यक्तशब्दोस्त्यस्या । ह्रनि । अव्यवहितोत्तरे त्यागिकाल यस्माहृतिषट्यावर्थे ॥ शल्लक्याम् । गजभक्ष्यायाम् । सुवहायाम ॥ भ द्याम् ॥ ह्लादयत्यवश्यम् । ह्लादी सुखित । आवश्यकीणिनि । रत्न यो रैक्यम ॥

ह्रास । पु॰ शब्दे । अभिलापे । ध्वनौ ॥ यथा । शब्दाभिलापौत्वभिधाऽ भिधानवाचकौध्वनि । ह्रास कु चरितत्वेतिमुद्रा क्षितक्षिकाऽग्रेष ॥ आरवे ॥ क्षये ॥ यथा । ह्रासवृ ह्रौअसततदिनराव्योर्यथाक्रमम् । स न्ध्यामुहूर्त्तमाख्यात ह्रासवृद्धौअसा समेति ॥

ह्रिवेरम् । न॰ हरिवेरे । ह्रीवेरे ॥ ह्र॰ ह्रि॰ व ॥

ह्री । स्त्री॰ लज्जायाम् । अकार्यप्रवृत्त्या रक्षोतत्पृतिबन्धिकायांधि । कालज्जाया म् ॥ ह्रीलज्जायाम् । सम्पदादित्वा त्क्विप ॥ पार्वत्याम् ॥

ह्रीका । पु॰ काकि ॥ नकुले ॥ सञ्चदे वे ॥ त्रि॰ लज्जिते ॥ जिह्रेति । ह्री ॰ । ह्रियोरश्चलोवेतिकम् ॥

ह्रीका । स्त्री॰ त्रपायाम् । लज्जायाम् ॥ टाप ॥ त्रासे ॥

ह्रीकु । पु॰ जतुनि ॥ त्रपुणि ॥ वा ले ॥ मार्जारे ॥ त्रि॰ अप्रशस्ते ॥ अप्रगल्भे ॥ सलज्जे । लज्जिते ॥ जि ह्रेति । ह्री॰ । ह्रिय कुकारश्चलो वा । शिस्वाङ्गगुण ॥

ह्रीकू । स्त्री॰ भुवि ।

ह्रीजित । त्रि॰ सलज्जे । लज्जाशी ले । लज्जिते ॥ ह्रियाजित ॥

ह्रीण । )
ह्रीत । ) त्रि॰ लज्जिते । सपत्रे ॥

अह्रैषीत् । ह्री॰ । त ॥ नुदविदो न्दत्रा घ्राह्रीभ्योन्यतरस्यामितिनिष्ठा तस्यनोवा ॥

ह्रीता । स्त्री॰ लज्जितायाम् ॥ ह्रिय कर्त्तरित्त ॥

ह्रीवेरम् । न॰ सुगन्धिवाला॰ इ॰ भा॰ प्र॰ गन्धवस्तुनि । तत्पर्यायायथा । वा लंह्रीवेरवर्हिष्ठोदीच्य केशाम्बुनामचे ति ॥ गुणास्तु । ह्रीवेरहृद्धि ह्लास तृष्णातीसारनाशनमितिराजवल्लभ ॥ ह्रीयुक्तवेरमस्य ॥

ह्रेपित । त्रि॰ हियलज्जाप्रापिते ॥ जि ह्रैतिअर्थंतात्कर्म णित्त । अर्त्तिह्री व्यादिनापुगागम ॥ *

ह्रेषा स्त्री० अश्वशब्दे । ह्रेषायाम्
। ह्रेषणम् । ह्रेषृशब्दे । गुरोश्चे
त्य । टाप् ।
ह्लाद । पु० आह्लादे । प्रमोदे ॥
ह्लादक । वि० ह्लादेकुशले ॥ आख्या
षादिभ्य कन् ॥
ह्लादि । त्रि० । आह्लादी ॥
ह्लादी । त्रि० । ह्लादविशिष्टे ।
ह्लादिनी । स्त्री० शल्लक्याम् । गजभ
क्ष्यायाम् । ह्लादयत्यवश्यम् । ह्ला
दिसुखेच । आवश्यकेतिणिनि ॥
शक्तिविशेषे । यथा । ह्लादिन्या स
म्विदाश्लिष्ट सच्चिदानन्द ईश्वर
स्वाविद्यासंवृतोजीव संक्लेशनि
कराकर ॥
ह्रीक । पु० नकुले ॥ सहदेवे ॥
त्रि० लज्जिते । सत्रपे । जिह्रेति
। ह्री० । ह्रियेरकलोवेतिकन् ॥
ह्रीका । स्त्री० त्रपायाम् । लज्जाया
म् ॥ जिह्रेति । ह्रीलज्जायाम् । ह्रि
योरकलोवेतिकन् । टाप् ॥
ह्रीकु । पु० जतुनि ॥ त्रपुणि ॥ ना
ले ॥ मार्जारे । त्रि० लज्जिते ॥
अप्रशस्ते ॥ अप्रगल्भे ॥ जिह्रेति
। ह्री० । ह्रिय कुकरलोवेति
कुक् ॥
ह्रीकू । स्त्री० धरित्र्याम् । भूमौ ॥
ह्रेषा । स्त्री० ह्रेषायाम् ।
ह्वरणम् । न० कौटिल्ये ॥ प्रसौरूप्य



मिवसर्वजीवभुवनेषु विश्वंयदस्मानत
प्रोन्मीलत्यद्यतनमीलिततरांयज्ज्ञा
नत सर्वतः ॥ शान्तं निष्कलम
द्वितीयममलंसच्चिद्घनंव्यापकंस्वा
त्मानंसकलाश्रयंश्रुतिशिरःसारंस
दोपास्महे ॥ १ श्रीमच्चिद्घनदा
त्मकहरिहरानन्दादिनाथनिजस्मा
रस्मारमजस्रमेकमतुलं संसारपाश
च्छिदम् ॥ नत्वातच्चरणाम्बुजन्मसु
खपूर्वानन्दनाथोमुदे । साधूनांसु
धियाचकारसुखदंशब्दार्थचिन्तामणि
म् ॥ २ ॥ अब्धिच्छन्दधरामितवर्षे
चैत्राङ्कितोनाम्निमासिसितसप्तम्यां
शनौसमाप्तिंगतोग्रन्थः ॥ श्रीसु
खानन्दनाथस्यकृतिरेषाजगद्धिता
प्रोत्थंभूयाज्जगत्यांभवानीविश्वना
थयोः ॥ इतिश्रीहरिहरानन्दनाथ
भारतीशिष्यश्रीमदवधूतश्रीसुखान
न्दनाथसङ्कलितः शब्दार्थचिन्ताम
णिः समाप्तः ।

श्रावणकृष्णसप्तम्यांद्विवेदाङ्कश
शाङ्कमिते वैक्रमेऽब्दे शब्दार्थचिन्ता
मणिकोश पण्डितश्रीधरशास्त्र
पैथिणोधिकारेणोदयपुरेमुद्रित

ओ

संवत्

१९१७ ग्रन्थपूर्ते

( ❋—❋‡❋‡❋—❋ )

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | कुक्षि | पङ्क्ति | अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | कुक्षि | पङ्क्ति. |
|---|---|---|---|---|---|---|---|---|---|
| ऽऽ लुक् | ०० ०० | १ | प्र० | १६ | य। था | तथाशब्दस्तथशब्दो | ८ | द्वि० | २२ |
| त | यत्प्रययकर्दम | १ | द्वि० | १६ | ० भा | यथार्थानुभव।पु० | ९ | प्र० | २५ |
| च | वटहर्षे | १ | ० | १७ | थ | अर्थगतं | १० | द्वि० | २४ |
| य | दृश्यते | २ | ० | १४ | न | असाधून् | ११ | प्र० | २३ |
| प | पा।कृत्या० | ३ | प्र० | १४ | ऽऽ असाधून् | ० ० ० ० | ११ | ० | २४ |
| र्ष | विशेषे | ३ | ० | १५ | च । य | माधुर्येदचे तियमा | १२ | द्वि० | १८ |
| पू | अतिपूर्वपि० | ३ | ० | २२ | पि पि | प्रहरमयिनचिर मयि | १३ | प्र० | १४ |
| सु | मखे | ३ | ० | २६ | ऽ मिश्रोश्रो | अजिरमिश्रोऽभ्य | १४ | द्वि० | १० |
| ष्टा | ज्योतिष्टोमा० | ३ | द्वि० | १९ | ते | नृपतो | १४ | ० | २२ |
| व्ह | जुह्वति | ३ | ० | २८ | ये। | यापो | १४ | ० | २९ |
| ऽ विषच | परिषचति | ४ | प्र० | १२ | स्य | स्तलभकीर्त्तित | १५ | प्र | १० |
| द्रौ | शूद्रासु | ४ | ० | २४ | र्यो | स्थर्यौ।लकरोगुरु | १५ | ० | १४ |
| ० ष्टा | यज्ञश्रेष्ठा । स्तो० | ४ | द्वि० | २५ | रो | स्थैर्यकारोच | १५ | ० | १६ |
| यहो | अग्निजिह्वोद्भ रामा | ५ | प्र० | १८ | यो | यौति | १५ | ० | २९ |
| घा | मखोघोर | ५ | ० | २४ | न्हि | वह्निदीपन | १५ | द्वि० | २१ |
| ष्या | शुष्याप० | ५ | द्वि० | ५ | प्र च्या | चौराद०भो०प्र० ९ च्चारे | १५ | ० | २५ |
| षि | ब्रोहीन् | ५ | ० | १५ | प | यशान्याम् | १५ | ० | २९ |
| स्फय | स्फ्रयकपालादि० | ५ | | २६ | वह | जुर्णाह्वये | १६ | ० | ५ |
| स्फय | स्फ्रयचकपालानि | ५ | ० | २७ | ष्वि | पुष्पिकायाम् | १६ | ० | ६ |
| हुं त्यु | तत्कामोहंलोत्युपकल्प | ६ | प्र | ९ | स्य | यवनस्य | १६ | ० | ११ |
| त्वर्व | सुयकोर्ध्वनिप | ६ | द्वि० | १४ | स्या | फलान्यस्य० | १६ | ० | १८ |
| न् - न् | महदेवान्नमाभि० | ७ | प्र० | १ | ड | ढक्कायाम् | १८ | प्र० | ९ |
| ष्य | हविर्ष्यायो० | ७ | द्वि० | १८ | ष्ठे | विशिष्टे | १८ | द्वि० | १५ |
| स्व | खञ्जनरती | ८ | प्र० | ३ | | | | | |

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति | अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति |
|---|---|---|---|---|---|---|---|---|---|
| शे | अक्ष पर्यायोष्मा | ४८६ | द्वि० | ३ | या य | नित्यत्वादुत्पत्ति | ५११ | ० | १४ |
| ग | चापमयोग | ४८७ | ० | ८ | प | चामयाक्षे | ५१२ | प्र० | २ |
| २ १ इरि | माख्यापयरहितरो | ४८८ | प्र० | १ | ति क | तिर्यक्त्वजनित | ५१२ | ० | ७ |
| च | मङ्कमस्येतिवा | ४८८ | द्वि० | १७ | आ | तथाहचर्या | ५१४ | ० | १४ |
| ९ वयति | मरडाब्जोवतिभेमय | ५०० | प्र० | ८ | य | मठरादिषु | ५१४ | द्वि० | ३ |
| थ्य | सुथ्य | ५०० | ० | २९ | ष्टो | यष्ठोगुणक्रिया | ५१४ | द्वि० | ४ |
| पुष्पा | पुष्पामाम० | ५०० | द्वि० | २४ | ब्द | मब्दागुमासम० | ५१४ | ० | १४ |
| मो | चिचिपोरमती ० | ५०१ | ० | ७ | मो | णोमि | ५४१ | ० | २४ |
| ७ ॥ मम | ॥ मङ्गा | ५०१ | ० | १३ | ष्टा | निष्ठायाम् | ५१५ | ० | ४ |
| ० चो | अर्थि । चो० | ५०१ | ० | १८ | श्य | माश्यति | ५१६ | ० | १२ |
| - पे | मध्यस्यपुरुपे | ५०२ | प्र० | २१ | ० ब | मब्धु क । पु० | ५१७ | ० | ३ |
| अ | आपके ॥ | ५०२ | द्वि० | २३ | या | कर्णे युक्ता | ५१८ | ० | २५ |
| थ | प्राकाररथार्थे | ५०३ | ० | ३ | त्त | सेयातके | ५१८ | ० | २७ |
| अ | गलरोगविशेषे | ५०३ | ० | २८ | + म | छगम् | ५१९ | द्वि० | १३ |
| ०न्द | मतन्ब्द । पु० | ५०४ | प्र० | १ | प | यकादेश | ५१९ | ० | १७ |
| चद | निर्मलदोपक | ५०४ | ० | १२ | क्ष | मातिकूलस्य | ५२० | प्र० | २३ |
| ० ) | मतधा ]च० | ५०४ |  | १६ | रि | सम्यगारविस्फोट | ५२१ | ० | १२ |
| - स्थो | पयस्थ | ५०४ | द्वि० | ४ | स्ता | अस्ताद्विध० | ५२२ | द्वि० | १५ |
| श्रुण | लघुतोचर्षा | ५०६ | ० | ६ | य | मन्वयार्थे ष्टा० | ५२३ | प्र० | २४ |
| जि त्वा | र जितत्वात् | ५०७ | प्र० | १८ | त्त | भेदाकरसि कल्प० | ५२३ | द्वि० | २३ |
| दे च्छ | देमच्छन्दे | ५०७ | द्वि० | ४ | ।१॥ | ॥ ११ ॥ | ५२३ | ० | २४ |
| ध्या | मतृन्यासेति | ५०७ | ० | १३ | २ १ रस | सरपत० | ५२५ | प्र० | ५ |
| द्रू | द्रुन्द्र | ५०९ | ० | २ | २ १ रपू | कपूर्रमरिचैश्च | ५२५ | ० | ७ |
| स्व | निर्भर्त्सने | ५१० |  | ५ | लिखि ऽ दृ आभा | ० ० ० ० | ५२६ | ० | २६ २ |

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तभ | पङ्क्ति | अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तभ | पङ्क्ति |
|---|---|---|---|---|---|---|---|---|---|
| श | सा श्चि | ९२४ | द्वि० | १० | ष्क | द्वकारी | ९३३ | ० | ११ |
| ० स्तो | स्तो पिकम् । न० | ९२४ | ० | २५ | भो | मोच | ९३३ | ० | १८ |
| य | अस्युक्थामिदे | ९२५ | प्र | १५ | द्द | सन्द ग्रपतिना० | ९३३ | द्वि० | ९ |
| ध | निमित्त | ९२६ | ० | ६ | स्थ | व्युत्पत्था | ९३४ | प्र० | १ |
| च्चि का। | किञ्चित्कार्थं | ९२६ | द्वि० | २७ | प | सवर्गामी | ९३४ | ० | १० |
| हि | शुद्धि स्याद्योति० | ९२७ | ० | १५ | जि | अष्टाशीति | ९३४ | ० | १३ |
| ङ्ग | मिङ्गे० | ९२७ | ० | २४ | मारस्को | भास्करो | ९३४ | द्वि० | ३ |
| ० पु०सो | ऽ स्त्रोपुसो ।पु० | ९२७ | ० | १७ | ० ना | स्याना।षि० | ९३५ | ० | १३ |
| ० | स्त्रोप्रसा।स्त्री० | ९२८ | प्र० | ११ | । | स्यानभवे | ९३४ | ० | १९ |
| था | तथापि | ९२८ | ० | १२ | तै | यत्ते | ९३४ | ० | २२ |
| ग्ट | विनिगडतारिपु० | ९२८ | ० | १८ | सु | मनुष्या | ९३५ | प्र० | ९ |
| त | सर्वतो | ९२८ | ० | २२ | थ्ये | सामर्थ्ये | ९३५ | ० | १४ |
| ले | लोकपतिना | ९२८ | ० | २६ | धो | क्रोधीत्वाच्चो | ९३ | ० | १८ |
| स्त्रा।थ्या | ग्रन्थाश्च मुखतोमिथ्य | ९२८ | द्वि | १२ | मा | स्थायिभावः | ९३५ | प्र० | १९ |
| द्द | दुष्कृतान्यपि० | ९२८ | ० | १५ | य | यशोप० | ९३५ | ० | २१ |
| प | पूजिता | ९२८ | ० | १७ | या | पश्चादिस्था० | ९३५ | ० | २६ |
| न्त | वेद्यन्ते | ९२८ | ० | २४ | स्य | स्याक्रोपाकस्य० | ९३५ | द्वि० | १३ |
| श्च | श्रोभाश्चमिती | ९२९ | प्र० | २० | श | पश्चात् | ९३५ | ० | २० |
| ऽ प्रविशी | विशेषशेषा० | ९२९ | ० | २९ | ति | मितीकारान्ता० | ९३६ | ० | १३ |
| र्ण | यत्र मिदोष० | ९२९ | द्वि० | २९ | श्थि | चिरस्थायि | ९३७ | प्र० | २९ |
| ० सु | स्नगु।न० | ९३० | ० | ५ | ० स्त्री | स्थिरप्रथ्योपु० | ९३७ | द्वि० | २५ |
| थि | जितश्रम | ९३१ | प्र० | १६ | ० ष्ट | [illegible] | ९३८ | प्र० | १५ |
| यु | तिष्ठतेर्युक् | ९३२ | ० | १५ | स्य | [illegible] | ९३८ | ० | १९ |
| भी | भयमीषामति० | ९३२ | ० | १९ | क | कोपीवे | ९३९ | द्वि० | १९ |